# III Aitareyabrāhmana

## 1 Schopfung der drei Vyāhrti (5, 32)

प्रजापतिरकामयत प्रजायेय भूयान्स्यामिति । स तपो ऽतप्यत । स तपस्तप्त्वेमाँल्लोकानसृजत पृथिवीमन्तरिक्ष दिवम् । ताँल्लोकानभ्यतपत् । तेभ्यो ऽभितप्तेभ्यस्त्रीणि ज्योतींष्यजायन्त । अग्निरेव पृथिव्या अजायत । वायुरन्तरिक्षात् । आदित्यो दिव । तानि ज्योतींष्यभ्यतपत् । तेभ्यो ऽभितप्तेभ्यस्त्रयो वेदा अजायन्त । ऋग्वेद एवाग्नेरजायत । यजुर्वेदो वायो । सामवेद आदित्यात् । तान्वेदानभ्यतपत् । तेभ्यो ऽभितप्तेभ्यस्त्रीणि शुक्राण्यजायन्त । भूरित्येव ऋग्वेदादजायत । भुव इति यजुर्वेदात् । स्वरिति सामवेदात् । तानि शुक्राण्यभ्यतपत् । तेभ्यो ऽभितप्तेभ्यस्त्रयो वर्णा अजायन्त । अकार उकारो मकार इति । तानेकधा समभरत् । तदेतदो३मिति । तस्मादोमोमिति प्रणौति । ओमिति वै स्वर्गो लोक । ओमित्यसौ यो ऽसौ तपति ।

स प्रजापतिर्यज्ञमतनुत । तमाहरत् । तेनायजत । स ऋचैव हौत्रमकरोत् । यजुषाध्वर्यवम् । साम्नोद्गीथम् । यदेतत्त्रय्यै विद्यायै शुक्र तेन ब्रह्मत्वमकरोत् । स प्रजापतिर्यज्ञ देवेभ्य संप्रायच्छत् । ते देवा यज्ञमतन्वत । तमाहरन्त । तेनायजन्त । त ऋचैव हौत्रमकुर्वन् । यजुषाध्वर्यवम् । साम्नोद्गीथम् । यदेवैतत्त्रय्यै विद्यायै शुक्र तेन ब्रह्मत्वमकुर्वन् । ते देवा अब्रुवन्प्रजापतिम् । यदि नो यज्ञ ऋक्त आर्ति स्याद्यदि यजुष्टो यदि सामतो यद्यविज्ञाता सर्वव्यापद्वा का प्रायश्चित्तिरिति । स प्रजापतिरब्रवीद्देवान् । यदि वो यज्ञ ऋक्त आर्तिर्भवति भूरिति गार्हपत्ये जुहवाथ । यदि यजुष्टो भुव इत्याग्नीध्रीये ऽन्वाहार्यपचने वा हविर्यज्ञेषु । यदि सामत स्वरित्याहवनीये । यद्यविज्ञाता सर्वव्यापद्वा भूर्भुव स्वरिति सर्वा अनुद्रुत्याहवनीय एव जुहवाथेति । एतानि ह वै वेदानामन्त श्लेषणानि यदेता व्याहृतय । तद्यथात्मनात्मानं संदध्यात् । यथा पर्वणा पर्व यथा श्लेष्मणा चर्मण्यं वान्यद्वा विश्लिष्टं संश्लेषयेत् । एवमेवैताभिर्यज्ञस्य विश्लिष्टं संदधाति । सैषा सर्वप्रायश्चित्तिर्यदेता व्याहृतय । तस्मादेषैव यज्ञे प्रायश्चित्ति कर्तव्या ।

---

## 2 Vom Schlangendamon Arbuda (6 1)

देवा ह वै सर्वचरौ सत्त्रं निषेदु । ते ह पाप्मानं नापजघ्निरे । तान्होवाचार्बुद काद्रवेय सर्पऋषिर्मन्त्रकृत् । एका वै वो होत्राकृता । तां वो ऽहं करवाणि । अथ पाप्मानमपहनिष्यध्व इति । ते ह तथेत्यूचु ।

तेषां ह स्म स मध्यंदिनेमध्यंदिन एवोपोदासर्पन्ग्राव्णो ऽभिष्टौति । तस्मान्मध्यंदिनेमध्यंदिन एव ग्राव्णो ऽभिष्टुवन्ति तदनुकृति । स ह स्म येनोपोदासर्पत्तद्धाप्येतर्ह्यर्बुदोदासर्पणी नाम प्रपदस्ति । तान्ह राजा मदया चकार । ते होचु । आशीविषो वै नो राजानमवेक्षते । हन्तास्योष्णीषेणाक्ष्यावपिनह्यामेति । तथेति । तस्य होष्णीषेणाक्ष्यावपिनेहु । तस्मादुष्णीषमेव पर्यस्य ग्राव्णो ऽभिष्टुवन्ति तदनुकृति । तान्ह राजा मदयामेव चकार । ते होचु । स्वेन वै नो मन्त्रेण ग्राव्णो ऽभिष्टौतीति । हन्तास्यान्याभिर्ऋग्भिर्मन्त्रमापृणचामेति । तथेति । तस्य हान्याभिर्ऋग्भिर्मन्त्रमापपृचु । ततो हैनान्न मदया चकार । तद्यदस्यान्याभिर्ऋग्भिर्मन्त्रमापृञ्चन्ति शान्त्या एव । ते ह पाप्मानमपजघ्निरे । तेषामन्वपहति सर्पा पाप्मानमपजघ्निरे । त एते ऽपहतपाप्मानो हित्वा पूर्वां जीर्णां त्वच नवयैव प्रयन्ति । अप पाप्मानं हते य एवं वेद ।

---

## 3 Agni als Hotar der Āditya und Angiras (6, 34)

आदित्याश्च ह वा अङ्गिरसश्च स्वर्गे लोके ऽस्पर्धन्त । वय पूर्वं एष्यामो वयमिति । ते हाङ्गिरस पूर्वे श्वसुत्यां स्वर्गस्य लोकस्य ददृशु । ते ऽग्नि प्रजिघ्यु । अङ्गिरसां वा एको ऽग्नि । परेहि । आदित्येभ्य श्वसुत्यां स्वर्गस्य लोकस्य प्रब्रूहीति । ते हादित्या अग्निमेव दृष्ट्वा सद्यसुत्यां स्वर्गस्य लोकस्य ददृशु । तानेत्याब्रवीत् । श्वसुत्यां व स्वर्गस्य लोकस्य प्रब्रूम इति । ते होचु । अथ वयं तुभ्यं सद्यसुत्यां स्वर्गस्य लोकस्य प्रब्रूम । त्वयैव वयं होत्रा स्वर्गं लोकमेष्याम इति । स तथेत्युक्त्वा प्रत्युक्त पुनराजगाम । ते होचु । प्रावोचा३ इति । प्रावोचमिति होवाच । अथो मे प्रतिप्रावोचन्निति । नो हि न प्रत्यश्रौषा३ इति । प्रति वा अश्रौषमिति होवाच । यशसा वा एषो ऽभ्येति य आर्त्विज्येन । तं य प्रतिरुन्धेद्यश स प्रतिरुन्ध्यात् । तस्मान्न प्रत्यरौत्सीति । यदि त्वस्मादपोज्जिगांसेद्यज्ञेनास्मादपोदियात् । यदि त्वयास्य स्वयमपोदितं तस्मात् ।

---

## 4 Die Geschichte von Śunaḥśepa (7, 13 ff)

हरिश्चन्द्रो ह वैधस ऐक्ष्वाको राजापुत्र आस । तस्य ह शतं जाया बभूवु । तासु पुत्रं न लेभे । तस्य ह पर्वतनारदौ गृह ऊषतु । स ह नारदं पप्रच्छ ।

यन्न्विमं पुत्रमिच्छन्ति ये विजानन्ति ये च न ।
किं स्वित्पुत्रेण विन्दते तन्म आचक्ष्व नारद ॥ १ ॥

इति । स एकया पृष्टो दशभि प्रत्युवाच ।

ऋणमस्मिन्सनयत्यमृतत्व च गच्छति ।
पिता पुत्रस्य जातस्य पश्येच्चेज्जीवतो मुखम् ॥ १ ॥
यावन्त पृथिव्या भोगा यावन्तो जातवेदसि ।
यावन्तो अप्सु प्राणिना भूयान्पुत्रे पितुस्तत ॥ २ ॥
शश्वत्पुत्रेण पितरो ऽत्यायन्बहुल तम ।
आत्मा हि जज्ञ आत्मन स इरावत्यतितारिणी ॥ ३ ॥
किं नु मलं किमजिनं किमु श्मश्रूणि किं तप ।
पुत्र ब्रह्माण इच्छध्व स वै लोको ऽवदावद ॥ ४ ॥
अन्न ह प्राण शरण ह वासो रूप हिरण्य पशवो विवाहा ।
सखा ह जाया कृपण ह दुहिता ज्योतिर्ह पुत्र परमे व्योमन् ॥ ५ ॥
पतिर्जाया प्रविशति गर्भो भूत्वा स मातरम् ।
तस्या पुनर्नवो भूत्वा दशमे मासि जायते ॥ ६ ॥
तज्जाया जाया भवति यदस्या जायते पुन ।
आभूतिरेषा भूतिर्बीजमेतन्निधीयते ॥ ७ ॥
देवाश्चैतामृषयश्च तेज समभरन्महत् ।
देवा मनुष्यानब्रुवन्नेषा वो जननी पुन ॥ ८ ॥
नापुत्रस्य लोको ऽस्तीति तत्सर्वे पशवो विदु ।
तस्मात्तु पुत्रो मातर स्वसार चाधिरोहति ॥ ९ ॥
एष पन्था उरुगाय सुशेवो य पुत्रिण आक्रमन्ते विशोका ।
त पश्यन्ति पशवो वयासि च तस्मात्ते मात्रापि मिथुनीभवन्ति ॥ १० ॥

इति हास्मा आख्याय ॥ १३ ॥

अथैनमुवाच । वरुण राजानमुपधाव । पुत्रो मे जायतां तेन त्वा यजा इति । तथेति । स वरुण राजानमुपससार । पुत्रो मे जायतां तेन त्वा यजा इति । तथेति । तस्य ह पुत्रो जज्ञे रोहितो नाम । तं होवाचाजनि वै ते पुत्रो यजस्व मानेनेति । स होवाच । यदा वै पशुर्निर्दशो भवत्यथ स मेध्यो भवति । निर्दशो न्वस्त्वथ त्वा यजा इति । तथेति । स ह निर्दश आस । तं होवाच । निर्दशो न्वभूद्यजस्व मानेनेति । स होवाच । यदा वै पशोर्दन्ता जायन्ते ऽथ स मेध्यो भवति । दन्ता न्वस्य जायन्तामथ त्वा यजा इति । तथेति । तस्य ह दन्ता जज्ञिरे । तं होवाचाज्ञत वा अस्य दन्ता यजस्व मानेनेति । स होवाच । यदा वै पशोर्दन्ता

पद्यन्ते ऽथ स मेध्यो भवति । दन्ता न्वस्य पद्यन्तामथ त्वा यजा इति । तथेति । तस्य ह दन्ता पेदिरे । तं होवाचापत्सत वा अस्य दन्ता यजस्व मानेनेति । स होवाच । यदा वै पशोर्दन्ताः पुनर्जायन्ते ऽथ स मेध्यो भवति । दन्ता न्वस्य पुनर्जायन्तामथ त्वा यजा इति । तथेति । तस्य ह दन्ताः पुनर्जज्ञिरे । तं होवाचाज्ञत वा अस्य पुनर्दन्ता यजस्व मानेनेति । स होवाच । यदा वै क्षत्रियः सांनाहुको भवत्यथ स मेध्यो भवति । संनाहं नु प्राप्नोत्वथ त्वा यजा इति । तथेति । स ह संनाहं प्रापत् । तं होवाच । संनाहं नु प्राप्नोद्यजस्व मानेनेति । स तथेत्युक्त्वा पुत्रमामन्त्रयामास । ततायं वै मह्यं त्वामददात् । हन्त त्वयाहमिमं यजा इति । स ह नेत्युक्त्वा धनुरादायारण्यमपातस्थौ । स संवत्सरमरण्ये चचार ॥ १४ ॥

अथ हैक्ष्वाकं वरुणो जग्राह । तस्य होदरं जज्ञे । तदु ह रोहितः शुश्राव । सो ऽरण्याद्ग्राममेयाय । तमिन्द्रः पुरुषरूपेण पर्येत्योवाच ।

नाना श्रान्ताय श्रीरस्तीति रोहित शुश्रुम ।
पापो नृषद्वरो जन इन्द्र इच्चरतः सखा ॥

चरैवेति चरैवेति वै मा ब्राह्मणो ऽवोचत् । इति ह द्वितीयं संवत्सरमरण्ये चचार । सो ऽरण्याद्ग्राममेयाय । तमिन्द्रः पुरुषरूपेण पर्येत्योवाच ।

पुष्पिण्यौ चरतो जङ्घे भूष्णुरात्मा फलग्रहिः ।
शेरे ऽस्य सर्वे पाप्मानः श्रमेण प्रपथे हताः ॥

चरैवेति चरैवेति वै मा ब्राह्मणो ऽवोचत् । इति ह तृतीयं संवत्सरमरण्ये चचार । सो ऽरण्याद्ग्राममेयाय । तमिन्द्रः पुरुषरूपेण पर्येत्योवाच ।

आस्ते भग आसीनस्योर्ध्वस्तिष्ठति तिष्ठतः ।
शेते निपद्यमानस्य चराति चरतो भगः ॥

चरैवेति चरैवेति वै मा ब्राह्मणो ऽवोचत् । इति ह चतुर्थं संवत्सरमरण्ये चचार । सो ऽरण्याद्ग्राममेयाय । तमिन्द्रः पुरुषरूपेण पर्येत्योवाच ।

कलिः शयानो भवति संजिहानस्तु द्वापरः ।
उत्तिष्ठंस्त्रेता भवति कृतं संपद्यते चरन् ॥

चरैवेति चरैवेति वै मा ब्राह्मणो ऽवोचत् । इति ह पञ्चमं संवत्सरमरण्ये चचार । सो ऽरण्याद्ग्राममेयाय । तमिन्द्रः पुरुषरूपेण पर्येत्योवाच ।

चरन्वै मधु विन्दति चरन्स्वादुमुदुम्बरम् ।
सूर्यस्य पश्य श्रेमाणं यो न तन्द्रयते चरन् ॥

चरैवेति चरैवेति वै मा ब्राह्मणो ऽवोचत् । इति ह षष्ठं संवत्सरमरण्ये चचार । सो ऽजीगर्तं सौयवसिमृषिमशनया परीतमरण्य उपेयाय । तस्य

ह त्रय पुत्रा आसु शुनःपुच्छ शुनःशेप शुनोलाङ्गूल इति । तं होवाच । ऋषे ऽहं ते शतं ददामि । अहमेषामेकेनात्मानं निष्क्रीणा इति । स ज्येष्ठ पुत्र निगृह्णान उवाच । न न्विममिति । नो एवेममिति कनिष्ठं माता । तौ ह मध्यमे सपादयां चक्रतु शुनःशेपे । तस्य ह शतं दत्त्वा स तमादाय सो ऽरण्याद्ग्राममेयाय । स पितरमेत्योवाच । तत हन्ताहमनेनात्मानं निष्क्रीणा इति । स वरुण राजानमुपससारानेन त्वा यजा इति । तथेति । भूयान्वै ब्राह्मण क्षत्रियादिति वरुण उवाच । तस्मा एतं राजसूयं यज्ञक्रतु प्रोवाच । तमेतमभिषेचनीये पुरुष पशुमालेभे ॥ १५ ॥

तस्य ह विश्वामित्रो होतासीज्जमदग्निरध्वर्युर्वसिष्ठो ब्रह्मायास्य उद्गाता । तस्मा उपाकृताय नियोक्तारं न विविदु । स होवाचाजीगर्त सौयवसिर्मह्यमपरं शतं दत्ताहमेनं नियोक्ष्यामीति । तस्मा अपर शतं ददु । तं स नियुयोज । तस्मा उपाकृताय नियुक्तायाप्रीताय पर्यग्निकृताय विशसितार न विविदु । स होवाचाजीगर्त सौयवसि । मह्यमपरं शत दत्ताहमेनं विशसिष्यामीति । तस्मा अपर शतं ददु । सो ऽसिं निशान एयाय । अथ ह शुनःशेप ईक्षा चक्रे ऽमानुषमिव वै मा विशसिष्यन्ति हन्ताहं देवता उपधावानीति । स प्रजापतिमेव प्रथमं देवतानामुपससार कस्य नूनं कतमस्यामृतानामित्येतयर्चा (१, २४, १) । त प्रजापतिरुवाच । अग्निर्वै देवानां नेदिष्ठस्तमेवोपधावेति । सो ऽग्निमुपससार अग्नेर्वयं प्रथमस्यामृतानामित्येतयर्चा (१, २४, २) । तमग्निरुवाच । सविता वै प्रसवानामीशे तमेवोपधावेति । स सवितारमुपससार अभि त्वा देव सवितरित्येतेन तृचेन (१ २४, ३—५) । त सवितोवाच । वरुणाय वै राज्ञे नियुक्तो ऽसि तमेवोपधावेति । स वरुण राजानमुपससारात उत्तराभिरेकत्रिंशता । त वरुण उवाच । अग्निर्वै देवाना मुख सुहृदयतमस्तं नु स्तुह्यथ त्वोत्स्रक्ष्याम इति । सो ऽग्नि तुष्टावात उत्तराभिर्द्वाविंशत्या । तमग्निरुवाच । विश्वान्नु देवान्स्तुह्यथ त्वोत्स्रक्ष्याम इति । स विश्वान्देवांस्तुष्टाव नमो महद्भ्यो नमो अर्भकेभ्य इत्येतयर्चा (१, २७, १३) । तं विश्वे देवा ऊचु । इन्द्रो वै देवानामोजिष्ठो बलिष्ठ सहिष्ठ सत्तम पारयिष्णुतमस्तं नु स्तुह्यथ त्वोत्स्रक्ष्याम इति । स इन्द्रं तुष्टाव यच्चिद्धि सत्य सोमपा इति चैतेन सूक्तेनोत्तरस्य च पञ्चदशभि (१, २९, १—३०, १५) । तस्मा इन्द्र स्तूयमान प्रीतो मनसा हिरण्यरथं ददौ । तमेतया प्रतीयाय शश्वदिन्द्र (१, ३०, १६) इति । तमिन्द्र उवाच । अश्विनौ नु स्तुह्यथ त्वोत्स्रक्ष्याम इति । सो ऽश्विनौ तुष्टावात उत्तरेण तृचेन । तमश्विना ऊचतु । उषसं नु स्तुह्यथ त्वोत्स्रक्ष्याम इति । स उषसं तुष्टावात उत्तरेण तृचेन । तस्य ह स्मर्च्यृच्युक्तायां वि पाशो मुमुचे ।

कनीय ऐक्ष्वाकस्योदरं भवति । उत्तमस्यामेवर्च्युक्तायां वि पाशो मुमुचे । अगद ऐक्ष्वाक आस ॥ १६ ॥

तमृत्विज ऊचुः । त्वमेव नोऽस्याह्नः संस्थामधिगच्छेति । अथ हैतं शुनःशेपोऽञ्जःसवं ददर्श । तमेताभिश्चतसृभिरभिसुषाव यच्चिद्धि त्वं गृहेगृह (१, २८, ५—८) इति । अथैनं द्रोणकलशमभ्यवनिनाय उच्छिष्टं चम्वोर्भरेत्येतयर्चा (१, २८, ९) । अथ हास्मिन्नन्वारब्धे पूर्वाभिश्चतसृभिः सस्वाहाकाराभिर्जुहवां चकार । अथैनमवभृथमभ्यवनिनाय त्वं नो अग्ने वरुणस्य विद्वानित्येताभ्याम् (४, १, ४ ५) । अथैनमत ऊर्ध्वमग्निमाहवनीयमुपस्थापयां चकार शुनश्चिच्छेपं निदितं सहस्रादिति (५, २, ७) । अथ ह शुनःशेपो विश्वामित्रस्याङ्कमाससाद । स होवाचाजीगर्तः सौयवसिः । ऋषे पुनर्मे पुत्रं देहीति । नेति होवाच विश्वामित्रो देवा वा इमं मह्यमरासतेति । स ह देवरातो वैश्वामित्र आस । तस्यैते कापिलेयबाभ्रवाः । स होवाचाजीगर्तः सौयवसिः । त्वं वेहि विह्वयावहा इति । स होवाचाजीगर्तः सौयवसिः ।

आङ्गिरसो जन्मनास्याजीगर्तिः श्रुतः कविः ।
ऋषे पैतामहात्तन्तोर्मापगाः पुनरेहि माम् ॥

इति । स होवाच शुनःशेपः ।

अदर्शुस्त्वा शासहस्तं न यच्छूद्रेष्वलप्सत ।
गवां त्रीणि शतानि त्वमवृणीथा मदङ्गिरः ॥

इति । स होवाचाजीगर्तः सौयवसिः ।

तद्वै मा तात तपति पापं कर्म मया कृतम् ।
तदहं निह्नुवे तुभ्यं प्रति यन्तु शता गवाम् ॥

इति । स होवाच शुनःशेपः ।

यः सकृत्पापकं कुर्यात्कुर्यादेनत्ततोऽपरम् ।
नापागाः शौद्रान्न्यायादसंधेयं त्वया कृतम् ॥

इति । असंधेयमिति ह विश्वामित्र उपपपाद । स होवाच विश्वामित्रः ।

भीम एव सौयवसिः शासेन विशिशासिषुः ।
अस्थाद्यैतस्य पुत्रो भूर्ममैवोपेहि पुत्रताम् ॥

इति । स होवाच शुनःशेपः ।

स वै यथा नो ज्ञपया राजपुत्र तथा वद ।
यथैवाङ्गिरसः सन्नुपेयां तव पुत्रताम् ॥

इति । स होवाच विश्वामित्रः ।

ज्येष्ठो मे त्वं पुत्राणां स्यास्तव श्रेष्ठा प्रजा स्यात् ।
उपेया दैवं मे दायं तेन वै त्वोपमन्त्रये ॥

इति । स होवाच शुनःशेपः ।
संज्ञानानेषु वै ब्रूयाः सौहार्दाय मे श्रियै ।
यथाहं भरतऋषभोपेयां तव पुत्रताम् ॥
इति । अथ ह विश्वामित्रः पुत्रानामन्त्रयामास ।
मधुच्छन्दाः शृणोतन ऋषभो रेणुरष्टकः ।
ये के च भ्रातरः स्थनास्मै ज्यैष्ठ्याय कल्पध्वम् ॥
इति ॥ १७ ॥

तस्य ह विश्वामित्रस्यैकशतं पुत्रा आसुः । पञ्चाशदेव ज्यायांसो मधुच्छन्दसः पञ्चाशत्कनीयांसः । तद्ये ज्यायांसो न ते कुशलं मेनिरे । ताननुव्याजहार । अन्तान्वः प्रजा भक्षीष्टेति । त एतेऽन्ध्राः पुण्ड्राः शबराः पुलिन्दा मूतिबा इत्युदन्त्या बहवो भवन्ति वैश्वामित्रा दस्यूनां भूयिष्ठाः । स होवाच मधुच्छन्दाः पञ्चाशता सार्धम् ।
यन्नः पिता संजानीते तस्मिंस्तिष्ठामहे वयम् ।
पुरस्त्वा सर्वे कुर्महे त्वामन्वञ्चो वयं स्मसि ॥
इति । अथ ह विश्वामित्रः प्रतीतः पुत्रांस्तुष्टाव ।
ते वै पुत्राः पशुमन्तो वीरवन्तो भविष्यथ ।
ये मानं मेऽनुगृह्णन्तो वीरवन्तमकर्त मा ॥
पुरएत्रा वीरवन्तो देवरातेन गाथिनाः ।
सर्वे राध्याः स्थ पुत्रा एष वः सद्विवाचनम् ॥
एष वः कुशिका वीरो देवरातस्तमन्वित ।
युष्मांश्च दायं म उपेता विद्यां यामु च विद्मसि ॥
ते सम्यञ्चो वैश्वामित्राः सर्वे साकं सरातयः ।
देवराताय तस्थिरे धृत्यै श्रैष्ठ्याय गाथिनाः ॥
अधीयत देवरातो रिक्थयोरुभयोर्ऋषिः ।
जह्नूनां चाधिपत्ये दैवे वेदे च गाथिनाम् ॥

---

## 5 Der Zauber Brahmanah Parimarah (8, 28)

अथातो ब्रह्मणः परिमरः । यो ह वै ब्रह्मणः परिमरं वेद पर्येनं द्विषन्तो भ्रातृव्याः परि सपत्ना म्रियन्ते । अयं वै ब्रह्म योऽयं पवते । तमेताः पञ्च देवताः परिम्रियन्ते । विद्युद्वृष्टिश्चन्द्रमा आदित्योऽग्निः । विद्युद्वै विद्युत्य वृष्टिमनुप्रविशति । सान्तर्धीयते । तां न निर्जानन्ति । यदा वै म्रियतेऽथान्तर्धीयतेऽथैनं न निर्जानन्ति । स ब्रूयाद्विद्युतो मरणे ।

द्विषन्मे म्रियता सो ऽन्तर्धीयता त मा निर्ज्ञासिषुरिति । चिप्र हैवैनं न निर्जानन्ति । वृष्टिर्वै वृष्ट्वा चन्द्रमसमनुप्रविशति । सान्तर्धीयते । ता न निर्जानन्ति । यदा वै म्रियते ऽथान्तर्धीयते ऽथैन न निर्जानन्ति । स ब्रूयाद्वृष्टेर्मरणे । द्विषन्मे म्रियता सो ऽन्तर्धीयता त मा निर्ज्ञासिषुरिति । चिप्र हैवैन न निर्जानन्ति । चन्द्रमा वा अमावास्यायामादित्यमनुप्रविशति । सो ऽन्तर्धीयते । तं न निर्जानन्ति । यदा वै म्रियते ऽथान्तर्धीयते ऽथैनं न निर्जानन्ति । स ब्रूयाच्चन्द्रमसो मरणे । द्विषन्मे म्रियता सो ऽन्तर्धीयता तं मा निर्ज्ञासिषुरिति । चिप्र हैवैनं न निर्जानन्ति । आदित्यो वा अस्त यन्नग्निमनुप्रविशति । सो ऽन्तर्धीयते । त न निर्जानन्ति । यदा वै म्रियते ऽथान्तर्धीयते ऽथैनं न निर्जानन्ति । स ब्रूयादादित्यस्य मरणे । द्विषन्मे म्रियतां सो ऽन्तर्धीयतां तं मा निर्ज्ञासिषुरिति । चिप्र हैवैन न निर्जानन्ति । अग्निर्वा उद्वान्वायुमनुप्रविशति । सो ऽन्तर्धीयते । त न निर्जानन्ति । यदा वै म्रियते ऽथान्तर्धीयते ऽथैनं न निर्जानन्ति । स ब्रूयादग्नेर्मरणे । द्विषन्मे म्रियता सो ऽन्तर्धीयता त मा निर्ज्ञासिषुरिति । चिप्र हैवैन न निर्जानन्ति । ता वा एता देवता अत एव पुनर्जायन्ते । वायोरग्निर्जायते । प्राणाद्धि बलान्मथ्यमानो ऽधिजायते । त दृष्ट्वा ब्रूयात् । अग्निर्जायता मा मे द्विषञ्जन्यत एव पराङ्गजिघ्यत्विति । अतो हैव पराङ्गजिघ्यति । अग्नेर्वा आदित्यो जायते । तं दृष्ट्वा ब्रूयात् । आदित्यो जायतां मा मे द्विषञ्जन्यत एव पराङ्गजिघ्यत्विति । अतो हैव पराङ्गजिघ्यति । आदित्याद्वै चन्द्रमा जायते । त दृष्ट्वा ब्रूयात् । चन्द्रमा जायता मा मे द्विषञ्जन्यत एव पराङ्गजिघ्यत्विति । अतो हैव पराङ्गजिघ्यति । चन्द्रमसो वै वृष्टिर्जायते । ता दृष्ट्वा ब्रूयात् । वृष्टिर्जायतां मा मे द्विषञ्जन्यत एव पराङ्गजिघ्यत्विति । अतो हैव पराङ्गजिघ्यति । वृष्टेर्वै विद्युज्जायते । तां दृष्ट्वा ब्रूयात् । विद्युज्जायतां मा मे द्विषञ्जन्यत एव पराङ्गजिघ्यत्विति । अतो हैव पराङ्गजिघ्यति । स एष ब्रह्मण परिमरः । तमेत ब्रह्मणः परिमर मैत्रेयः कौषारवः सुत्वने कैरिशये भार्गायणाय राज्ञे प्रोवाच । त ह पञ्च राजानः परिमम्रुः । ततः सुत्वा महज्जगाम । तस्य व्रतम् । न द्विषतः पूर्व उपविशेत् । यदि तिष्ठन्तं मन्येत तिष्ठेतैव । न द्विषतः पूर्वः संविशेत् । यदासीनं मन्येतासीतैव । न द्विषतः पूर्वः प्रस्वप्यात् । यदि जाग्रत मन्येत जागृयादेव । अपि ह यद्यस्याश्ममूर्धा द्विषन्भवति चिप्रं हैवैनं स्तृणुते स्तृणुते ।

# IV. Śatapathabrāhmana.

## 1 Die Flutsage (1, 8 1, 1–10)

मनवे ह वै प्रातरवनेग्यमुदकमाजह्रुर्यथेदं पाणिभ्यामवनेजनायाहरन्त्येवं तस्यावनेनिजानस्य मत्स्यः पाणी आ पेदे । स हास्मै वाचमुवाद । बिभृहि मा पारयिष्यामि त्वेति कस्मान्मा पारयिष्यसीत्यौघ इमाः सर्वाः प्रजा निर्वोढा ततस्त्वा पारयितास्मीति कथं ते भृतिरिति । स होवाच । यावद्वै क्षुल्लका भवामो बह्वी वै नस्तावन्नाष्ट्रा भवत्युत मत्स्य एव मत्स्यं गिलति कुम्भ्यां माग्रे बिभरासि स यदा तामतिवर्धा अथ कर्षूं खात्वा तस्यां मा बिभरासि स यदा तामतिवर्धा अथ मा समुद्रमभ्यवहरासि तर्हि वा अतिनाष्ट्रो भवितास्मीति । शश्वद्ध झष आस । स हि ज्येष्ठं वर्धते ऽथेतिथीं समां तदौघ आगन्ता तन्मा नावमुपकल्प्योपासासै स औघ उत्थिते नावमा पद्यासै ततस्त्वा पारयितास्मीति । तमेवं भृत्वा समुद्रमभ्यवजहार । स यतिथीं तत्समां परिदिदेश ततिथीं समां नावमुपकल्प्योपासां चक्रे स औघ उत्थिते नावमा पेदे तं स मत्स्य उपन्या पुप्लुवे तस्य शृङ्गे नावः पाशं प्रति मुमोच तेनैतमुत्तरं गिरिमभि दुद्राव । स होवाच । अपीपरं वै त्वा वृक्षे नावं प्रति बध्नीष्व तं तु त्वा मा गिरौ सन्तमुदकमन्तश्छैत्सीद्यावद्यावदुदकं समवायात्तावत्तावदन्ववसर्पासीति स ह तावत्तावदेवान्ववससर्प तदप्येतदुत्तरस्य गिरेर्मनोरवसर्पणमित्यौघो ह ताः सर्वाः प्रजा निरुवाहाथेह मनुरेवैकः परि शिशिषे । सो ऽर्चञ्छ्राम्यंश्चचार प्रजाकामः । तत्रापि पाकयज्ञेनेजे स घृतं दधि मस्त्वामिक्षामित्यप्सु जुहवां चकार ततः संवत्सरे योषित्सं बभूव । सा ह पिब्दमानेवोदेयाय तस्यै ह स्म घृतं पदे सं तिष्ठते तया मित्रावरुणौ सं जग्माते । तां होचतुः कासीति । मनोर्दुहितेत्यावयोर्ब्रूष्वेति नेति होवाच य एव मामजीजनत तस्यैवाहमस्मीति तस्यामपित्वमीषाते तद्वा जज्ञौ तद्वा न जज्ञावत्येवेयाय सा मनुमा जगाम । तां ह मनुरुवाच कासीति । तव दुहितेति कथं भगवति मम दुहितेति या अमूरप्स्वाहुतीरहौषीर्घृतं दधि मस्त्वामिक्षां ततो मामजीजनथाः साशीरस्मि तां मा यज्ञे ऽवकल्पय यज्ञे चेद्वै मावकल्पयिष्यसि बहुः प्रजया पशुभिर्भविष्यसि यामु मया कां चाशिषमाशासिष्यसे सा ते सर्वा समर्धिष्यत इति तामेतन्मध्ये यज्ञस्यावाकल्पयन्मध्यं ह्येतद्यज्ञस्य यदन्तरा प्रयाजानुयाजान् । तयार्चञ्छ्राम्यंश्चचार प्रजाकामः । तयेमां प्रजातिं प्र जज्ञे येयं मनोः प्रजातिर्यामु चैनया कां चाशिषमाशास्त सास्मै सर्वा समार्ध्यत ।

---

## 2 Die Sage von Cyavana und den Aśvin
(4, 1, 5, 1–15).

यत्र वै भृगवो वाङ्गिरसो वा स्वर्गं लोकं समाश्नुवत तच्च्यवनो वा भार्गवश्च्यवनो वाङ्गिरसस्तदेव जीर्णिः कृत्यारूपो जहे । शर्यातो ह वा इदं मानवो ग्रामेण चचार । स तदेव प्रतिवेशो नि विविशे तस्य कुमारा क्रीडन्त इमं जीर्णिं कृत्यारूपमनर्थ्यं मन्यमाना लोष्टैर्वि पिपिषुः । स शार्यातेभ्यश्चुक्रोध । तेभ्योऽसंज्ञां चकार पितैव पुत्रेण युयुधे भ्राता भ्रात्रा । शर्यातो ह वा ईक्षां चक्रे । यत्किमकरं तस्मादिदमापदीति स गोपालांश्चाविपालांश्च संह्वयितवा उवाच । स होवाच । को वोऽद्येह किंचिदद्राक्षीदिति । ते होचुः । पुरुष एवायं जीर्णिः कृत्यारूपः शेते तमनर्थ्यं मन्यमानाः कुमारा लोष्टैर्व्यपिक्षन्निति स विदां चकार स वै च्यवन इति । स रथं युक्त्वा सुकन्यां शार्यातीमुपाधाय प्र सिष्यन्द स आ जगाम यत्रर्षिरास तत् । स होवाच । ऋषे नमस्ते यन्नावेदिषं तेनाहिंसिषमियं सुकन्या तया तेऽप ह्नुवे सं जानीतां मे ग्राम इति तस्य ह तत एव ग्रामः सं जज्ञे स ह तत एव शर्यातो मानव उदयुयुजे नेदपरं हिनसानीति । अश्विनौ ह वा इदं भिषज्यन्तौ चेरतुः । तौ सुकन्यामुपेयतुस्तस्यां मिथुनमीषाते तन्न जज्ञौ । तौ होचतुः । सुकन्ये कमिमं जीर्णिं कृत्यारूपमुप शेषे आवामनुप्रेहीति । सा होवाच । यस्मै मां पितादान्नैवाहं तं जीवन्तं हास्यामीति तद्धायमृषिरा जज्ञौ । स होवाच । सुकन्ये किं त्वैतदवोचतामिति तस्मा एतद्व्याचचक्षे स ह व्याख्यात उवाच यदि त्वैतत्पुनर्ब्रवतः सा त्वं ब्रूतान्न वै सुसर्वाविव स्थो न सुसमृद्धाविवाथ मे पतिं निन्दथ इति तौ यदि त्वा ब्रवतः केनावमसर्वौ स्वः केनासमृद्धाविति सा त्वं ब्रूतात्पतिं नु मे पुनर्युवाणं कुरुतमथ वां वक्ष्यामीति तां पुनरुपेयतुस्तां हैतदेवोचतुः । सा होवाच । न वै सुसर्वाविव स्थो न सुसमृद्धाविवाथ मे पतिं निन्दथ इति । तौ होचतुः । केनावमसर्वौ स्वः केनासमृद्धाविति । सा होवाच । पतिं नु मे पुनर्युवाणं कुरुतमथ वां वक्ष्यामीति । तौ होचतुः । एतं ह्रदमभ्यवहर स येन वयसा कमिष्यते तेनोदैष्यतीति तं ह्रदमभ्यवजहार स येन वयसा चकमे तेनोदेयाय । तौ होचतुः । सुकन्ये केनावमसर्वौ स्वः केनासमृद्धाविति तौ हर्षिरेव प्रत्युवाच कुरुक्षेत्रेऽमी देवा यज्ञं तन्वते ते वां यज्ञादन्तर्यन्ति तेनासर्वौ स्थस्तेनासमृद्धाविति तौ ह तत एवाश्विनौ प्रेयतुस्तावाजग्मतुर्देवान्यज्ञं तन्वानान्स्तुते बहिष्पवमाने । तौ होचतुः । उप नौ ह्वयध्वमिति ते ह देवा ऊचुर्न वामुप ह्वयिष्यामहे बहु मनुष्येषु संसृष्टमचारिष्टं भिषज्यन्ताविति । तौ होचतुः । विशीर्ष्णा वै यज्ञेन यजध्व इति कथं

विशीर्ष्णेत्युप नु नौ ह्वयध्वमथ वो वक्ष्याव इति तथेति ता उपाह्वयन्त ताभ्यामेतमाश्विनं ग्रहमगृह्णंस्तावध्वर्यू यज्ञस्याभवतां तावेतद्यज्ञस्य शिरः प्रत्यधत्तां तददस्तद्दिवाकीर्त्यानां ब्राह्मणे व्या ख्यायते यथा तद्यज्ञस्य शिरः प्रतिदधतुस्तस्मादेष स्तुते बहिष्पवमाने ग्रहो गृह्यते स्तुते हि बहिष्पवमान आगच्छताम् ।

---

### 3. *Die Sage von Purūravas und Urvaśī* (11, 5, 1, 1–17).

उर्वशी हाप्सराः पुरूरवसमैडं चकमे तं ह विन्दमानोवाच त्रिः स्म माह्नो वैतसेन दण्डेन हतादकामां स्म मा नि पद्यासै मो स्म त्वा नग्नं दर्शमेष वै न स्त्रीणामुपचार इति । सा हास्मिञ्ज्योगुवास । अपि हास्माद्गर्भिण्यास तावज्ज्योग्घास्मिन्नुवास ततो ह गन्धर्वाः समूदिरे ज्योग्वा इयमुर्वशी मनुष्येष्ववात्सीदुप जानीत यथेयं पुनरागच्छेदिति तस्यै हाविर्द्वयुरणा शयन उपबद्धास ततो ह गन्धर्वा अन्यतरमुरणं प्र मेथुः । सा होवाच । अवीर इव बत मेऽजन इव पुत्रं हरन्तीति द्वितीयं प्र मेथुः । सा ह तथैवोवाच । अथ हायमीक्षां चक्रे । कथं नु तदवीरं कथमजनं स्याद्यत्राहं स्यामिति स नग्न एवानूत्पपात चिरं तन्मेने यद्वासः पर्यधास्यत ततो ह गन्धर्वा विद्युतं जनयां चक्रुस्तं यथा दिवैवं नग्नं ददर्श ततो हैवेयं तिरोबभूव पुनरैमीत्येत्तिरोभूतां स आध्या जल्पन्कुरुक्षेत्रं समया चचारान्यतःप्लक्षेति बिसवती तस्यै हाध्यन्तेन वव्राज तद्ध ता अप्सरस आतयो भूत्वा परि पुप्लुविरे । तं हेयं ज्ञात्वोवाच । अयं वै स मनुष्यो यस्मिन्नहमवात्समिति ता होचुस्तस्मै वा आविरसामेति तथेति तस्मै हाविरासुः । तां हायं ज्ञात्वाभिपरोवाद ।

हये जाये मनसा तिष्ठ घोरे वचांसि मिश्रा कृणवावहै नु ।
न नौ मन्त्रा अनुदितास एते मयस्करन्परतरे चनाहन्नि-
त्युप नु रम सं नु वदावहा इति हैवैनां तदुवाच । तं हेतरा प्रत्युवाच ।

किमेता वाचा कृणवा तवाहं प्राक्रमिषमुषसामग्रियेव ।
पुरूरवः पुनरस्तं परेहि दुरापना वात इवाहमस्मीति ।

न वै त्वं तदकरोर्यदहमब्रवं दुरापा वा अहं त्वयैतर्ह्यस्मि पुनर्गृहानिहीति हैवैनं तदुवाच । अथ हायं परिद्यून उवाच ।

सुदेवो अद्य प्रपतेदनावृत्परावतं परमां गन्तवा उ ।
अधा शयीत निर्ऋतेरुपस्थेऽधैनं वृका रभसासो अद्युरिति ।

सुदेवोऽद्योद्बध्नीत प्र वा पतेत्तदेनं वृका वा श्वानो वाद्युरिति हैव तदुवाच । तं हेतरा प्रत्युवाच ।

पुरूरवो मा मृथा मा प्र पप्तो मा त्वा वृकासो ऽशिवास उ क्षन् ।
न वै स्त्रैणानि सख्यानि सन्ति सालावृकाणां हृदयान्येते-
ति मैतदादृथा न वै स्त्रैणं सख्यमस्ति पुनर्गृहानिहीति हैवैनं तदुवाच ।
यद्विरूपाचरं मर्त्येष्ववसं रात्रीः शरदश्चतस्रः ।
घृतस्य स्तोकं सकृदह्न आश्नां तादेवेदं तातृपाणा चरामी-
ति तदेतदुक्तप्रत्युक्तं पञ्चदशर्चं बह्वृचाः प्राहुस्तस्यै ह हृदयमाव्यथयां चकार । सा होवाच । संवत्सरतमीं रात्रिमा गच्छतात्तन्म एकां रात्रिमन्ते शयितासे जात उ ते ऽयं तर्हि पुत्रो भवितेति स ह संवत्सरतमीं रात्रिमाजगामेद्धिरण्यविमितानि ततो हैनमेकमूचुरेतत्प्रपद्यस्वेति तदस्मै तामुपप्रजिघ्युः । सा होवाच । गन्धर्वा वै ते प्रातर्वरं दातारस्तं वृणासा इति तं वै मे त्वमेव वृणीष्वेति युष्माकमेवैको ऽसानीति ब्रूतादिति तस्मै ह प्रातर्गन्धर्वा वरं ददुः स होवाच । युष्माकमेवैको ऽसानीति । ते होचुः । न वै सा मनुष्येष्वग्नेर्यज्ञिया तनूरस्ति ययेष्ट्वास्माकमेकः स्यादिति तस्मै ह स्थाल्यामोप्याग्निं प्र ददुरनेनेष्ट्वास्माकमेको भविष्यसीति तं च ह कुमारं चादाय वव्राज सो ऽरण्य एवाग्निं निधाय कुमारेणैव ग्राममेयाय पुनरैमीति तिरोभूतं यो ऽग्निरश्वत्थं तं या स्थाली शमीं तां स ह पुनर्गन्धर्वानियाय । ते होचुः । संवत्सरं चातुष्प्राश्यमोदनं पच स एतस्यैवाश्वत्थस्य तिस्रस्तिस्रः समिधो घृतेनान्वज्य समिद्वतीभिर्घृतवतीभिर्ऋग्भिरभ्याधत्तात्स यस्ततो ऽग्निर्जनिता स एव स भवितेति । ते होचुः । परोक्षमिव वा एतदाश्वत्थीमेवोत्तरारणिं कुरुष्व शमीमयीमधरारणिं स यस्ततो ऽग्निर्जनिता स एव स भवितेति । ते होचुः । परोक्षमिव वा एतदाश्वत्थीमेवोत्तरारणिं कुरुष्वाश्वत्थीमधरारणिं स यस्ततो ऽग्निर्जनिता स एव स भवितेति । स आश्वत्थीमेवोत्तरारणिं चक्रे । आश्वत्थीमधरारणिं स यस्ततो ऽग्निर्जज्ञे स एव स आस तेनेष्ट्वा गन्धर्वाणामेक आस तस्मादाश्वत्थीमेवोत्तरारणिं कुर्वीताश्वत्थीमधरारणिं स यस्ततो ऽग्निर्जायते स एव स भवति तेनेष्ट्वा गन्धर्वाणामेको भवति ।

---

### 4. Der Ursprung der Welt (14, 4, 2, 1–31)

आत्मैवेदमग्र आसीत् । पुरुषविधः सो ऽनुवीक्ष्य नान्यदात्मनो ऽपश्यत्सो ऽहमस्मीत्यग्रे व्याहरत्ततो ऽहंनामाभवत्तस्मादप्येतर्ह्यामन्त्रितो ऽहमयमित्येवाग्र उक्त्वाथान्यन्नाम प्र ब्रूते यदस्य भवति ॥ १ ॥ स यत्पूर्वो ऽस्मात्सर्वस्मात्सर्वान्पाप्मन औषत्तस्मात्पुरुष ओषति ह वै स तं यो ऽस्मात्पूर्वो बुभूषति य एवं वेद ॥ २ ॥ सो ऽबिभेत् । तस्मादेकाकी बिभेति स

हायमीक्षां चक्रे यन्मदन्यन्नास्ति कस्मान्नु बिभेमीति तत एवास्य भयं वीयाय कस्माद्ध्यभेष्यद्द्वितीयाद्वै भयं भवति ॥ ३ ॥ स वै नैव रेमे तस्मादेकाकी न रमते स द्वितीयमैच्छत्स हैतावानास यथा स्त्रीपुमांसौ संपरिष्वक्तौ ॥ ४ ॥ स इममेवात्मानं द्वेधापातयत् । ततः पतिश्च पत्नी चाभवतां तस्मादिदमर्धबृगलमिव स्व इति ह स्माह याज्ञवल्क्यस्तस्मादयमाकाशः स्त्रिया पूर्यत एव तां समभवत्ततो मनुष्या अजायन्त ॥ ५ ॥ सो हेयमीक्षां चक्रे । कथं नु मात्मन एव जनयित्वा संभवति हन्त तिरोऽसानीति ॥ ६ ॥ सा गौरभवत् । वृषभ इतरस्तां समेवाभवत्ततो गावोऽजायन्त ॥ ७ ॥ वडवेतराभवत् । अश्ववृष इतरो गर्दभीतरा गर्दभ इतरस्तां समेवाभवत्तत एकशफमजायत ॥ ८ ॥ अजेतराभवत् । बस्त इतरोऽविरितरो मेष इतरस्तां समेवाभवत्ततोऽजावयोऽजायन्तैवमेव यदिदं किं च मिथुनमा पिपीलिकाभ्यस्तत्सर्वमसृजत ॥ ९ ॥ सोऽवेत् । अहं वाव सृष्टिरस्म्यहं हीदं सर्वमसृक्षीति ततः सृष्टिरभवत्सृष्ट्यां हास्यैतस्यां भवति य एवं वेद ॥ १० ॥ अथेत्यभ्यमन्थत् । स मुखाच्च योनेर्हस्ताभ्यां चाग्निमसृजत तस्मादेतदुभयमलोमकमन्तरतोऽलोमका हि योनिरन्तरतः ॥ ११ ॥ तद्यदिदमाहुः । अमुं यजामुं यजेत्येकैकं देवमेतस्यैव सा विसृष्टिरेष उ ह्येव सर्वे देवाः ॥ १२ ॥ अथ यत्किं चेदमार्द्रं तद्रेतसोऽसृजत तदु सोम एतावद्वा इदं सर्वमन्नं चैवान्नादश्च सोम एवान्नमग्निरन्नादः ॥ १३ ॥ सैषा ब्रह्मणोऽतिसृष्टिः । यच्छ्रेयसो देवानसृजताथ यन्मर्त्यः सन्नमृतानसृजत तस्मादतिसृष्टिरतिसृष्ट्यां हास्यैतस्यां भवति य एवं वेद ॥ १४ ॥ तद्धेदं तर्ह्यव्याकृतमासीत् । तन्नामरूपाभ्यामेव व्याक्रियतासौ नामायमिदंरूप इति तदिदमप्येतर्हि नामरूपाभ्यामेव व्याक्रियतेऽसौ नामायमिदंरूप इति ॥ १५ ॥ स एष इह प्रविष्ट आ नखाग्रेभ्यो यथा क्षुरः क्षुरधानेऽवहितः स्याद्विश्वंभरो वा विश्वंभरकुलाये तं न पश्यन्त्यकृत्स्नो हि सः ॥ १६ ॥ प्राणन्नेव प्राणो नाम भवति । वदन्वाक्पश्यंश्चक्षुः शृण्वञ्छ्रोत्रं मन्वानो मनस्तान्यस्यैतानि कर्मनामान्येव स योऽत एकैकमुपास्ते न स वेदाकृत्स्नो ह्येषोऽत एकैकेन भवति ॥ १७ ॥ आत्मेत्येवोपासीत । अत्र ह्येते सर्व एकं भवन्ति तदेतत्पदनीयमस्य सर्वस्य यदयमात्मानेन ह्येतत्सर्वं वेद यथा ह वै पदेनानुविन्देदेवं कीर्तिं श्लोकं विन्दते य एवं वेद ॥ १८ ॥ तदेतत्प्रेयः पुत्रात् । प्रेयो वित्तात्प्रेयोऽन्यस्मात्सर्वस्मादन्तरतरं यदयमात्मा स योऽन्यमात्मनः प्रियं ब्रुवाणं ब्रूयात्प्रियं रोत्स्यतीतीश्वरो ह तथैव स्यादात्मानमेव प्रियमुपासीत स य आत्मानमेव प्रियमुपास्ते न हास्य प्रियं प्रमायुकं भवति ॥ १९ ॥ तदाहुः । यद्ब्रह्मविद्यया सर्वं भविष्यन्तो मनुष्या मन्यन्ते किमु तद्ब्रह्मावेद्यस्मात्तत्सर्वमभवदिति ॥ २० ॥

ब्रह्म वा इदमग्र आसीत् । तदात्मानमेवावेदहं ब्रह्मास्मीति तस्मात्तत्सर्वमभवत्तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत्तथर्षीणां तथा मनुष्याणाम् ॥ २१ ॥ तद्धैतत्पश्यन्नृषिर्वामदेवः प्रति पेदे । अहं मनुरभवं सूर्यश्चेति (RV 4, 26, 1) । तदिदमप्येतर्हि य एवं वेदाहं ब्रह्मास्मीति स इदं सर्वं भवति तस्य ह न देवाश्चनाभूत्या ईशत आत्मा ह्येषां स भवत्यथ यो ऽन्यां देवतामुपास्ते ऽन्यो ऽसावन्यो ऽहमस्मीति न स वेद यथा पशुरेवं स देवानां यथा ह वै बहवः पशवो मनुष्यं भुञ्ज्युरेवमेकैकः पुरुषो देवान्भुनक्त्येकस्मिन्नेव पशावादीयमाने ऽप्रियं भवति किमु बहुषु तस्मादेषां तन्न प्रियं यदेतन्मनुष्या विद्युः ॥ २२ ॥ ब्रह्म वा इदमग्र आसीदेकमेव तदेकं सन्न व्यभवत्तच्छ्रेयो रूपमत्यसृजत क्षत्रं यान्येतानि देवत्रा क्षत्राणीन्द्रो वरुणः सोमो रुद्रः पर्जन्यो यमो मृत्युरीशान इति तस्मात्क्षत्रात्परं नास्ति तस्माद्ब्राह्मणः क्षत्रियमधस्तादुपास्ते राजसूये क्षत्र एव तद्यशो दधाति सैषा क्षत्रस्य योनिर्यद्ब्रह्म तस्माद्यद्यपि राजा परमतां गच्छति ब्रह्मैवान्तत उपनिश्रयति स्वां योनिं य उ एनं हिनस्ति स्वां स योनिमृच्छति स पापीयान्भवति यथा श्रेयांसं हिंसित्वा ॥ २३ ॥ स नैव व्यभवत् । स विशमसृजत यान्येतानि देवजातानि गणश आख्यायन्ते वसवो रुद्रा आदित्या विश्वे देवा मरुत इति ॥ २४ ॥ स नैव व्यभवत् । स शौद्रं वर्णमसृजत पूषणमियं वै पूषेयं हीदं सर्वं पुष्यति यदिदं किं च ॥ २५ ॥ स नैव व्यभवत् । तच्छ्रेयो रूपमत्यसृजत धर्मं तदेतत्क्षत्रस्य क्षत्रं यद्धर्मस्तस्माद्धर्मात्परं नास्त्यथो अबलीयान्बलीयांसमाशंसते धर्मेण यथा राज्ञैवं यो वै स धर्मः सत्यं वै तत्तस्मात्सत्यं वदन्तमाहुर्धर्मं वदतीति धर्मं वा वदन्तं सत्यं वदतीत्येतद्ध्येवैतदुभयं भवति ॥ २६ ॥ तदेतद्ब्रह्म क्षत्रं विट् शूद्रः । तदग्निनैव देवेषु ब्रह्माभवद्ब्राह्मणो मनुष्येषु क्षत्रियेण क्षत्रियो वैश्येन वैश्यः शूद्रेण शूद्रस्तस्मादग्नावेव देवेषु लोकमिच्छन्ते ब्राह्मणे मनुष्येष्वेताभ्यां हि रूपाभ्यां ब्रह्माभवत् ॥ २७ ॥ अथ यो ह वा अस्माल्लोकात्स्वं लोकमदृष्ट्वा प्रैति स एनमविदितो न भुनक्ति यथा वेदो वाननूक्तो ऽन्यद्वा कर्माकृतं यदु ह वा अप्यनेवंविन्महत्पुण्यं कर्म करोति तद्धास्यान्ततः क्षीयत एवात्मानमेव लोकमुपासीत स य आत्मानमेव लोकमुपास्ते न हास्य कर्म क्षीयते ऽस्माद्ध्येवात्मनो यद्यत्कामयते तत्तत्सृजते ॥ २८ ॥ अथो अयं वा आत्मा सर्वेषां भूतानां लोकः स यज्जुहोति यद्यजते तेन देवानां लोको ऽथ यदनुब्रूते तेनर्षीणामथ यत्प्रजामिच्छते यत्पितृभ्यो निपृणाति तेन पितृणामथ यन्मनुष्यान्वासयते यदेभ्यो ऽशनं ददाति तेन मनुष्याणामथ यत्पशुभ्यस्तृणोदकं विन्दति तेन पशूनां यदस्य गृहेषु श्वापदा वयांस्या पिपीलिकाभ्य उपजीवन्ति

तेन तेषां लोको यथा ह वै स्वाय लोकायारिष्टिमिच्छेदेवं हैवंविदे सर्वदा सर्वाणि भूतान्यरिष्टिमिच्छन्ति तद्वा एतद्विदितं मीमांसितम् ॥ २९ ॥ आत्मैवेदमग्र आसीदेक एव सो ऽकामयत जाया मे स्यादथ प्र जायेयाथ वित्तं मे स्यादथ कर्म कुर्वीयेत्येतावान्वै कामो नेच्छंश्चनातो भूयो विन्देत्तस्मादप्येतर्ह्येकाकी कामयते जाया मे स्यादथ प्र जायेयाथ वित्तं मे स्यादथ कर्म कुर्वीयेति स यावदप्येतेषामेकैकं न प्राप्नोत्यकृत्स्न एव तावन्मन्यते तस्यो कृत्स्नता ॥ ३० ॥ मन एवास्यात्मा । वाग्जाया प्राणः प्रजा चक्षुर्मानुषं वित्तं चक्षुषा हि तद्विन्दति श्रोत्रं दैवं श्रोत्रेण हि तच्छृणोत्यात्मैवास्य कर्मात्मना हि कर्म करोति स एष पाङ्क्तो यज्ञः पाङ्क्तः पशुः पाङ्क्तः पुरुषः पाङ्क्तमिदं सर्वं यदिदं किं च तदिदं सर्वमाप्नोति य एवं वेद ॥ ३१ ॥

## 5 Yājnavalkya's Gedanken über die Unsterblichkeit
(14 5 4 1 10)

मैत्रेयीति होवाच याज्ञवल्क्यः । उद्यास्यन्वा अरे ऽहमस्मात्स्थानादस्मि हन्त ते ऽनया कात्यायन्यान्तं करवाणीति ॥ १ ॥ सा होवाच मैत्रेयी । यन्नु म इयं भगोः सर्वा पृथिवी वित्तेन पूर्णा स्यात्कथं तेनामृता स्यामिति । नेति होवाच याज्ञवल्क्यो यथैवोपकरणवतां जीवितं तथैव ते जीवितं स्यादमृतत्वस्य तु नाशास्ति वित्तेनेति ॥ २ ॥ सा होवाच मैत्रेयी । येनाहं नामृता स्यां किमहं तेन कुर्यां यदेव भगवान्वेद तदेव मे ब्रूहीति ॥ ३ ॥ स होवाच याज्ञवल्क्यः । प्रिया वतारे नः सती प्रियं भाषस एह्यास्स्व व्याख्यास्यामि ते व्याचक्षाणस्य तु मे निदिध्यासस्वेति । ब्रवीतु भगवानिति ॥ ४ ॥ स होवाच याज्ञवल्क्यः । न वा अरे पत्युः कामाय पतिः प्रियो भवत्यात्मनस्तु कामाय पतिः प्रियो भवति न वा अरे जायायै कामाय जाया प्रिया भवत्यात्मनस्तु कामाय जाया प्रिया भवति न वा अरे पुत्राणां कामाय पुत्राः प्रिया भवन्त्यात्मनस्तु कामाय पुत्राः प्रिया भवन्ति न वा अरे वित्तस्य कामाय वित्तं प्रियं भवत्यात्मनस्तु कामाय वित्तं प्रियं भवति न वा अरे ब्रह्मणः कामाय ब्रह्म प्रियं भवत्यात्मनस्तु कामाय ब्रह्म प्रियं भवति न वा अरे क्षत्रस्य कामाय क्षत्रं प्रियं भवत्यात्मनस्तु कामाय क्षत्रं प्रियं भवति न वा अरे लोकानां कामाय लोकाः प्रिया भवन्त्यात्मनस्तु कामाय लोकाः प्रिया भवन्ति न वा अरे देवानां कामाय देवाः प्रिया भवन्त्यात्मनस्तु कामाय देवाः प्रिया भवन्ति न वा अरे भूतानां कामाय भूतानि प्रियाणि भवन्त्यात्मनस्तु कामाय भूतानि

प्रियाणि भवन्ति न वा अरे सर्वस्य कामाय सर्वं प्रियं भवत्यात्मनस्तु कामाय सर्वं प्रियं भवति । आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यो मैत्रेय्यात्मनो वा अरे दर्शनेन श्रवणेन मत्या विज्ञानेनेदं सर्वं विदितम् ॥ ५ ॥ ब्रह्म तं परादाद्यो ऽन्यत्रात्मनो ब्रह्म वेद क्षत्त्रं तं परादाद्यो ऽन्यत्रात्मनः क्षत्त्रं वेद लोकास्तं परादुर्यो ऽन्यत्रात्मनो लोकान्वेद देवास्तं परादुर्यो ऽन्यत्रात्मनो देवान्वेद भूतानि तं परादुर्यो ऽन्यत्रात्मनो भूतानि वेद सर्वं तं परादाद्यो ऽन्यत्रात्मनः सर्वं वेद । इदं ब्रह्मेदं क्षत्त्रमिमे लोका इमे देवा इमानि भूतानीदं सर्वं यदयमात्मा ॥ ६ ॥ स यथा दुन्दुभेर्हन्यमानस्य न बाह्याञ्छब्दाञ्छक्नुयाद्ग्रहणाय दुन्दुभेस्तु ग्रहणेन दुन्दुभ्याघातस्य वा शब्दो गृहीतः ॥ ७ ॥ स यथा वीणायै वाद्यमानायै न बाह्याञ्छब्दाञ्छक्नुयाद्ग्रहणाय वीणायै तु ग्रहणेन वीणावादस्य वा शब्दो गृहीतः ॥ ८ ॥ स यथा शङ्खस्य ध्मायमानस्य न बाह्याञ्छब्दाञ्छक्नुयाद्ग्रहणाय शङ्खस्य तु ग्रहणेन शङ्खध्मस्य वा शब्दो गृहीतः ॥ ९ ॥ स यथार्द्रैधाग्नेरभ्याहितस्य पृथग्धूमा विनिश्चरन्त्येवं वा अरे ऽस्य महतो भूतस्य निश्वसितमेतद्यदृग्वेदो यजुर्वेदः सामवेदो ऽथर्वाङ्गिरस इतिहासः पुराणं विद्या उपनिषदः श्लोकाः सूत्राण्यनुव्याख्यानानि व्याख्यानानि । अस्यैवैतानि सर्वाणि निश्वसितानि ॥ १० ॥ स यथा सर्वासामपां समुद्र एकायनमेवं सर्वेषां स्पर्शानां त्वगेकायनमेवं सर्वेषां गन्धानां नासिके एकायनमेवं सर्वेषां रसानां जिह्वैकायनमेवं सर्वेषां रूपाणां चक्षुरेकायनमेवं सर्वेषां शब्दानां श्रोत्रमेकायनमेवं सर्वेषां सङ्कल्पानां मन एकायनमेवं सर्वेषां वेदानां हृदयमेकायनमेवं सर्वेषां कर्मणां हस्तावेकायनमेवं सर्वेषामध्वनां पादावेकायनमेवं सर्वेषामानन्दानामुपस्थ एकायनमेवं सर्वेषां विसर्गाणां पायुरेकायनमेवं सर्वासां विद्यानां वागेकायनम् ॥ ११ ॥ स यथा सैन्धवखिल्य उदके प्रास्त उदकमेवानुविलीयेत नाहास्योद्ग्रहणायेव स्याद्यतोयतस्त्वाददीत लवणमेवैवं वा अर इदं महद्भूतमनन्तमपारं विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति न प्रेत्य संज्ञास्तीत्यरे ब्रवीमीति होवाच याज्ञवल्क्यः ॥ १२ ॥ सा होवाच मैत्रेयी । अत्रैव मा भगवानमूमुहन्न प्रेत्य संज्ञास्तीति ॥ १३ ॥ स होवाच याज्ञवल्क्यः । न वा अरे ऽहं मोहं ब्रवीम्यलं वा अर इदं विज्ञानाय ॥ १४ ॥ यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति तदितर इतरं जिघ्रति तदितर इतरमभि वदति तदितर इतरं शृणोति तदितर इतरं मनुते तदितर इतरं वि जानाति ॥ १५ ॥ यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्तत्केन कं जिघ्रेत्तत्केन कमभि वदेत्तत्केन कं शृणुयात्तत्केन कं मन्वीत तत्केन कं वि

जानीयाद्येनेदं सर्वं विजानाति तं केन वि जानीयाद्विज्ञातारमरे केन वि जानीयादिति ॥ १६ ॥

---

## 6. Rituelles (1, 1, 1, 1–23).

व्रतमुपैष्यन्नन्तरेणाहवनीयं च गार्हपत्यं च प्राङ् तिष्ठन्नप उप स्पृशति तद्यदप उपस्पृशत्यमेध्यो वै पुरुषो यदनृतं वदति तेन पूतिरन्तरतो मेध्या वा आपो मेध्यो भूत्वा व्रतमुपायानीति पवित्रं वा आपः पवित्रपूतो व्रतमुपायानीति तस्माद्वा अप उप स्पृशति ॥ १ ॥ सो ऽग्निमेवाभीक्षमाणो व्रतमुपैति ।

अग्ने व्रतपते व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यताम् । (VS 1, 5, *a*)

इत्यग्निर्वै देवानां व्रतपतिस्तस्मा एवैतत्प्राह व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यतामिति नात्र तिरोहितमिवास्ति ॥ २ ॥ अथ संस्थिते वि सृजते ।

अग्ने व्रतपते व्रतमचारिषं तदशकं तन्मे ऽराधि । (VS 2, 28, *a*)

इत्यशकद्ध्येतद्यो यज्ञस्य संस्थामगन्नराधि ह्यस्मै यो यज्ञस्य संस्थामगन्नेतेन न्वेव भूयिष्ठा इव व्रतमुप यन्त्यनेन त्वेवोपेयात् ॥ ३ ॥ द्वयं वा इदं न तृतीयमस्ति । सत्यं चैवानृतं च सत्यमेव देवा अनृतं मनुष्याः ।

इदमहमनृतात्सत्यमुपैमि । (VS 1, 5, *b*)

इति तन्मनुष्येभ्यो देवानुपैति ॥ ४ ॥ स वै सत्यमेव वदेत् । एतद्ध वै देवा व्रतं चरन्ति यत्सत्यं तस्मात्ते यशो यशो ह भवति य एवं विद्वान्सत्यं वदति ॥ ५ ॥ अथ संस्थिते वि सृजते ।

इदमहं य एवास्मि सो ऽस्मि । (VS 2, 28, *b*)

इत्यमानुष इव वा एतद्भवति यद्व्रतमुपैति नहि तदवकल्पते यद्ब्रूयादिदमहं सत्यादनृतमुपैमीति तदु खलु पुनर्मानुषो भवति । तस्मात्

इदमहं य एवास्मि सो ऽस्मि । (VS 2, 28, *b*)

इत्येव व्रतं वि सृजेत ॥ ६ ॥ अथातो ऽशनानशनस्यैव । तदु हाषाढः सावयसो ऽनशनमेव व्रतं मेने मनो ह वै देवा मनुष्यस्याजानन्ति त एनमेतद्व्रतमुपयन्तं विदुः प्रातर्नो यक्ष्यत इति ते ऽस्य विश्वे देवा गृहानागच्छन्ति ते ऽस्य गृहेषूप वसन्ति स उपवसथः ॥ ७ ॥ तन्न्वेवानवकॢप्तं यो मनुष्येष्वनश्नत्सु पूर्वो ऽश्नीयादथ किमु यो देवेष्वनश्नत्सु पूर्वो ऽश्नीयात्तस्मादु नैवाश्नीयात् ॥ ८ ॥ तदु होवाच याज्ञवल्क्यः । यदि नाश्नाति पितृदेवत्यो भवति यद्यु अश्नाति देवानत्यश्नातीति स यदेवाशितमनशितं तदश्नीयादिति यस्य वै हविर्न गृह्णन्ति तदशितमनशितं स यदश्नाति तेनापितृदेवत्यो भवति यद्यु तदश्नाति यस्य हविर्न गृह्णन्ति तेनो देवान्नात्य-

श्नाति ॥ ९ ॥ स वा आरण्यमेवाश्नीयात् । या वारण्या ओषधयो यद्वा वृक्ष्यं तदु ह स्माहापि बर्कुर्वार्ष्णो माषान्मे पचत न वा एतेषां हविर्गृह्णन्तीति तदु तथा न कुर्याद्व्रीहियवयोर्वा एतदुपजं यच्छमीधान्यं तद्व्रीहियवावेवैतेन भूयांसौ करोति तस्मादारण्यमेवाश्नीयात् ॥ १० ॥ स आहवनीयागार एवैतां रात्रिं शयीत । गार्हपत्यागारे वा । देवान्वा एष उपावर्तते यो व्रतमुपैति स यानेवोपावर्तते तेषामेवैतन्मध्ये शेते ऽधः शयीताधस्तादिव हि श्रेयस उपचारः ॥ ११ ॥ स वै प्रातरप एव प्रथमेन कर्मणाभि पद्यते ऽपः प्र णयति यज्ञो वा आपो यज्ञमेवैतत्प्रथमेन कर्मणाभि पद्यते ताः प्र णयति यज्ञमेवैतद्वि तनोति ॥ १२ ॥ स प्र णयति ।

कस्त्वा युनक्ति स त्वा युनक्ति कस्मै त्वा युनक्ति तस्मै त्वा युनक्ति । (VS 1,6,*a*) इत्येताभिरनिरुक्ताभिर्व्याहृतिभिरनिरुक्तो वै प्रजापतिः प्रजापतिर्यज्ञस्तत्प्रजापतिमेवैतद्यज्ञं युनक्ति ॥ १३ ॥ यद्वेवापः प्रणयति । अग्निर्वा इदं सर्वमाप्तं तत्प्रथमेनैवैतत्कर्मणा सर्वमाप्नोति ॥ १४ ॥ यद्वेवास्यात्र होता वाध्वर्युर्वा ब्रह्मा वाग्नीध्रो वा स्वयं वा यजमानो नाभ्यापयति तद्वेवास्यैतेन सर्वमाप्तं भवति ॥ १५ ॥ यद्वेवापः प्रणयति । देवान्ह वै यज्ञेन यजमानांस्ताननुरक्षांसि ररक्षुर्न यक्ष्यध्व इति तद्यद्ररक्षुस्तस्माद्रक्षांसि ॥ १६ ॥ ततो देवा एतं वज्रं ददृशुर्यदपो वज्रो वा आपो वज्रो हि वा आपस्तस्माद्येनैता यन्ति निम्नं कुर्वन्ति यत्रोपतिष्ठन्ते निर्दहन्ति तत एतं वज्रमुदयच्छंस्तस्याभये ऽनाष्ट्रे निवाते यज्ञमतन्वत तथो एवैष एतं वज्रमुद्यच्छति तस्याभये ऽनाष्ट्रे निवाते यज्ञं तनुते तस्मादपः प्र णयति ॥ १७ ॥ ता उत्तरेण गार्हपत्यं सादयति । योषा वा आपो वृषाग्निर्गृहा वै गार्हपत्यस्तद्गृहेष्वेवैतन्मिथुनं प्रजननं क्रियते वज्रं वा एष उद्यच्छति यो ऽपः प्रणयति यो वा अप्रतिष्ठितो वज्रमुद्यच्छति नैनं शक्नोत्युद्यन्तुं सं हैनं शृणाति ॥ १८ ॥ स यद्गार्हपत्ये सादयति । गृहा वै गार्हपत्यो गृहा वै प्रतिष्ठा तद्गृहेष्वेवैतत्प्रतिष्ठायां प्रति तिष्ठति तथो हैनमेष वज्रो न हिनस्ति तस्माद्गार्हपत्ये सादयति ॥ १९ ॥ ता उत्तरेणाहवनीयं प्र णयति । योषा वा आपो वृषाग्निर्मिथुनमेवैतत्प्रजननं क्रियत एवमिव हि मिथुनं कॢप्तमुत्तरतो हि स्त्री पुमांसमुपशेते ॥ २० ॥ ता नान्तरेण सं चरेयुः । नेन्मिथुनं चर्यमाणमन्तरेण संचरानिति ता नातिहृत्य सादयेन्नो अनाप्ताः सादयेत्स यदतिहृत्य सादयेदग्निं वा अभ्येषापां च विभ्रातृव्यमिव स यथैव ह तदपेर्भवति यत्रास्याप उपस्पृशन्त्यथो हाधि भ्रातृव्यं वर्धयेद्यदतिहृत्य सादयेद्यदु अनाप्ताः सादयेन्नो हाभिमं काममभ्यापयेद्यस्मै कामाय प्रणीयन्ते तस्मादु समत्यैवोत्तरेणाहवनीयं प्र णयति ॥ २१ ॥ अथ तृणैः परि स्तृणाति । द्वंद्वं पात्रा-

ख्युदा हरति शूर्पं चाग्निहोत्रहवणीं च स्फ्यं च कपालानि च शम्यां च कृष्णाजिनं चोलूखलमुसले दृषदुपले तद्दश दशाक्षरा वै विराड्विराड्वै यज्ञस्तद्विराजमेवैतद्यज्ञमभिसंपादयत्यथ यद्द्वंद्वं द्वंद्वं वै वीर्यं यदा वै द्वौ संरभेते अथ तद्वीर्यं भवति द्वंद्वं वै मिथुनं प्रजननं मिथुनमेवैतत्प्रजननं क्रियते ॥ २२ ॥

---

# V. Kathopanisad.

## Erster Adhyāya.

### Erste Valli

उशन्ह वै वाजश्रवसः सर्ववेदसं ददौ । तस्य ह नचिकेता नाम पुत्र आस ॥ १ ॥ तं ह कुमारं सन्तं दक्षिणासु नीयमानासु श्रद्धाविवेश । सोऽमन्यत ॥ २ ॥

पीतोदका जग्धतृणा दुग्धदोहा निरिन्द्रियाः ।
अनन्दा नाम ते लोकास्तान्स गच्छति ता ददत् ॥ ३ ॥

स होवाच पितरं तत कस्मै मां दास्यसीति । द्वितीयं तृतीयम् । तं होवाच मृत्यवे त्वा ददामीति ॥ ४ ॥

बहूनामेमि प्रथमो बहूनामेमि मध्यमः ।
किं स्विद्यमस्य कर्तव्यं यन्मयाद्य करिष्यति ॥ ५ ॥
अनुपश्य यथा पूर्वे प्रतिपश्य तथापरे ।
सस्यमिव मर्त्यः पच्यते सस्यमिवाजायते पुनः ॥ ६ ॥
वैश्वानरः प्रविशत्यतिथिर्ब्राह्मणो गृहान् ।
तस्यैतां शान्तिं कुर्वन्ति हर वैवस्वतोदकम् ॥ ७ ॥

आशाप्रतीक्षे संगतं सूनृतां चेष्टापूर्ते पुत्रपशूंश्च सर्वान् ।
एतद्वृङ्क्ते पुरुषस्याल्पमेधसो यस्यानश्नन्वसति ब्राह्मणो गृहे ॥ ८ ॥
तिस्रो रात्रीर्यदवात्सीर्गृहे मेऽनश्नन्ब्रह्मन्नतिथिर्नमस्यः ।
नमस्तेऽस्तु ब्रह्मन्स्वस्ति मेऽस्तु तस्मात्प्रति त्रीन्वरान्वृणीष्व ॥ ९ ॥
शान्तसंकल्पः सुमना यथा स्याद्वीतमन्युर्गौतमो माभि मृत्यो ।
त्वत्प्रसृष्टं माभिवदेत्प्रतीत एतत्त्रयाणां प्रथमं वरं वृणे ॥ १० ॥
यथा पुरस्ताद्भविता प्रतीत औद्दालकिरारुणिर्मत्प्रसृष्टः ।
सुखं रात्रीः शयिता वीतमन्युस्त्वां ददृशिवान्मृत्युमुखात्प्रमुक्तम् ॥ ११ ॥

स्वर्गे लोके न भयं किं चनास्ति न तत्र त्वं न जरया बिभेति ।
उभे तीर्त्वाशनायापिपासे शोकातिगो मोदते स्वर्गलोके ॥ १२ ॥
स त्वमग्निं स्वर्ग्यमध्येषि मृत्यो प्रब्रूहि तं श्रद्दधानाय मह्यम् ।
स्वर्गलोका अमृतत्वं भजन्त एतद्द्वितीयेन वृणे वरेण ॥ १३ ॥
प्र ते ब्रवीमि तदु मे निबोध स्वर्ग्यमग्निं नचिकेतः प्रजानन् ।
अनन्तलोकाप्तिमथो प्रतिष्ठां विद्धि त्वमेतं निहितं गुहायाम् ॥ १४ ॥
लोकादिमग्निं तमुवाच तस्मै या इष्टका यावतीर्वा यथा वा ।
स चापि तत्प्रत्यवदद्यथोक्तमथास्य मृत्युः पुनरेवाह तुष्टः ॥ १५ ॥
तमब्रवीत्प्रीयमाणो महात्मा वरं तवेहाद्य ददामि भूयः ।
तवैव नाम्ना भवितायमग्निः सृङ्कां चेमामनेकरूपां गृहाण ॥ १६ ॥
त्रिणाचिकेतस्त्रिभिरेत्य सन्धिं त्रिकर्मकृत्तरति जन्ममृत्यू ।
ब्रह्मजज्ञं देवमीड्यं विदित्वा निचाय्येमां शान्तिमत्यन्तमेति ॥ १७ ॥
त्रिणाचिकेतस्त्रयमेतद्विदित्वा य एवं विद्वांश्चिनुते नाचिकेतम् ।
स मृत्युपाशान्पुरतः प्रणोद्य शोकातिगो मोदते स्वर्गलोके ॥ १८ ॥
एष तेऽग्निर्नचिकेतः स्वर्ग्यो यमवृणीथा द्वितीयेन वरेण ।
एतमग्निं तवैव प्रवक्ष्यन्ति जनासस्तृतीयं वरं नचिकेतो वृणीष्व ॥ १९ ॥
येयं प्रेते विचिकित्सा मनुष्येऽस्तीत्येके नायमस्तीति चैके ।
एतद्विद्यामनुशिष्टस्त्वयाहं वराणामेष वरस्तृतीयः ॥ २० ॥
देवैरत्रापि विचिकित्सितं पुरा न हि सुविज्ञेयमणुरेष धर्मः ।
अन्यं वरं नचिकेतो वृणीष्व मा मोपरोत्सीरति मा सृजैनम् ॥ २१ ॥
देवैरत्रापि विचिकित्सितं किल त्वं च मृत्यो यन्न सुविज्ञेयमात्थ ।
वक्ता चास्य त्वादृगन्यो न लभ्यो नान्यो वरस्तुल्य एतस्य कश्चित् ॥ २२ ॥
शतायुषः पुत्रपौत्रान्वृणीष्व बहून्पशून्हस्तिहिरण्यमश्वान् ।
भूमेर्महदायतनं वृणीष्व स्वयं च जीव शरदो यावदिच्छसि ॥ २३ ॥
एतत्तुल्यं यदि मन्यसे वरं वृणीष्व वित्तं चिरजीविकां च ।
महाभूमौ नचिकेतस्त्वमेधि कामानां त्वा कामभाजं करोमि ॥ २४ ॥
ये ये कामा दुर्लभा मर्त्यलोके सर्वान्कामांश्छन्दतः प्रार्थयस्व ।
इमा रामाः सरथाः सतूर्या न हीदृशा लम्भनीया मनुष्यैः ।
आभिर्मत्प्रत्ताभिः परिचारयस्व नचिकेतो मरणं मानुप्राक्षीः ॥ २५ ॥
श्वोभावा मर्त्यस्य यदन्तकैतत्सर्वेन्द्रियाणां जरयन्ति तेजः ।
अपि सर्वं जीवितमल्पमेव तवैव वाहास्तव नृत्यगीते ॥ २६ ॥
न वित्तेन तर्पणीयो मनुष्यो लप्स्यामहे वित्तमद्राक्ष्म चेत्त्वा ।
जीविष्यामो यावदीशिष्यसि त्वं वरस्तु मे वरणीयः स एव ॥ २७ ॥

अजीर्यताममृतानामुपेत्य जीर्यन्मर्त्यः क्वधःस्थः प्रजानन् ।
अभिध्यायन्वर्णरतिप्रमोदानतिदीर्घे जीविते को रमेत ॥ २८ ॥
यस्मिन्निदं विचिकित्सन्ति मृत्यो यत्सांपराये महति ब्रूहि नस्तत् ।
यो ऽयं वरो गूढमनुप्रविष्टो नान्यं तस्मान्नचिकेता वृणीते ॥ २९ ॥

## Zweite Valli.

अन्यच्छ्रेयो ऽन्यदुतैव प्रेयस्ते उभे नानार्थे पुरुषं सिनीतः ।
तयोः श्रेय आददानस्य साधु भवति हीयते ऽर्थाद्य उ प्रेयो वृणीते ॥ १ ॥
श्रेयश्च प्रेयश्च मनुष्यमेतस्तौ संपरीत्य विविनक्ति धीरः ।
श्रेयो हि धीरो ऽभि प्रेयसो वृणीते प्रेयो मन्दो योगक्षेमाद्वृणीते ॥ २ ॥
स त्वं प्रियान्प्रियरूपांश्च कामानभिध्यायन्नचिकेतो ऽत्यस्राक्षीः ।
नैतां सृङ्कां वित्तमयीमवाप्तो यस्यां मज्जन्ति बहवो मनुष्याः ॥ ३ ॥
दूरमेते विपरीते विषूची अविद्या या च विद्येति ज्ञाता ।
विद्याभीप्सिनं नचिकेतसं मन्ये न त्वा कामा बहवो लोलुपन्त ॥ ४ ॥
अविद्यायामन्तरे वर्तमानाः स्वयंधीराः पण्डितंमन्यमानाः ।
दन्द्रम्यमाणाः परियन्ति मूढा अन्धेनैव नीयमाना यथान्धाः ॥ ५ ॥
न सांपरायः प्रतिभाति बालं प्रमाद्यन्तं वित्तमोहेन मूढम् ।
अयं लोको नास्ति पर इति मानी पुनः पुनर्वशमापद्यते मे ॥ ६ ॥
श्रवणायापि बहुभिर्यो न लभ्यः शृण्वन्तो ऽपि बहवो यं न विद्युः ।
आश्चर्यो वक्ता कुशलो ऽस्य लब्धाश्चर्यो ज्ञाता कुशलानुशिष्टः ॥ ७ ॥
न नरेणावरेण प्रोक्त एष सुविज्ञेयो बहुधा चिन्त्यमानः ।
अनन्यप्रोक्ते गतिरत्र नास्त्यणीयान्ह्यतर्क्यमणुप्रमाणात् ॥ ८ ॥
नैषा तर्केण मतिरापनेया प्रोक्तान्येनैव सुज्ञानाय प्रेष्ठ ।
यां त्वमापः सत्यधृतिर्बतासि त्वादृङ्नो भूयान्नचिकेतः प्रष्टा ॥ ९ ॥
जानाम्यहं शेवधिरित्यनित्यं न ह्यध्रुवैः प्राप्यते हि ध्रुवं तत् ।
ततो मया नाचिकेतश्चितो ऽग्निरनित्यैर्द्रव्यैः प्राप्तवानस्मि नित्यम् ॥ १० ॥
कामस्याप्तिं जगतः प्रतिष्ठां क्रतोरानन्त्यमभयस्य पारम् ।
स्तोममहदुरुगायं प्रतिष्ठां दृष्ट्वा धृत्या धीरो नचिकेतो ऽत्यस्राक्षीः ॥ ११ ॥
तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराणम् ।
अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति ॥ १२ ॥
एतच्छ्रुत्वा संपरिगृह्य मर्त्यः प्रवृह्य धर्म्यमणुमेतमाप्य ।
स मोदते मोदनीयं हि लब्ध्वा विवृतं सद्म नचिकेतसं मन्ये ॥ १३ ॥

अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात्कृताकृतात् ।
अन्यत्र भूताच्च भव्याच्च यत्तत्पश्यसि तद्वद ॥ १४ ॥
सर्वे वेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति ।
यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं संग्रहेण ब्रवीमि ॥ ओमित्येतत् ॥ १५ ॥
एतद्ध्येवाक्षरं ब्रह्मैतद्ध्येवाक्षरं परम् ।
एतद्ध्येवाक्षरं ज्ञात्वा यो यदिच्छति तस्य तत् ॥ १६ ॥
एतदालम्बनं श्रेष्ठमेतदालम्बनं परम् ।
एतदालम्बनं ज्ञात्वा ब्रह्मलोके महीयते ॥ १७ ॥
न जायते म्रियते वा विपश्चिन्नायं कुतश्चिन्न बभूव कश्चित् ।
अजो नित्यः शाश्वतो ऽयं पुराणो न हन्यते हन्यमाने शरीरे ॥ १८ ॥
हन्ता चेन्मन्यते हन्तुं हतश्चेन्मन्यते हतम् ।
उभौ तौ न विजानीतो नायं हन्ति न हन्यते ॥ १९ ॥
अणोरणीयान्महतो महीयानात्मास्य जन्तोर्निहितो गुहायाम् ।
तमक्रतुः पश्यति वीतशोको धातुप्रसादान्महिमानमात्मनः ॥ २० ॥
आसीनो दूरं व्रजति शयानो याति सर्वतः ।
कस्तं मदामदं देवं मदन्यो ज्ञातुमर्हति ॥ २१ ॥
अशरीरं शरीरेष्वनवस्थेष्ववस्थितम् ।
महान्तं विभुमात्मानं मत्वा धीरो न शोचति ॥ २२ ॥
नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन ।
यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम् ॥ २३ ॥
नाविरतो दुश्चरितान्नाशान्तो नासमाहितः ।
नाशान्तमानसो वापि प्रज्ञानेनैनमाप्नुयात् ॥ २४ ॥
यस्य ब्रह्म च क्षत्रं चोभे भवत ओदनम् ।
मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः ॥ २५ ॥

## Dritte Valli.

ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्धे ।
छायातपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो ये च त्रिणाचिकेताः ॥ १ ॥
यः सेतुरीजानानामक्षरं ब्रह्म यत्परम् ।
अभयं तितीर्षतां पारं नाचिकेतं शकेमहि ॥ २ ॥
आत्मानं रथिनं विद्धि शरीरं रथमेव तु ।
बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च ॥ ३ ॥

इन्द्रियाणि हयानाहुर्विषयांस्तेषु गोचरान् ।
आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिण ॥ ४ ॥
यस्त्वविज्ञानवान्भवत्ययुक्तेन मनसा सदा ।
तस्येन्द्रियाण्यवश्यानि दुष्टाश्वा इव सारथे ॥ ५ ॥
यस्तु विज्ञानवान्भवति युक्तेन मनसा सदा ।
तस्येन्द्रियाणि वश्यानि सदश्वा इव सारथे ॥ ६ ॥
यस्त्वविज्ञानवान्भवत्यमनस्क सदाशुचि ।
न स तत्पदमाप्नोति संसारं चाधिगच्छति ॥ ७ ॥
यस्तु विज्ञानवान्भवति समनस्क सदा शुचि ।
स तु तत्पदमाप्नोति यस्माद्भूयो न जायते ॥ ८ ॥
विज्ञानसारथिर्यस्तु मनःप्रग्रहवान्नर ।
सोऽध्वन पारमाप्नोति तद्विष्णो परमं पदम् ॥ ९ ॥
इन्द्रियेभ्य परा ह्यर्था अर्थेभ्यश्च परं मन ।
मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान्पर ॥ १० ॥
महत परमव्यक्तमव्यक्तात्पुरुष पर ।
पुरुषान्न परं किंचित्सा काष्ठा सा परा गति ॥ ११ ॥
एष सर्वेषु भूतेषु गूढोऽत्मा न प्रकाशते ।
दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभि ॥ १२ ॥
यच्छेद्वाङ्मनसी प्राज्ञस्तद्यच्छेज्ज्ञान आत्मनि ।
ज्ञानमात्मनि महति नियच्छेत्तद्यच्छेच्छान्त आत्मनि ॥ १३ ॥
उत्तिष्ठत जाग्रत प्राप्य वरान्निबोधत ।
क्षुरस्य धारा निशिता दुरत्यया दुर्गं पथस्तत्कवयो वदन्ति ॥ १४ ॥
अशब्दमस्पर्शमरूपमव्ययं तथारसं नित्यमगन्धवच्च यत् ।
अनाद्यनन्तं महत परं ध्रुवं निचाय्य तन्मृत्युमुखात्प्रमुच्यते ॥ १५ ॥
नाचिकेतमुपाख्यानं मृत्युप्रोक्तं सनातनम् ।
उक्त्वा श्रुत्वा च मेधावी ब्रह्मलोके महीयते ॥ १६ ॥
य इमं परमं गुह्यं श्रावयेद्ब्रह्मसंसदि ।
प्रयत श्राद्धकाले वा तदानन्त्याय कल्पते
तदानन्त्याय कल्पत इति ॥ १७ ॥

## Zweiter Adhyāya.

### Vierte Valli.

पराञ्चि खानि व्यतृणत्स्वयम्भूस्तस्मात्पराङ् पश्यति नान्तरात्मन् ।
कश्चिद्धीरः प्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन् ॥ १ ॥
पराचः कामाननुयन्ति बालास्ते मृत्योर्यन्ति विततस्य पाशम् ।
अथ धीरा अमृतत्वं विदित्वा ध्रुवमध्रुवेष्विह न प्रार्थयन्ते ॥ २ ॥
येन रूपं रसं गन्धं शब्दान्स्पर्शांश्च मैथुनान् ।
एतेनैव विजानाति किमत्र परिशिष्यते ॥ एतद्वै तत् ॥ ३ ॥
स्वप्नान्तं जागरितान्तं चोभौ येनानुपश्यति ।
महान्तं विभुमात्मानं मत्वा धीरो न शोचति ॥ ४ ॥
य इमं मध्वदं वेदात्मानं जीवमन्तिकात् ।
ईशानं भूतभव्यस्य न ततो विजुगुप्सते ॥ एतद्वै तत् ॥ ५ ॥
यः पूर्वं तपसो जातमद्भ्यः पूर्वमजायत ।
गुहां प्रविश्य तिष्ठन्तं यो भूतेभिर्व्यपश्यत ॥ एतद्वै तत् ॥ ६ ॥
या प्राणेन संभवत्यदितिर्देवतामयी ।
गुहां प्रविश्य तिष्ठन्तीं या भूतेभिर्व्यजायत ॥ एतद्वै तत् ॥ ७ ॥
अरण्योर्निहितो जातवेदा गर्भ इव सुभृतो गर्भिणीभिः ।
दिवे दिव ईड्यो जागृवद्भिर्हविष्मद्भिर्मनुष्येभिरग्निः ॥ एतद्वै तत् ॥ ८ ॥
यतश्चोदेति सूर्योऽस्तं यत्र च गच्छति ।
तं देवाः सर्वे अर्पितास्तदु नात्येति कश्चन ॥ एतद्वै तत् ॥ ९ ॥
यदेवेह तदमुत्र यदमुत्र तदन्विह ।
मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति ॥ १० ॥
मनसैवेदमाप्तव्यं नेह नानास्ति किंचन ।
मृत्योः स मृत्युं गच्छति य इह नानेव पश्यति ॥ ११ ॥
अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति ।
ईशानो भूतभव्यस्य न ततो विजुगुप्सते ॥ एतद्वै तत् ॥ १२ ॥
अङ्गुष्ठमात्रः पुरुषो ज्योतिरिवाधूमकः ।
ईशानो भूतभव्यस्य स एवाद्य स उ श्वः ॥ एतद्वै तत् ॥ १३ ॥
यथोदकं दुर्गे वृष्टं पर्वतेषु विधावति ।
एवं धर्मान्पृथक्पश्यंस्तानेवानुविधावति ॥ १४ ॥
यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति ।
एवं मुनेर्विजानत आत्मा भवति गौतम ॥ १५ ॥

## Fünfte Valli

पुरमेकादशद्वारमजस्यावक्रचेतसः ।
अनुष्ठाय न शोचति विमुक्तश्च विमुच्यते ॥ एतद्वै तत् ॥ १ ॥
हंसः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत् ।
नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत् ॥ २ ॥
ऊर्ध्वं प्राणमुन्नयत्यपानं प्रत्यगस्यति ।
मध्ये वामनमासीनं विश्वे देवा उपासते ॥ ३ ॥
अस्य विस्रंसमानस्य शरीरस्थस्य देहिनः ।
देहाद्विमुच्यमानस्य किमत्र परिशिष्यते ॥ एतद्वै तत् ॥ ४ ॥
न प्राणेन नापानेन मर्त्यो जीवति कश्चन ।
इतरेण तु जीवन्ति यस्मिन्नेतावुपाश्रितौ ॥ ५ ॥
हन्त त इदं प्रवक्ष्यामि गुह्यं ब्रह्म सनातनम् ।
यथा च मरणं प्राप्यात्मा भवति गौतम ॥ ६ ॥
योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः ।
स्थाणुमन्येऽनुसंयन्ति यथाकर्म यथाश्रुतम् ॥ ७ ॥
य एष सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाणः ।
तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते ।
तस्मिँल्लोकाः श्रिताः सर्वे तदु नात्येति कश्चन ॥ एतद्वै तत् ॥ ८ ॥
अग्निर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रतिरूपो बभूव ।
एकस्तथा सर्वभूतान्तरात्मा रूपं रूपं प्रतिरूपो बहिश्च ॥ ९ ॥
वायुर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रतिरूपो बभूव ।
एकस्तथा सर्वभूतान्तरात्मा रूपं रूपं प्रतिरूपो बहिश्च ॥ १० ॥
सूर्यो यथा सर्वलोकस्य चक्षुर्न लिप्यते चाक्षुषैर्बाह्यदोषैः ।
एकस्तथा सर्वभूतान्तरात्मा न लिप्यते लोकदुःखेन बाह्यः ॥ ११ ॥
एको वशी सर्वभूतान्तरात्मैकं रूपं बहुधा यः करोति ।
तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां सुखं शाश्वतं नेतरेषाम् ॥ १२ ॥
नित्यो ऽनित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान् ।
तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां शान्तिः शाश्वती नेतरेषाम् ॥ १३ ॥
तदेतदिति मन्यन्तेऽनिर्देश्यं परमं सुखम् ।
कथं नु तद्विजानीयां किमु भाति विभाति वा ॥ १४ ॥
न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः ।
तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति ॥ १५ ॥

## Sechste Vallī.

ऊर्ध्वमूलोऽवाक्शाख एषोऽश्वत्थः सनातनः ।
तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते ।
तस्मिँल्लोकाः श्रिताः सर्वे तदु नात्येति कश्चन ॥ एतद्वै तत् ॥ १ ॥
यदिदं किं च जगत्सर्वं प्राण एजति निःसृतम् ।
महद्भयं वज्रमुद्यतं य एतद्विदुरमृतास्ते भवन्ति ॥ २ ॥
भयादस्याग्निस्तपति भयात्तपति सूर्यः ।
भयादिन्द्रश्च वायुश्च मृत्युर्धावति पञ्चमः ॥ ३ ॥
इह चेदशकद्बोद्धुं प्राक्शरीरस्य विस्रसः ।
ततः स्वर्गेषु लोकेषु शरीरत्वाय कल्पते ॥ ४ ॥
यथादर्शे तथात्मनि यथा स्वप्ने तथा पितृलोके ।
यथाप्सु परीव ददृशे तथा गन्धर्वलोके ।
छायातपयोरिव ब्रह्मलोके ॥ ५ ॥
इन्द्रियाणां पृथग्भावमुदयास्तमयौ च यत् ।
पृथगुत्पद्यमानानां मत्वा धीरो न शोचति ॥ ६ ॥
इन्द्रियेभ्यः परं मनो मनसः सत्त्वमुत्तमम् ।
सत्त्वादधि महानात्मा महतोऽव्यक्तमुत्तमम् ॥ ७ ॥
अव्यक्तात्तु परः पुरुषो व्यापकोऽलिङ्ग एव च ।
यं ज्ञात्वा मुच्यते जन्तुरमृतत्वं च गच्छति ॥ ८ ॥
न संदृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनम् ।
हृदा मनीषा मनसाभिक्लृप्तो य एतद्विदुरमृतास्ते भवन्ति ॥ ९ ॥
यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह ।
बुद्धिश्च न विचेष्टते तामाहुः परमां गतिम् ॥ १० ॥
तां योगमिति मन्यन्ते स्थिरामिन्द्रियधारणाम् ।
अप्रमत्तस्तदा भवति योगो हि प्रभवाप्ययौ ॥ ११ ॥
नैव वाचा न मनसा प्राप्तुं शक्यो न चक्षुषा ।
अस्तीति ब्रुवतोऽन्यत्र कथं तदुपलभ्यते ॥ १२ ॥
अस्तीत्येवोपलब्धव्यस्तत्त्वभावेन चोभयोः ।
अस्तीत्येवोपलब्धस्य तत्त्वभावः प्रसीदति ॥ १३ ॥
यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः ।
अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते ॥ १४ ॥
यदा सर्वे प्रभिद्यन्ते हृदयस्येह ग्रन्थयः ।
अथ मर्त्योऽमृतो भवत्येतावदनुशासनम् ॥ १५ ॥

शतं चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनिःसृतैका ।
तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति ॥ १६ ॥
अङ्गुष्ठमात्रः पुरुषो ऽन्तरात्मा सदा जनानां हृदये संनिविष्टः ।
तं स्वाच्छरीरात्प्रवृहेन्मुञ्जादिवेषीकां धैर्येण ।
तं विद्याच्छुक्रममृतं तं विद्याच्छुक्रममृतमिति ॥ १७ ॥
मृत्युप्रोक्तां नचिकेतो ऽथ लब्ध्वा विद्यामेतां योगविधिं च कृत्स्नम् ।
ब्रह्मप्राप्तो विरजो ऽभूद्विमृत्युरन्यो ऽप्येवं यो विदध्यात्ममेव ॥ १८ ॥

सह नाववतु सह नौ भुनक्तु सह वीर्यं करवावहै तेजस्वि नावधीतमस्तु मा विद्विषावहै । ओँ शान्तिः शान्तिः शान्तिः ॥

---

# VI Āśvalāyana's Gṛhyasūtra

## Die Einführung des Schülers (1, 19—22)

अष्टमे वर्षे ब्राह्मणमुपनयेत् । गर्भाष्टमे वा । एकादशे क्षत्रियम् । द्वादशे वैश्यम् । आ षोडशाद्ब्राह्मणस्यानतीतः कालः । आ द्वाविंशात्क्षत्रियस्य । आ चतुर्विंशाद्वैश्यस्य । अत ऊर्ध्वं पतितसावित्रीका भवन्ति । नैनानुपनयेत् । नाध्यापयेत् । न याजयेत् । नैभिर्व्यवहरेयुः । अलंकृतं कुमारं कुशलीकृतशिरसमहतेन वाससा संवीतम् । ऐणेयेन वाजिनेन ब्राह्मणम् । रौरवेण क्षत्रियम् । आजेन वैश्यम् । यदि वासांसि वसीरन्रक्तानि वसीरन् । काषायं ब्राह्मणः । माञ्जिष्ठं क्षत्रियः । हारिद्रं वैश्यः । तेषां मेखलाः । मौञ्जी ब्राह्मणस्य । धनुर्ज्या क्षत्रियस्य । आवी वैश्यस्य । तेषां दण्डाः । पालाशो ब्राह्मणस्य । औदुम्बरः क्षत्रियस्य । बैल्वो वैश्यस्य । सर्वे वा सर्वेषाम् । समन्वारब्धे हुत्वोत्तरतो ऽग्नेः प्राङ्मुख आचार्यो ऽवतिष्ठते । पुरस्तात्प्राङ्मुख इतरः । अपामञ्जली पूरयित्वा तत्सवितुर्वृणीमह (RV 5 82 1) इति पूर्णेनास्य पूर्णमवक्षारयति । आसिच्य देवस्य त्वा सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां हस्तं गृह्णाम्यसाविति तस्य पाणिना पाणिं साङ्गुष्ठं गृह्णीयात् । सविता ते हस्तमग्रभीदसाविति द्वितीयम् । अग्निराचार्यस्तवासाविति तृतीयम् । आदित्यमीक्षयेत् । देव सवितरेष ते ब्रह्मचारी तं गोपाय स मा मृतेत्याचार्यः । कस्य ब्रह्मचार्यसि प्राणस्य ब्रह्मचार्यसि कस्त्वा कमुपनयते काय त्वा परिददामीति । (RV 3 8 4) युवा सुवासाः

परिवीत आगादित्यधेंचैनेन प्रदक्षिणमावर्तयेत् । तस्याधसौ पाणी कृत्वा हृदयदेशमालभेतोत्तरेण । अग्निं परिसमुह्य ब्रह्मचारी तूष्णीं समिधमादध्यात् । तूष्णीं वै प्राजापत्यम् । प्राजापत्यो ब्रह्मचारी भवतीति विज्ञायते । मन्त्रेण हैके ।

अग्नये समिधमाहार्षं बृहते जातवेदसे ।
तया त्वमग्ने वर्धस्व समिधा ब्रह्मणा वयम् ॥

स्वाहेति । स समिधमाधायाग्निमुपस्पृश्य मुखं निमार्ष्टि त्रिः । तेजसा मा समनज्मीति । तेजसा ह्येवात्मानं समनक्तीति विज्ञायते ।

मयि मेधां मयि प्रजां मय्यग्निस्तेजो दधातु ।
मयि मेधां मयि प्रजां मयीन्द्र इन्द्रियं दधातु ।
मयि मेधां मयि प्रजां मयि सूर्यो भ्राजो दधातु ।
यत्ते अग्ने तेजस्तेनाहं तेजस्वी भूयासम् ।
यत्ते अग्ने वर्चस्तेनाहं वर्चस्वी भूयासम् ।
यत्ते अग्ने हरस्तेनाहं हरस्वी भूयासम् ।

इत्युपस्थाय जान्वाच्योपसंगृह्य ब्रूयात् । अधीहि भो । सावित्रीं भो३ अनुब्रूहीति । तस्मै वाससा पाणिभ्यां च पाणी संगृह्य सावित्रीमन्वाह । पच्छो ऽर्धर्चश सर्वां यथाशक्ति वाचयीत । हृदयदेशे ऽस्योर्ध्वाङ्गुलिं पाणिमुपदधाति ।

मम व्रते हृदयं ते दधामि मम चित्तमनु चित्तं ते अस्तु ।
मम वाचमेकव्रतो जुषस्व बृहस्पतिष्ट्वा नियुनक्तु मह्यम् ॥

इति । मेखलामाबध्य दण्डं प्रदाय ब्रह्मचर्यमादिशेत् । ब्रह्मचार्यस्यपो ऽशान कर्म कुरु दिवा मा स्वाप्सीराचार्याधीनो वेदमधीष्वेति । द्वादश वर्षाणि वेदब्रह्मचर्यम् । ग्रहणान्तं वा । सायंप्रातर्भिक्षेत । सायंप्रातः समिधमादध्यात् । अप्रत्याख्यायिनमग्रे भिक्षेत । अप्रत्याख्यायिनीं वा । भवान्भिक्षां ददात्विति । अनुप्रवचनीयमिति वा । तदाचार्याय वेदयीत । तिष्ठेदहःशेषम् । अस्तमिते ब्रह्मौदनमनुप्रवचनीयं श्रपयित्वाचार्याय वेदयीत । आचार्यः समन्वारब्धे जुहुयात् । सदसस्पतिमद्भुतमिति (RV 1, 18, 6) । सावित्र्या द्वितीयम् । यदन्यच्चात ऊर्ध्वमनूक्तं स्यात् । ऋषिभ्यस्तृतीयम् । सौविष्टकृतं चतुर्थम् । ब्राह्मणान्भोजयित्वा वेदसमाप्तिं वाचयीत । अत ऊर्ध्वमक्षारालवणाशी ब्रह्मचार्यधःशायी त्रिरात्रं द्वादशरात्रं संवत्सरं वा । चरितव्रताय मेधाजननं करोति । अनिन्दितायां दिश्येकमूलं पलाशं कुशस्तम्बं वा पलाशापचारे प्रदक्षिणमुदकुम्भेन त्रिः परिषिञ्चन्वाचयति । सुश्रवः सुश्रवा असि यथा त्वं सुश्रवः सुश्रवा असेवं मां सुश्रवः सौश्रवसं

कुरु । यथा त्वं देवानां यज्ञस्य निधिपो ऽस्येवमहं मनुष्याणां वेदस्य निधिपो भूयासमिति । एतेन वपनादि परिदानान्तं व्रतादेशनं व्याख्यातम् । इत्यनुपेतपूर्वस्य । अथोपेतपूर्वस्य । कृताकृतं केशवपनं मेधाजननं च । अनिरुक्तं परिदानं कालश्च । तत्सवितुर्वृणीमहे (RV. 5, 82, 1) इति सावित्रीम् ।

---

## VII. Mahābhārata.

### 1. Das Buch Pauṣya (1, 3).

सौतिरुवाच ।

जनमेजयः पारिक्षितः सह भ्रातृभिः कुरुक्षेत्रे दीर्घसत्त्रमुपास्ते स्म । तस्य भ्रातरस्त्रयः श्रुतसेन उग्रसेनो भीमसेन इति । तेषु तत्सत्त्रमुपासीनेष्वागच्छत्सारमेयः । स जनमेजयस्य भ्रातृभिरभिहतो रोरूयमाणो मातुः समीपमुपागच्छत् । तं माता रोरूयमाणमुवाच । किं रोदिषि केनास्यभिहत इति । स एवमुक्तो मातरं प्रत्युवाच । जनमेजयस्य भ्रातृभिरभिहतो ऽस्मीति । तं माता प्रत्युवाच । व्यक्तं त्वया तत्रापराद्धं येनास्यभिहत इति । स तां पुनरुवाच । नापराध्यामि किं चिन्नावेक्षे हवींषि नावलिह इति । तच्छ्रुत्वा तस्य माता सरमा पुत्रदुःखार्ता तत्सत्त्रमुपागच्छद्यत्र स जनमेजयः सह भ्रातृभिर्दीर्घसत्त्रमुपास्ते । स तया क्रुद्धया तत्रोक्तः । अयं मे पुत्रो न किं चिदपराध्यति नावेक्षते हवींषि नावलेढि किमर्थमभिहत इति । न किं चिदुक्तवन्तस्ते । सा तानुवाच । यस्मादभिहतो ऽनपकारी तस्माददृष्टं त्वां भयमागमिष्यतीति । जनमेजय एवमुक्तो देवशुन्या सरमया भृशं संभ्रान्तो विषण्णश्चासीत् ।

स तस्मिन्सत्त्रे समाप्ते हास्तिनपुरं प्रत्येत्य पुरोहितमनुरूपमन्विष्यमाणः परं यत्नमकरोत् । यो मे पापकृत्यां शमयेदिति । स कदा चिन्मृगयां यातः पारिक्षितो जनमेजयः कस्मिंश्चित्स्वविषय आश्रममपश्यत् । तत्र कश्चिदृषिरासां चक्रे श्रुतश्रवा नाम । तस्याभिमतः पुत्र आस्ते सोमश्रवा नाम । तस्य तं पुत्रमभिगम्य जनमेजयः पारिक्षितः पौरोहित्याय वव्रे । स नमस्कृत्य तमृषिमुवाच । भगवन्नयं तव पुत्रो मम पुरोहितो ऽस्त्विति । स एवमुक्तः प्रत्युवाच जनमेजयम् । भो जनमेजय पुत्रो ऽयं मम सर्प्यां जातः । महातपस्वी स्वाध्यायसंपन्नो मत्तपोवीर्यसंभृतो मच्छुक्रं पीतवत्यास्तस्याः कुक्षौ संवृद्धः । समर्थो ऽयं भवतः सर्वाः पापकृत्याः शमयितुमन्तरेण महादेव-

कृत्याम् । अस्य त्वेकमुपांशुव्रतम् । यदेनं कश्चिद्ब्राह्मणः कं चिदर्थमभियाचेत्तस्मै दद्यादयम् । यद्येतदुत्सहसे ततो नयस्वैनमिति । तेनैवमुक्तो जनमेजयस्तं प्रत्युवाच । भगवन् । तत्तथा भविष्यतीति ।

स तं पुरोहितमुपादायोपावृत्तो भ्रातॄनुवाच । मयायं वृत उपाध्यायः । यदयं ब्रूयात्तत्कार्यमविचारयद्भिर्भवद्भिरिति । तेनैवमुक्ता भ्रातरस्तस्य तथा चक्रुः । स तथा भ्रातॄन्संदिश्य तक्षशिलां प्रत्यभिप्रतस्थे तं च देशं वशे स्थापयामास ।

एतस्मिन्नन्तरे कश्चिदृषिर्धौम्यो नामायोदः । तस्य शिष्यास्त्रयो बभूवुरुपमन्युरारुणिर्वेदश्चेति । स एकं शिष्यमारुणिं पाञ्चाल्यं प्रेषयामास । गच्छ केदारखण्डं बधानेति । स उपाध्यायेन संदिष्ट आरुणिः पाञ्चाल्यस्तत्र गत्वा तत्केदारखण्डं बद्धुं नाशकत् । स क्लिश्यमानोऽपश्यदुपायम् । भवत्वेवं करिष्यामीति । स तत्र संविवेश केदारखण्डे । शयाने तु तस्मिंस्तदुदकं तस्थौ ।

ततः कदा चिदुपाध्याय आयोदो धौम्यः शिष्यानपृच्छत् । क्वारुणिः पाञ्चाल्यो गत इति । ते तं प्रत्यूचुः । भगवन् । त्वयैव प्रेषितो गच्छ केदारखण्डं बधानेति । स एवमुक्तस्तांछिष्यान्प्रत्युवाच । तस्मात्सर्वे तत्र गच्छामो यत्र स गत इति । स तत्र गत्वा तस्याह्वानाय शब्दं चकार । भो आरुणे पाञ्चाल्य क्वासि वत्सैहीति । स तच्छ्रुत्वारुणिरुपाध्यायवाक्यं तस्मात्केदारखण्डात्सहसोत्थाय तमुपाध्यायमुपतस्थे । प्रोवाच चैनम् । अयमस्मि । अत्र केदारखण्डे निःसरमाणमुदकमवारणीयं संरोद्धुं संविष्टो भगवच्छब्दं श्रुत्वैव सहसा विदार्य केदारखण्डं भवन्तमुपस्थितः । तदभिवादये भगवन्तम् । आज्ञापयतु भवान् । कमर्थं करवाणीति । तमुपाध्यायः प्रत्युवाच । यस्माद्भवान्केदारखण्डं विदार्योत्थितस्तस्मादुद्दालक एव नाम्ना भवान्भविष्यति । यस्माच्च त्वया मद्वचनमनुष्ठितं तस्माच्छ्रेयोऽवाप्स्यसि । सर्वे च ते वेदाः प्रतिभास्यन्ति सर्वाणि च धर्मशास्त्राणीति । स एवमुक्त उपाध्यायेनेष्टं देशं जगाम ।

अथापरः शिष्यस्तस्यैवायोदस्य धौम्यस्योपमन्युर्नाम । तं चोपाध्यायः प्रेषयामास । वत्सोपमन्यो गा रक्षस्वेति । स उपाध्यायवचनादरक्षद्गाः । स चाहनि गा रक्षित्वा दिवसक्षये गुरुगृहमागम्योपाध्यायस्याग्रतः स्थित्वा नमश्चक्रे । तमुपाध्यायः पीवानमपश्यत् । उवाच चैनम् । वत्सोपमन्यो केन वृत्तिं कल्पयसि पीवानसि दृढमिति । स उपाध्यायं प्रत्युवाच । भो भैक्षेण वृत्तिं कल्पयामीति । तमुपाध्यायः प्रत्युवाच । मय्यनिवेद्य भैक्षं नोपयोक्तव्यमिति । स तथेत्युक्त्वा पुनररक्षद्गाः । अन्यद्धिकं भैक्षं चरित्वोपाध्यायाय

न्यवेदयत् । स तस्मादुपाध्याय सर्वमेव भैक्षमगृह्णात् । स तथेत्युक्त पुनररक्षद्गा । अहनि रक्षित्वा निशामुखे गुरुकुलमागम्य गुरोरग्रत स्थित्वा नमश्चक्रे । तमुपाध्यायस्तथापि पीवानमेव दृष्ट्वोवाच । वत्सोपमन्यो सर्वमशेषतस्ते भैक्षं गृह्णामि केनेदानीं वृत्तिं कल्पयसीति । स एवमुक्तस्तमुपाध्यायं प्रत्युवाच । भगवते निवेद्य पूर्वमपरं चरामि तेन वृत्तिं कल्पयामीति । तमुपाध्याय प्रत्युवाच । नैषा न्याय्या गुरुवृत्ति । अन्येषामपि भैक्षोपजीविनां वृत्त्युपरोधं करोष्येवं वर्तमान । लुब्धो ऽसीति । स तथेत्युक्त्वा गा अरक्षत् । रक्षित्वा च पुनरुपाध्यायगृहमागम्योपाध्यायस्याग्रत स्थित्वा नमश्चक्रे । तमुपाध्यायस्तथापि पीवानमेव दृष्ट्वा पुनरुवाच । वत्सोपमन्यो । अहं ते सर्वं भैक्षं गृह्णामि न चान्यच्चरसि पीवानसि भृशं केन वृत्तिं कल्पयसीति । स एवमुक्तस्तमुपाध्यायं प्रत्युवाच । भो एतासां गवां पयसा वृत्तिं कल्पयामीति । तमुपाध्याय प्रत्युवाच । नैतन्न्याय्यं पय उपयोक्तुं भवतो मया नाभ्यनुज्ञातमिति । स तथेति प्रतिज्ञाय गा रक्षित्वा पुनरुपाध्यायगृहमेत्य गुरोरग्रत स्थित्वा नमश्चक्रे । तमुपाध्याय पीवानमेव दृष्ट्वोवाच । वत्सोपमन्यो भैक्षं नाश्नासि न चान्यच्चरसि पयो न पिबसि पीवानसि भृशं केनेदानीं वृत्तिं कल्पयसीति । स एवमुक्त उपाध्यायं प्रत्युवाच । भो फेनं पिबामि यमिमे वत्सा मातॄणां स्तनान्पिबन्त उद्गिरन्तीति । तमुपाध्याय प्रत्युवाच । एते त्वदनुकम्पया गुणवन्तो वत्सा प्रभूततरं फेनमुद्गिरन्ति । तदेषामपि वत्सानां वृत्त्युपरोधं करोष्येवं वर्तमान । फेनमपि भवान्न पातुमर्हतीति । स तथेति प्रतिश्रुत्य पुनररक्षद्गा । तथा प्रतिषिद्धो भैक्षं नाश्नाति न चान्यच्चरति पयो न पिबति फेनं नोपयुङ्क्ते । स कदा चिदरण्ये क्षुधार्तो ऽर्कपत्राण्यभक्षयत् । स तैरर्कपत्रैर्भक्षितैः क्षारतिक्तकटुरूक्षैस्तीक्ष्णविपाकैश्चक्षुष्युपहतो ऽन्धो बभूव । तत सो ऽन्धो ऽपि चङ्क्रम्यमाण कूपे पपात । अथ तस्मिन्ननागच्छति सूर्ये चास्ताचलावलम्बिन्युपाध्याय शिष्यानवोचत् । मयोपमन्यु सर्वत प्रतिषिद्ध । स नियत कुपित । ततो नागच्छति चिरम् । ततो ऽन्वेष्य इति । एवमुक्त्वा शिष्यै सार्धमरण्यं गत्वा तस्याह्वानाय शब्द चकार । भो उपमन्यो क्वासि वत्सैहीति । स उपाध्यायवचनं श्रुत्वा प्रत्युवाचोच्चै । अयमस्मिन्कूपे पतितो ऽहमिति । तमुपाध्याय प्रत्युवाच । कथ त्वमस्मिन्कूपे पतित इति । स उपाध्याय प्रत्युवाच । अर्कपत्राणि भक्षयित्वान्धीभूतो ऽस्मि । अत कूपे पतित इति । तमुपाध्याय प्रत्युवाच । अश्विनौ स्तुहि । तौ देवभिषजौ त्वां चक्षुष्मन्त कर्ताराविति । स एवमुक्त उपाध्यायेनोपमन्यु स्तोतुमुपचक्रमे देवावश्विनावृग्भिर्वाग्भि ।

एवं तावभिष्टुतावश्विनावाजग्मतुः । आहतुश्चैनम् । प्रीतौ स्वः । एष ते ऽपूपः । अशानैनमिति । स एवमुक्तः प्रत्युवाच । नानृतपूर्वमूचतुर्भगवन्तौ । न त्वहमेतमपूपमुपयोक्तुमुत्सहे गुरवे ऽनिवेद्येति । ततस्तमश्विनावूचतुः । आवाभ्यां पुरस्ताद्भवत उपाध्यायेनैवमेवाभिष्टुताभ्यामपूपो दत्तः । उपयुक्तः स तेनानिवेद्य गुरवे । त्वमपि तथैव कुरुष्व यथा कृतमुपाध्यायेनेति । स एवमुक्तः प्रत्युवाच । एतत्प्रत्यनुनये भवन्तावश्विनौ । नोत्सहे ऽहमनिवेद्य गुरवे ऽपूपमेतमुपयोक्तुमिति । तमश्विनावाहतुः । प्रीतौ स्वस्तवानया गुरुभक्त्या । उपाध्यायस्य ते कार्ष्णायसा दन्ता भवतो हिरण्मया भविष्यन्ति चक्षुष्मांश्च भविष्यसि श्रेयश्चावाप्स्यसीति । स एवमुक्तो ऽश्विभ्यां लब्धचक्षुरुपाध्यायसकाशमागम्योपाध्यायमभ्यवादयत् । आचचक्षे च । स चास्य प्रीतिमान्बभूव । आह चैनम् । यथाश्विनावाहतुस्तथा त्वं श्रेयो ऽवाप्स्यसि सर्वे च ते वेदाः प्रतिभास्यन्ति सर्वाणि च धर्मशास्त्राणीति । एषा तस्यापि परीक्षोपमन्योः ।

अथापरः शिष्यस्तस्यैवायोदस्य धौम्यस्य वेदो नाम । तमुपाध्यायः समादिदेश । वत्स वेद । इहास्यतां च मद्गृहे कं चित्कालम् । शुश्रूषुणा च भवितव्यम् । श्रेयस्ते भविष्यतीति । स तथेत्युक्त्वा गुरुकुले दीर्घकालं गुरुशुश्रूषापरो ऽवसद्गौरिव नित्यं गुरुधूर्षु नियुज्यमानः शीतोष्णक्षुत्तृष्णादुःखसहः सर्वत्राप्रतिकूलः । तस्य महता कालेन गुरुः परितोषं जगाम । तत्परितोषाच्च श्रेयः सर्वज्ञतां चावाप । एषा तस्यापि परीक्षा वेदस्य ।

स उपाध्यायेनानुज्ञातः समावृत्तस्तस्माद्गुरुकुलवासाद्गृहाश्रमं प्रत्यपद्यत । तस्यापि स्वगृहे वसतस्त्रयः शिष्या बभूवुः । स शिष्यान्न किं चिदुवाच । कर्म वा क्रियतां गुरुशुश्रूषा वेति । दुःखाभिज्ञो हि गुरुकुलवासस्य शिष्यान्परिक्लेशेन योजयितुं नेयेष । अथ कस्मिंश्चित्काले वेदं ब्राह्मणं जनमेजयः पौष्यश्च क्षत्रियावुपेत्य वरयित्वोपाध्यायं चक्रतुः । स कदा चिद्याज्यकार्येणाभिप्रस्थित उत्तङ्कं नाम शिष्यं नियोजयामास । भो उत्तङ्क यत्किं चिदस्मद्गृहे परिहीयेत तदिच्छाम्यहमपरिहीयमाणं भवता क्रियमाणमिति । स एवं प्रतिसंदिश्योत्तङ्कं वेदः प्रवासं जगाम । अथोत्तङ्कः शुश्रूषुर्गुरुनियोगमनुतिष्ठमानो गुरुकुले वसति स्म । स तत्र वसमान उपाध्यायस्त्रीभिः सहिताभिराहूयोक्तः । उपाध्यायानी त ऋतुमती । उपाध्यायश्च ते प्रोषितः । अस्या यथायमृतुर्वन्ध्यो न भवति तथा क्रियताम् । एषा विषीदतीति । स एवमुक्तस्ताः स्त्रियः प्रत्युवाच । न मया स्त्रीणां वचनादिदमकार्यं करणीयम् । न ह्यहमुपाध्यायेन संदिष्टः । अकार्यमपि त्वया कार्यमिति । तस्य पुनरुपाध्यायः कालान्तरेण गृहमाजगाम तस्मात्प्रवासात् । स

तु तद्वृत्त तस्याशेषमुपलभ्य प्रीतिमानभूत् । उवाच चैनम् । वत्सोत्तङ्क कि ते प्रिय करवाणि । धर्मतो हि शुश्रूषितो ऽस्मि भवता । तेन प्रीति परस्परेण नौ संवृद्धा । तदनुजाने भवन्तम् । सर्वानेव कामानवाप्स्यसि । गम्यतामिति । स एवमुक्त प्रत्युवाच । किं ते प्रिय करवाणि । एव ह्याहु ।

यश्चाधर्मेण वै ब्रूयाद्यश्चाधर्मेण पृच्छति ।
तयोरन्यतर प्रैति विद्वेष वाधिगच्छति ।

सो ऽहमनुज्ञातो भवतेच्छामीष्टं गुर्वर्थमुपाहर्तुमिति । तेनैवमुक्त उपाध्याय प्रत्युवाच । वत्सोत्तङ्क । उष्यता तावदिति । स कदा चिदुपाध्यायमाहोत्तङ्क । आज्ञापयतु भवान् । किं ते प्रियमुपाहरामि गुर्वर्थमिति । तमुपाध्याय प्रत्युवाच । वत्सोत्तङ्क बहुशो मा चोदयसि गुर्वर्थमुपाहरामीति । तद्गच्छ । एना प्रविश्योपाध्यायानी पृच्छ किमुपाहरामीति । एषा यद्ब्रवीति तदुपाहरस्वेति । स एवमुक्त उपाध्यायेनोपाध्यायानीमपृच्छत् । भवति । उपाध्यायेनास्म्यनुज्ञातो गृहं गन्तुम् । इच्छामीष्टं गुर्वर्थमुपाहृत्यानृणो गन्तुम् । तदाज्ञापयतु भवती किमुपाहरामि गुर्वर्थमिति । सैवमुक्तोपाध्यायानी तमुत्तङ्क प्रत्युवाच । गच्छ पुत्र पौष्य प्रति राजानं कुण्डले भिक्षितु तस्य क्षत्रियया पिनद्धे । ते आनयस्व । चतुर्थे ऽहनि पुण्यकं भविता । ताभ्यामाबद्धाभ्या शोभमाना ब्राह्मणान्परिवेष्टुमिच्छामि । तत्संपादयस्व । एव हि कुर्वत श्रेयो भविता । अन्यथा श्रेय कुत इति ।

स एवमुक्त उपाध्यायान्या प्रातिष्ठतोत्तङ्क । स पथि गच्छन्नपश्यदृषभमतिप्रमाण तमधिरूढ च पुरुषमतिप्रमाणमेव । स पुरुष उत्तङ्कमभ्यभाषत । भो उत्तङ्क । एतत्पुरीषमस्यर्षभस्य भक्षयस्वेति । स एवमुक्तो नैच्छत् । तमाह पुरुषो भूय । भक्षयस्वोत्तङ्क मा विचारय । उपाध्यायेनापि ते भक्षितं पूर्वमिति । स एवमुक्तो बाढमित्युक्त्वा तदा तदृषभस्य मूत्रं पुरीषं च भक्षयित्वोत्तङ्क सम्भ्रान्त स्थित एवोपस्पृश्य प्रतस्थे यत्र स क्षत्रिय पौष्य । तमुपासीनमपश्यदुत्तङ्क । स उत्तङ्कस्तमुपेत्याशीर्भिरभिनन्द्योवाच । अर्थी भवन्तमुपगतो ऽस्मीति । स एनमभिवाद्योवाच । भगवन् । पौष्य खल्वहम् । किं करवाणीति । स तमुवाच । गुर्वर्थं कुण्डलयोरर्थेनाभ्यागतो ऽस्मि । ये ते मे क्षत्रियया पिनद्धे कुण्डले ते भवान्दातुमर्हतीति । तं पौष्य प्रत्युवाच । प्रविश्यान्तःपुरं क्षत्रिया याच्यतामिति । स तेनैवमुक्त प्रविश्यान्तःपुरं क्षत्रियां नापश्यत् । स पौष्यं पुनरुवाच । न युक्तं भवताहमनृतेनोपचरितुम् । न हि ते ऽन्तःपुरे क्षत्रिया संनिहिता । नैनां पश्यामीति । स एवमुक्त पौष्य क्षणमात्रं विमृश्योत्तङ्कं प्रत्युवाच । नियतं भवानुच्छिष्ट । स्मर तावत् । न हि सा क्षत्रियोच्छिष्टेनाशुचिना शक्या द्रष्टुम् । पतिव्रतात्वादेषा नाशु

चेदर्शनमुपैतीति । अथैवमुक्त उत्तङ्कः स्मृत्वोवाच । अस्ति खलु मयोत्थितेनोपस्पृष्टं गच्छता चेति । तं पौष्य प्रत्युवाच । एष ते व्यतिक्रमः । नोत्थितेनोपस्पृष्टं भवति गच्छता चेति । अथोत्तङ्कस्तं तथेत्युक्त्वा प्राङ्मुख उपविश्य सुप्रक्षालितपाणिपादवदनो निःशब्दाभिरफेनाभिरनुष्णाभिर्हृद्गताभिरद्भिरुपस्पृश्य द्विः परिमृज्य खान्यद्भिरुपस्पृश्य चान्तःपुरं प्रविवेश । ततस्तां क्षत्रियामपश्यत् । सा च दृष्ट्वैवोत्तङ्कं प्रत्युत्थायाभिवाद्योवाच । स्वागतं ते भगवन् । आज्ञापय किं करवाणीति । स तामुवाच । एते कुण्डले गुर्वर्थं मे भिक्षिते दातुमर्हसीति । सा प्रीता तेन तस्य सद्भावेन पात्रमयमनतिक्रमणीयश्चेति मत्वा ते कुण्डले अवमुच्यास्मै प्रायच्छत् । आह चैनम् । एते कुण्डले तक्षको नागराजः सुभृशं प्रार्थयति । अप्रमत्तो नेतुमर्हसीति । स एवमुक्तस्तां क्षत्रियां प्रत्युवाच । भवति सुनिर्वृता भव । न मां शक्तस्तक्षको नागराजो धर्षयितुमिति । स एवमुक्त्वा तां क्षत्रियामामन्त्र्य पौष्यसकाशमागच्छत् । आह चैनम् । भोः पौष्य प्रीतोऽस्मीति । तमुत्तङ्कं पौष्यः प्रत्युवाच । भगवन् । चिरस्य पात्रमासाद्यते भवांश्च गुणवानतिथिः । तदिच्छे श्राद्धं कर्तुम् । क्रियतां क्षण इति । तमुत्तङ्कः प्रत्युवाच । कृतक्षण एवास्मि । शीघ्रमिच्छामि यथोपपन्नमन्नमुपस्कृतं भवतेति । स तथेत्युक्त्वा यथोपपन्नेनान्नेनैनं भोजयामास । अथोत्तङ्कः सकेशं शीतमन्नं दृष्ट्वा अशुच्येतदिति मत्वा तं पौष्यमुवाच । यस्मान्मे ऽशुच्यन्नं ददासि तस्मादन्धो भविष्यसीति । तं पौष्यः प्रत्युवाच । यस्मात्त्वमप्यदुष्टमन्नं दूषयसि तस्मात्त्वमनपत्यो भविष्यसीति । तमुत्तङ्कः प्रत्युवाच । न युक्तं भवतान्नमशुचि दत्त्वा प्रतिशापं दातुम् । तस्मादन्नमेव प्रत्यक्षीकुर्विति । ततः पौष्यस्तदन्नमशुचि दृष्ट्वा तस्याशुचिभावमपरीक्षयामास । अथ तदन्नं मुक्तकेश्या स्त्रियोपहृतमनुष्णं सकेशं चाशुच्येतदिति मत्वा तमृषिमुत्तङ्कं प्रसादयामास । भगवन् । अज्ञानादेतदन्नं सकेशमुपहृतं शीतं च । तस्मात्क्षामये भवन्तम् । न भवेयमन्ध इति । तमुत्तङ्कः प्रत्युवाच । न मृषा ब्रवीमि । भूत्वा त्वमन्धो नचिरादनन्धो भविष्यसि । ममापि तु शापो न भवेद्भवता दत्त इति । तं पौष्यः प्रत्युवाच । न चाहं शक्तः शापं प्रत्यादातुम् । नहि मे मन्युरद्याप्युपशमं गच्छति । किं चैतद्भवता न ज्ञायते यथा

नावनीतं हृदयं ब्राह्मणस्य वाचि क्षुरो निशितस्तीक्ष्णधारः ।
तदुभयं विपरीतं क्षत्रियस्य वाङ्नावनीती हृदयं तीक्ष्णधारम् ॥

इति । तदेवं गते न शक्तोऽहं तीक्ष्णहृदयत्वात्तं शापमन्यथा कर्तुम् । गम्यतामिति । तमुत्तङ्कः प्रत्युवाच । भवताहमन्नस्याशुचिभावमालक्ष्य प्रत्यनुनीतः । प्राक्च ते ऽभिहितम् । यस्माददुष्टमन्नं दूषयसि तस्मादनपत्यो

भविष्यसीति । दुष्टे चान्ने नैष मम शापो भविष्यतीति । साधयामस्तावदित्युक्त्वा ते कुण्डले गृहीत्वा प्रातिष्ठतोत्तङ्क । सो ऽपश्यदथ पथि नग्नं चपणकमागच्छन्त मुहुर्मुहुर्दृश्यमानमदृश्यमान च । अथोत्तङ्कस्ते कुण्डले स न्यस्य भूमावुदकार्थं प्रचक्रमे । एतस्मिन्नन्तरे स चपणकस्त्वरमाण उपसृत्य ते कुण्डले गृहीत्वा प्राद्रवत् । तमुत्तङ्को ऽभिसृत्य कृतोदककार्य शुचि प्रयतो नमो देवेभ्यो गुरुभ्यश्च कृत्वा महता जवेन तमन्वयात् । तस्य चपणको दृढमासन्न । स त जग्राह । गृहीतमात्र स तद्रूपं विहाय तक्षकस्वरूप कृत्वा सहसा धरण्या विवृत महाबिल प्रविवेश । प्रविश्य च नागलोकं स्वभवनमगच्छत् । अथोत्तङ्कस्तस्या क्षत्रियाया वच स्मृत्वा तं तक्षकमन्वगच्छत् । स तद्बिलं दण्डकाष्ठेन चखान । न चाशकत् । तं क्लिश्यमानमिन्द्रो ऽपश्यत् । स वज्र प्रेषयामास । गच्छ । अस्य ब्राह्मणस्य साहाय्यं कुरुष्वेति । अथ वज्रो दण्डकाष्ठमनुप्रविश्य तद्बिलमदारयत् । तमुत्तङ्को ऽनुविवेश तेनैव बिलेन । प्रविश्य च त नागलोकमपर्यन्तमनेकविधप्रासादहर्म्यवलभीनिर्यूहशतसकुलमुच्चावचक्रीडाश्चर्यस्थानावकीर्णमपश्यत् । स तत्र नागांस्तानस्तुवदेभि श्लोकै ।

य ऐरावतराजान सर्पा समितिशोभना ।
चरन्त इव जीमूता सविद्युत्पवनेरिता ॥ १ ॥
सुरूपा बहुरूपाश्च तथा कल्माषकुण्डला ।
आदित्यवन्नाकपृष्ठे रेजुरैरावतोद्भवा ॥ २ ॥
बहूनि नागवेश्मानि गङ्गायास्तीर उत्तरे ।
तत्रस्थानपि सस्तौमि महत, पन्नगानहम् ॥ ३ ॥
शतान्यशीतिरष्टौ च सहस्राणि च विंशति ।
सर्पाणा प्रग्रहा यान्ति धृतराष्ट्रे समेजति ॥ ४ ॥
ये चैनमुपसर्पन्ति ये च दूरपथ गता ।
अहमैरावतज्येष्ठभ्रातृभ्यो ऽकरवं नम ॥ ५ ॥
यस्य वास कुरुक्षेत्रे खाण्डवे चाभवत्पुरा ।
तं नागराजमस्तौषं कुण्डलार्थाय तक्षकम् ॥ ६ ॥
तक्षकश्चाश्वसेनश्च नित्यं सहचरावुभौ ।
कुरुक्षेत्रे न्यवसता नदीमिक्षुमतीमनु ॥ ७ ॥
जघन्यजस्तक्षकस्य श्रुतसेनेति य श्रुत ।
अवसद्यो महद्युम्नि प्रार्थयन्नागमुख्यताम् ॥ ८ ॥

एवं स्तुवन्नपि नागान्यदा ते कुण्डले नालभत तदापश्यत्स्त्रियौ तन्त्रे ऽधिरोप्य सुवेमे पट वयन्त्यौ । तस्मिंश्च तन्त्रे कृष्णा सिताश्च तन्तव । चक्रं

चापश्यद्द्वादशारं षडभि कुमारै परिवर्त्यमानम् । पुरुषं चापश्यदश्वं च दर्शनीयम् । स तान्सर्वांस्तुष्टावैभिर्मन्त्रवादश्लोकै ।

त्रीण्यर्पितान्यत्र शतानि मध्ये षष्टिश्च नित्यं चरति ध्रुवे ऽस्मिन् ।
चक्रे चतुर्विंशतिपर्वयोगे षट् तत्कुमारा परिवर्तयन्ति ॥ १ ॥
तन्त्रं चेदं विश्वरूपं युवत्यौ वयतस्तन्तून्सततं वर्तयन्त्यौ ।
कृष्णान्सिताश्चैव विवर्तयन्त्यौ भूतान्यजस्रं भुवनानि चैव ॥ २ ॥
वज्रस्य भर्ता भुवनस्य गोप्ता वृत्रस्य हन्ता नमुचेर्निहन्ता ।
कृष्णे वसानो वसने महात्मा सत्यानृते यो विविनक्ति लोके ॥ ३ ॥
यो वाजिनं गर्भमपां पुराणं वैश्वानरं वाहनमभ्युपैति ।
नमो ऽस्तु तस्मै जगदीश्वराय लोकत्रयेशाय पुरंदराय ॥ ४ ॥

तत स एनं पुरुष प्राह । प्रीतो ऽस्मि ते ऽहमनेन स्तोत्रेण । किं ते प्रियं करवाणीति । स तमुवाच । नागा मे वशमीयुरिति । स चैनं पुरुष पुनरुवाच । एतमश्वमपाने धमस्वेति । ततो ऽश्वस्यापानमधमत् । ततो ऽश्वाद्धम्यमानात्सर्वस्रोतोभ्य पावकार्चिष सधूमा निष्पेतु । ताभिर्नागलोक उपधूपित । अथ संभ्रान्तस्तक्षको ऽग्नेस्तेजोभयाद्विषण्ण कुण्डले गृहीत्वा सहसा स्वभवनान्निष्क्रम्योत्तङ्कमुवाच । इमे कुण्डले गृह्णातु भवानिति । स ते प्रतिजग्राहोत्तङ्क । प्रतिगृह्य च कुण्डले अचिन्तयत् । अद्य तत्पुण्यकमुपाध्यायान्या । दूरं चाहम् । अभ्यागत स कथं संभावयेयमिति । तत एनं चिन्तयानमेव स पुरुष उवाच । उत्तङ्क । एतमेवाश्वमधिरोह । एष त्वां क्षणेनैवोपाध्यायकुलं प्रापयिष्यतीति । स तथेत्युक्त्वा तमश्वमधिरुह्य प्रत्याजगामोपाध्यायकुलम् । उपाध्यायानी च स्नाता केशानावापयन्त्युपविष्टा उत्तङ्को नागच्छतीति शापायास्य मनो दधे । अथैतस्मिन्नन्तरे स उत्तङ्क प्रविश्योपाध्यायकुलमुपाध्यायानीमभ्यवादयत् । ते चास्यै कुण्डले प्रायच्छत् । सा चैनं प्रत्युवाच । उत्तङ्क देशे काले ऽभ्यागतो ऽसि । स्वागतं ते वत्स । त्वमनागसि मया न शप्त । श्रेयस्तवोपस्थितम् । सिद्धिमाप्नुहीति । अथोत्तङ्कस्तमुपाध्यायमभ्यवादयत् । तमुपाध्याय प्रत्युवाच । वत्सोत्तङ्क स्वागतं ते । किं चिरं कृतमिति । तमुत्तङ्क उपाध्यायं प्रत्युवाच । भो । तक्षकेण मे नागराजेन विघ्न कृतो ऽस्मिन्कर्मणि । तेनास्मि नागलोकं गत । तत्र च मया दृष्टे स्त्रियौ तन्त्रे ऽधिरोप्य पटं वयन्त्यौ । तस्मिंश्च तन्त्रे कृष्णा सिताश्च तन्तव । किं तत् । तत्र च मया चक्रं दृष्टं द्वादशारम् । षट् चैनत्कुमारा परिवर्तयन्ति । तदपि किम् । पुरुषश्चापि मया दृष्ट । स चापि क । अश्वश्चातिप्रमाणो दृष्ट । स चापि क । पथि गच्छता च मयर्षभो दृष्टस्तं च पुरुषो ऽधिरूढ । तेनास्मि सोपचारमुक्त । उत्तङ्क ।

अस्यर्षभस्य पुरीष भक्षय । उपाध्यायेनापि ते भक्षितमिति । ततस्तस्य वचनान्मया तदृषभस्य पुरीषमुपयुक्तम् । स चापि क । तदेतद्भगवतोपदिष्टमिच्छेयं श्रोतुम् । किं तदिति । स तेनैवमुक्त उपाध्याय प्रत्युवाच । ये ते स्त्रियौ धाता विधाता च । ये च ते कृष्णा सिताश्च तन्तवस्ते रात्र्यहनी । यदपि तच्चक्र द्वादशार षट च कुमारा परिवर्तयन्ति ते षडृतव संवत्सर श्चक्रम् । य पुरुष स पर्जन्य । यो ऽश्व सो ऽग्नि । य ऋषभस्त्वया पथि गच्छता दृष्ट स ऐरावतो नागराट् । यश्चैनमधिरूढ पुरुष स चेन्द्र । यदपि ते भक्षित तस्यर्षभस्य पुरीष तदमृतम् । तेन खल्वसि तस्मिन्नागभवने न व्यापन्नस्त्वम् । स हि भगवानिन्द्रो मम सखा त्वदनुक्रोशादिममनुग्रहं कृतवान् । तस्मात्कुण्डले गृहीत्वा पुनरागतो ऽसि । तत्सौम्य गम्यताम् । अनुजाने भवन्तम् । श्रेयो ऽवाप्स्यसीति । स उपाध्यायेनानुज्ञातो भगवानुत्तङ्क क्रुद्धस्तक्षक प्रतिचिकीर्षमाणो हास्तिनपुर प्रतस्थे ।

स हास्तिनपुर प्राप्य नचिराद्विप्रसत्तम ।
समागच्छत राजानमुत्तङ्को जनमेजयम् ॥ १ ॥
पुरस्तक्षशिलातस्त निवृत्तमपराजितम् ।
सम्यग्विजयिन दृष्ट्वा समन्तान्मन्त्रिभिर्वृतम् ॥ २ ॥
तस्मै जयाशिष पूर्व यथान्याय प्रयुज्य स ।
उवाचैन वच काले शब्दसपन्नया गिरा ॥ ३ ॥
अन्यस्मिन्करणीये तु कार्ये पार्थिवसत्तम ।
बाल्यादिवान्यदेव त्व कुरुषे नृपसत्तम ॥ ४ ॥
एवमुक्तस्तु विप्रेण स राजा जनमेजय ।
अर्चयित्वा यथान्याय प्रत्युवाच द्विजोत्तमम् ॥ ५ ॥
आसा प्रजाना परिपालनेन स्व क्षत्रधर्म परिपालयामि ।
प्रब्रूहि मे कि करणीयमद्य येनासि कार्येण समागतस्त्वम् ॥ ६ ॥
स एवमुक्तस्तु नृपोत्तमेन द्विजोत्तम पुण्यकृता वरिष्ठ ।
उवाच राजानमदीनसत्त्व स्वमेव कार्य नृपते कुरुष्व ॥ ७ ॥
तक्षकेण महीन्द्रेन्द्र येन ते हिंसित पिता ।
तस्मै प्रतिकुरुष्व त्व पन्नगाय दुरात्मने ॥ ८ ॥
कार्यकाल च मन्ये ऽहं विधिदृष्टेन कर्मणा ।
तद्गच्छापचिति राजन्पितुस्तस्य महात्मन ॥ ९ ॥
तेन ह्यनपराधी स दष्टो दुष्टान्तरात्मना ।
पञ्चत्वमगमद्राजा वज्राहत इव द्रुम ॥ ॥ १० ॥

बलदर्पसमुत्सिक्तस्तक्षकः पन्नगाधमः ।
अकार्यं कृतवान्पापो यो ऽदशत्पितरं तव ॥ ११ ॥
राजर्षिवंशगोप्तारममरप्रतिमं नृपम् ।
यियासुं काश्यपं चैव न्यवर्तयत पापकृत् ॥ १२ ॥
होतुमर्हसि तं पापं ज्वलिते हव्यवाहने ।
सर्पसत्त्रे महाराज त्वरितं तद्विधीयताम् ॥ १३ ॥
एवं पितुश्चापचितिं कृतवांस्त्वं भविष्यसि ।
मम प्रियं च सुमहत्कृतं राजन्भविष्यति ॥ १४ ॥
कर्मणः पृथिवीपाल मम येन दुरात्मना ।
विघ्नः कृतो महाराज गुर्वर्थं चरतो ऽनघ ॥ १५ ॥
सौतिरुवाच ।
एतच्छ्रुत्वा स नृपतिस्तक्षकाय चुकोप ह ।
उत्तङ्कवाक्यहविषा दीप्तो ऽग्निर्हविषा यथा ॥ १६ ॥
अपृच्छत्स तदा राजा मन्त्रिणः स्वान्सुदुःखितः ।
उत्तङ्कस्यैव सांनिध्ये पितुः स्वर्गगतिं प्रति ॥ १७ ॥
तदैव हि स राजेन्द्रो दुःखशोकाप्लुतो ऽभवत् ।
यदैव वृत्तं पितरमुत्तङ्कादशृणोत्तदा ॥ १८ ॥

---

## 2. Ruru und die Schlangen (1, 8, 5—11, 19).

सौतिरुवाच ।
ऋषिरासीन्महान्पूर्वं तपोविद्यासमन्वितः ।
स्थूलकेश इति ख्यातः सर्वभूतहिते रतः ॥ १ ॥
एतस्मिन्नेव काले तु मेनकायां प्रजज्ञिवान् ।
गन्धर्वराजो विप्रर्षे विश्वावसुरिति श्रुतः ॥ २ ॥
अप्सरा मेनका तस्य तं गर्भं भृगुनन्दन ।
उत्ससर्ज यथाकालं स्थूलकेशाश्रमं प्रति ॥ ३ ॥
उत्सृज्य चैव तं गर्भं नद्यास्तीरे जगाम सा ।
अप्सरा मेनका ब्रह्मन्निर्दया निरपत्रपा ॥ ४ ॥
कन्याममरगर्भाभां ज्वलन्तीमिव च श्रिया ।
तां ददर्श समुत्सृष्टां नदीतीरे महानृषिः ॥ ५ ॥
स तां दृष्ट्वा तदा कन्यां स्थूलकेशो महानृषिः ।
जग्राह च द्विजश्रेष्ठः कृपाविष्टः पुपोष च ॥ ६ ॥

जातकाद्या क्रियास्तस्या विधिपूर्वं यथाक्रमम् ।
स्थूलकेशो महाभागश्चकार सुमहानृषि ॥ ७ ॥
प्रमदाभ्यो वरा सा तु सत्त्वरूपगुणान्विता ।
तत प्रमद्वरेत्यस्या नाम चक्रे महानृषि ॥ ८ ॥
तामाश्रमपदे तस्य रुरुर्दृष्ट्वा प्रमद्वराम् ।
बभूव किल धर्मात्मा मदनानुगतस्तदा ॥ ९ ॥
पितर सखिभि सो ऽथ श्रावयामास भार्गवम् ।
प्रमतिश्चाभ्ययाचत्तां स्थूलकेश यशस्विनम् ॥ १० ॥
तत प्रादात्पिता कन्यां रुरवे तां प्रमद्वराम् ।
विवाहं स्थापयित्वाग्रे नक्षत्रे भगदैवते ॥ ११ ॥
तत कतिपयाहस्य विवाहे समुपस्थिते ।
सखीभि क्रीडती सार्धं सा कन्या वरवर्णिनी ॥ १२ ॥
नापश्यत्सम्प्रसुप्तं वै भुजंगं तिर्यगायतम् ।
पदा चैनं समाक्रामन्मुमूर्षु कालचोदिता ॥ १३ ॥
स तु तस्या प्रमत्ताया चोदित कालधर्मणा ।
विषोपलिप्तान्दशनान्भृशमङ्गे न्यपातयत् ॥ १४ ॥
सा दष्टा तेन सर्पेण पपात सहसा भुवि ।
विवर्णा विगतश्रीका भ्रष्टाभरणचेतना ॥ १५ ॥
निरानन्दकरी तेषां बन्धूनां मुक्तमूर्धजा ।
व्यसुरप्रेक्षणीया सा प्रेक्षणीयतराभवत् ॥ १६ ॥
प्रसुप्तेवाभवच्चापि भुवि सर्पविषार्दिता ।
भूयो मनोहरतरा बभूव तनुमध्यमा ॥ १७ ॥
ददर्श तां पिता चैव ये चैवान्ये तपस्विन ।
विचेष्टमानां पतितां भूतले पद्मवर्चसम् ॥ १८ ॥
तत सर्वे द्विजवरा समाजग्मु कृपान्विता ।
स्वस्त्यात्रेयो महाजानु कुशिक शङ्खमेखल ॥ १९ ॥
भरद्वाज कौणकुत्स्य आर्ष्टिषेणो ऽथ गौतम ।
प्रमति सह पुत्रेण तथान्ये वनवासिन ॥ २० ॥
तां ते कन्यां ततो दृष्ट्वा भुजंगस्य विषार्दिताम् ।
रुरुदु कृपयाविष्टा रुरुस्त्वार्तो बहिर्ययौ ॥ २१ ॥
तेषु तत्रोपविष्टेषु ब्राह्मणेषु महात्मसु ।
रुरुरुक्रोश गहनं वनं गत्वा सुदु खित ॥ २२ ॥

शोकेनाभिहतः सो ऽथ विलप्य करुणं बहु ।
अब्रवीद्वचनं शोचन्प्रियां चिन्त्य प्रमद्वराम् ॥ २३ ॥
शेते सा भुवि तन्वङ्गी मम शोकविवर्धिनी ।
बान्धवानां च सर्वेषां किं नु दुःखमतः परम् ॥ २४ ॥
यदि दत्तं तपस्तप्तं गुरवो वा मया यदि ।
सम्यगाराधितास्तेन संजीवतु मम प्रिया ॥ २५ ॥
यथा च जन्मप्रभृति यतात्माहं धृतव्रतः ।
प्रमद्वरा तथाद्यैव समुत्तिष्ठतु भाविनी ॥ २६ ॥
एवं लालप्यतस्तस्य भार्यार्थे दुःखितस्य ह ।
देवदूतस्तदाभ्येत्य वाक्यमाह रुरुं वने ॥ २७ ॥
अभिधत्से ह यद्वाचा रुरो दुःखान्न तन्मृषा ।
न तु मर्त्यस्य धर्मात्मन्नायुरस्ति गतायुषः ॥ २८ ॥
गतायुरेषा कृपणा गन्धर्वाप्सरसोः सुता ।
तस्माच्छोके मनस्तात मा कृथास्त्वं कथं चन ॥ २९ ॥
उपायश्चात्र विहितः पूर्वं देवैर्महात्मभिः ।
तं यदीच्छसि कर्तुं त्वं प्राप्स्यसीह प्रमद्वराम् ॥ ३० ॥
रुरुरुवाच ।
क उपायः कृतो देवैर्ब्रूहि तत्त्वेन खेचर ।
करिष्ये ऽहं तथा श्रुत्वा त्रातुमर्हति नो भवान् ॥ ३१ ॥
देवदूत उवाच ।
आयुषो ऽर्धं प्रयच्छ त्वं कन्यायै भृगुनन्दन ।
एवमुत्थास्यति रुरो तव भार्या प्रमद्वरा ॥ ३२ ॥
रुरुरुवाच ।
आयुषो ऽर्धं प्रयच्छामि कन्यायै खेचरोत्तम ।
शृङ्गाररूपाभरणा प्रोत्तिष्ठतु प्रमद्वरा ॥ ३३ ॥
सौतिरुवाच ।
ततो गन्धर्वराजश्च देवदूतश्च सत्तमौ ।
धर्मराजमुपेत्येदं वचनं प्रत्यभाषताम् ॥ ३४ ॥
धर्मराजायुषो ऽर्धेन रुरोर्भार्या प्रमद्वरा ।
समुत्तिष्ठतु कल्याणी मृतेयं यदि मन्यसे ॥ ३५ ॥
धर्मराज उवाच ।
प्रमद्वरा रुरोर्भार्या देवदूत यदीच्छसि ।
उत्तिष्ठत्वायुषो ऽर्धेन रुरोरेव समन्विता ॥ ३६ ॥

सौतिरुवाच ।

एवमुक्ते ततः कन्या सोदतिष्ठत्प्रमद्वरा ।
रुरोस्तस्यायुषोऽर्धेन सुप्तेव वरवर्णिनी ॥ ३७ ॥
एतद्दृष्टं भविष्ये हि रुरोरुत्तमतेजसः ।
आयुषोऽतिप्रवृद्धस्य भार्यार्थेऽर्धमलुप्यत ॥ ३८ ॥
तत इष्टेऽहनि तयोः पितरौ चक्रतुर्मुदा ।
विवाहं तौ च रेमाते परस्परहितैषिणौ ॥ ३९ ॥
स लब्ध्वा दुर्लभां भार्यां पद्मकिञ्जल्कवर्चसम् ।
व्रतं चक्रे विनाशाय जिह्मगानां धृतव्रतः ॥ ४० ॥
स दृष्ट्वा जिह्मगं सर्पं तीव्रकोपसमन्वितः ।
अभिहन्ति यथासन्नं गृह्य प्रहरणं सदा ॥ ४१ ॥
स कदा चिद्वनं विप्रो रुरुरभ्यागमन्महत् ।
शयानं तत्र चापश्यड्डुण्डुभं वयसान्वितम् ॥ ४२ ॥
तत उद्यम्य दण्डं स कालदण्डोपमं तदा ।
जिघांसुः कुपितो विप्रस्तमुवाचाथ डुण्डुभः ॥ ४३ ॥
नापराध्यामि ते किं चिदहमद्य तपोधन ।
संरम्भात्तत्किमर्थं मामभिहंसि रुषान्वितः ॥ ४४ ॥

रुरुरुवाच ।

मम प्राणसमा भार्या दष्टासीद्भुजगेन ह ।
तत्र मे समयो घोर आत्मनोरग वै कृतः ॥ ४५ ॥
हन्यां सदैव फणिनं यं यं पश्येयमित्युत ।
ततोऽहं त्वां हनिष्यामि जीवितेनाद्य मोक्ष्यसे ॥ ४६ ॥

डुण्डुभ उवाच ।

अन्ये ते भुजगा विप्र ये दशन्तीह मानवान् ।
डुण्डुभानहिगन्धेन न त्वं हिंसितुमर्हसि ॥ ४७ ॥
एकानर्थान्पृथगर्थानेकदुःखान्पृथक्सुखान् ।
डुण्डुभान्धर्मविद्भूत्वा न त्वं हिंसितुमर्हसि ॥ ४८ ॥

सौतिरुवाच ।

इति श्रुत्वा वचस्तस्य डुण्डुभस्य रुरुस्तदा ।
नावधीद्भयसंविग्नमृषिं मत्वाथ डुण्डुभम् ॥ ४९ ॥
उवाच चैनं भगवान्रुरुः संशमयन्निव ।
कामया भुजग ब्रूहि कोऽसीमां विक्रियां गतः ॥ ५० ॥

डुण्डुभ उवाच ।
अहं पुरा रुरो नाम्ना ऋषिरास सहस्रपात् ।
सो ऽहं शापेन विप्रस्य भुजगत्वमुपागत ॥ ५१ ॥
रुरुरुवाच ।
किमर्थं शप्तवान्क्रुद्धो विप्रस्त्वां भुजगोत्तम ।
कियन्त चैव काल ते वपुरेतद्भविष्यति ॥ ५२ ॥
डुण्डुभ उवाच ।
सखा बभूव मे पूर्वं खगमो नाम वाडव ।
भृश संशितवाक्तात तपोबलसमन्वित ॥ ५३ ॥
स मया क्रीडता बाल्ये कृत्वा तार्णं भुजगमम् ।
अग्निहोत्रप्रसक्तो ऽसौ भीषित प्रमुमोह वै ॥ ५४ ॥
लब्ध्वा च स पुन सञ्ज्ञा मामुवाच तपोधन ।
निर्दहन्निव कोपेन सत्यवाक्संशितव्रत ॥ ५५ ॥
यथावीर्यस्त्वया सर्प कृतो ऽयं मद्विभीषया ।
तथावीर्यो भुजगस्त्व मम शापाद्भविष्यसि ॥ ५६ ॥
तस्याह तपसो वीर्यं जानान सस्तपोधन ।
भृशमुद्विग्नहृदयस्तमवोच वनौकसम् ॥ ५७ ॥
प्रणत संभ्रमाच्चैव प्राञ्जलि पुरत स्थित ।
सखे ऽतिसहसेद ते नर्मार्थं वै कृत मया ॥ ५८ ॥
क्षन्तुमर्हसि मे ब्रह्मञ्छापो ऽय विनिवर्त्यताम् ।
सो ऽथ मामब्रवीद्दृष्ट्वा भृशमुद्विग्नचेतसम् ॥ ५९ ॥
मुहुरुष्णं विनिश्वस्य सुसंभ्रान्तस्तपोधन ।
नानृत वै मया प्रोक्त भवितेद कथं चन ॥ ६० ॥
यत्तु वक्ष्यामि ते वाक्य शृणु तन्मे तपोधन ।
श्रुत्वा च हृदि ते वाक्यमिदमस्तु सदानघ ॥ ६१ ॥
उत्पत्स्यति रुरुनाम प्रमतेरात्मज शुचि ।
त दृष्ट्वा शापमोचस्ते भविता नचिरादिव ॥ ६२ ॥
स त्व रुरुरिति ख्यात प्रमतेरात्मजो ऽपि च ।
स्वरूप प्रतिपद्याहमिह वक्ष्यामि ते हितम् ॥ ६३ ॥
स डौण्डुभं परित्यज्य रूप विप्रर्षभस्तदा ।
इद चोवाच वचन रुरुमप्रतिमौजसम् ॥ ६४ ॥
अहिंसा परमो धर्म सर्वप्राणभृतां स्मृत ।
तस्मात्प्राणभृत सर्वान्न हिंस्याद्ब्राह्मण क्व चित् ॥ ६५ ॥

ब्राह्मण सौम्य एवेह जायतीति परा श्रुति ।
वेदवेदाङ्गवित्तात सर्वभूताभयप्रद ॥ ६६ ॥
अहिंसा सत्यवचन क्षमा चेति विनिश्चितम् ।
ब्राह्मणस्य परो धर्मो वेदानां धारणापि च ॥ ६७ ॥
क्षत्रियस्य च यो धर्म स हि नेष्येत वै तव ।
दण्डधारणमुग्रत्व प्रजाना परिपालनम् ॥ ६८ ॥
तदिदं क्षत्रियस्यासीत्कर्म वै शृणु मे रुरो ।
जनमेजयस्य धर्मात्मन्सर्पाणा हिंसनं पुरा ॥ ६९ ॥
परित्राण च भीताना सर्पाणा ब्राह्मणादपि ।
तपोवीर्यबलोपेताद्वेदवेदाङ्गपारगात् ॥ ७० ॥

---

## 3 Die Kinder der Kadrū und Vinatā (1, 16, 5–25)

सौतिरुवाच ।

पुरा देवयुगे ब्रह्मन्प्रजापतिसुते शुभे ।
आस्ता भगिन्यौ रूपेण समुपेते ऽद्भुते ऽनघ ॥ १ ॥
प्रादात्ताभ्या वर प्रीत प्रजापतिसम पति ।
कश्यपो धर्मपत्नीभ्यां मुदा परमया युत ॥ २ ॥
वरातिसर्गं श्रुत्वैव कश्यपादुत्तमं तु ते ।
हर्षादप्रतिमां प्रीतिं प्रापतु स्म वरस्त्रियौ ॥ ३ ॥
वव्रे कद्रू सुतान्नागान्सहस्रं तुल्यवर्चस ।
द्वौ पुत्रौ विनता वव्रे कद्रूपुत्राधिकौ बले ॥ ४ ॥
धार्यौ प्रयत्नत गर्भावित्युक्त्वा स महातपा ।
वर प्रदाय भार्याभ्यां कश्यपो वनमाविशत् ॥ ५ ॥
कालेन महता कद्रूरण्डानां दशतीर्दश ।
जनयामास विप्रेन्द्र द्वे चाण्डे विनता तदा ॥ ६ ॥
तयोरण्डानि निदधु प्रहृष्टा परिचारिका ।
सोपस्वेदेषु भाण्डेषु पञ्च वर्षशतानि च ॥ ७ ॥
तत पञ्चशते काले कद्रूपुत्रा विनि सृता ।
अण्डाभ्यां विनतायास्तु मिथुनं न व्यदृश्यत ॥ ८ ॥
तत पुत्रार्थिनी देवी व्रीडिता सा तपस्विनी ।
अण्डं बिभेद विनता तत्र पुत्रं ददर्श ह ॥ ९ ॥

पूर्वार्धकायसंपन्नमितरेणाप्रकाशता ।
स पुत्रो रोषसंपन्नः शशापैनामिति श्रुतिः ॥ १० ॥
यो ऽहमेव कृतो मातस्त्वया लोभपरीतया ।
शरीरेणासमग्रो ऽद्य तस्माद्दासी भविष्यसि ॥ ११ ॥
पञ्च वर्षशतान्यस्या यया विस्पर्धसे सह ।
एष च त्वां सुतो मातर्दास्याद्वै मोचयिष्यति ॥ १२ ॥
यद्येनमपि मातस्त्वं मामिवाण्डविभेदनात् ।
न करिष्यस्यनङ्गं वा व्यङ्गं वापि तपस्विनम् ॥ १३ ॥
प्रतिपालयितव्यस्ते जन्मकालो ऽस्य धीरया ।
विशिष्टं बलमीप्सन्त्या पञ्चवर्षशतात्परः ॥ १४ ॥
एव शप्त्वा ततः पुत्रो विनतामन्तरिक्षगः ।
अरुणो दृश्यते ब्रह्मन्प्रभातसमये सदा ॥ १५ ॥
गरुडो ऽपि यथाकाल जज्ञे पन्नगभोजनः ।
स जातमात्रो विनता परित्यज्य खमाविशत् ॥ १६ ॥
आदास्यन्नात्मनो भोज्यमन्नं विहितमस्य यत् ।
विधात्रा भृगुशार्दूल क्षुधितः पतगेश्वरः ॥ १७ ॥

---

## 4. Der Wettstreit der Kadrū und Vinatā
(1, 20, 1—23, 4).

सौतिरुवाच ।
एतत्ते कथितं सर्वममृतं मथित यथा ।
यत्र सो ऽश्वः समुत्पन्नः श्रीमानतुलविक्रमः ॥ १ ॥
यन्निशम्य तदा कद्रूर्विनतामिदमब्रवीत् ।
उच्चैःश्रवा नु किंवर्णो भद्रे प्रब्रूहि माचिरम् ॥ २ ॥
विनतोवाच ।
श्वेत एवाश्वराजो ऽय कि वा त्वं मन्यसे शुभे ।
ब्रूहि वर्णं त्वमप्यस्य ततो ऽत्र विपणावहे ॥ ३ ॥
कद्रूरुवाच ।
कृष्णवालमहं मन्ये हयमेतं शुचिस्मिते ।
एहि सार्धं मया दीव्य दासीभावाय भामिनि ॥ ४ ॥
सौतिरुवाच ।
एव ते समय कृत्वा दासीभावाय वै मिथः ।
जग्मतुः स्वगृहानेव श्वो द्रक्ष्याव इति स्म ह ॥ ५ ॥

तत पुत्रसहस्र तु कद्रूर्जिह्म चिकीर्षती ।'
आज्ञापयामास तदा वाला भूत्वाञ्जनप्रभा ॥ ६ ॥
आविशध्व हयं क्षिप्रं दासी न स्यामहं यथा ।
नान्वपद्यन्त ये वाक्यं ताञ्छशाप भुजंगमान् ॥ ७ ॥
सर्पसत्रे वर्तमाने पावको व प्रधक्ष्यति ।
जनमेजयस्य राजर्षे पाण्डवेयस्य धीमत ॥ ८ ॥
शापमेतं तु शुश्राव स्वयमेव पितामह ।
अतिक्रूर समुत्सृष्टं कद्र्वा दैवादतीव हि ॥ ९ ॥
सार्धं देवगणै सर्वैर्वाचं तामन्वमोदत ।
बहुत्वं प्रेक्ष्य सर्पाणां प्रजानां हितकाम्यया ॥ १० ॥
तिग्मवीर्यविषा ह्येते दन्दशूका महाबला ।
युक्तं मात्रा कृतं तेषा परपीडोपसर्पिणाम् ॥ ११ ॥
अन्येषामपि सत्त्वानां नित्य दोषपराश्च ये ।
तेषा प्राणान्तिको दण्डो दैवेन विनिपात्यते ॥ १२ ॥
एवं संभाष्य देवस्तु पूज्य कद्रूं च तां तदा ।
आहूय कश्यपं देव इदं वचनमब्रवीत् ॥ १३ ॥
यदेते दन्दशूकाश्च सर्पा जातास्त्वयानघ ।
विषोल्बणा महाभोगा मात्रा शप्ता परंतप ॥ १४ ॥
तत्र मन्युस्त्वया तात न कर्तव्य कथ चन ।
दृष्ट पुरातनं ह्येतद्यज्ञे सर्पविनाशनम् ॥ १५ ॥
इत्युक्त्वा सृष्टिकृद्देवस्त प्रसाद्य प्रजापतिम् ।
प्रादाद्विषहरीं विद्यां कश्यपाय महात्मने ॥ १६ ॥
नागाश्च सविदं कृत्वा कर्तव्यमिति तद्वच ।
नि स्नेहा वै दहेन्माता असंप्राप्तमनोरथा ॥ १७ ॥
प्रसन्ना मोचयेदस्मांस्तस्माच्छापाच्च भामिनी ।
कृष्णं पुच्छं करिष्यामस्तुरगस्य न संशय ॥ १८ ॥
तथा हि गत्वा ते तस्य पुच्छे वाला इति स्मृता ।
ततो रजन्यां व्युष्टायां प्रभाते ऽभ्युदिते रवौ ॥ १९ ॥
कद्रूश्च विनता चैव भगिन्यौ ते तपोधन ।
अमर्षिते सुसंरब्धे दास्ये कृतपणे तदा ॥ २० ॥
जग्मतुस्तुरगं द्रष्टुमुच्चै श्रवसमन्तिकात् ।
ददृशाते ऽथ ते तत्र समुद्रं निधिमम्भसाम् ॥ २१ ॥

वायुनातीव सहसा क्षोभ्यमाणं महास्वनम् ।
तिमिंगिलसमाकीर्णं मकरैरावृतं तथा ॥ २२ ॥
संयुतं बहुसाहस्रैः सत्त्वैर्नानाविधैरपि ।
घोरैर्घोरमनाधृष्यं गम्भीरमतिभैरवम् ॥ २३ ॥
आकरं सर्वरत्नानामालयं वरुणस्य च ।
नागानामालयं चापि सुरम्यं सरितां पतिम् ॥ २४ ॥
महानदीभिर्बह्वीभिस्तत्रतत्र सहस्रशः ।
आपूर्यमाणमत्यर्थं नृत्यन्तमिव चोर्मिभिः ॥ २५ ॥
तं समुद्रमतिक्रम्य कद्रूर्विनतया सह ।
न्यपतत्तुरगाभ्याशे नचिरादिव शीघ्रगा ॥ २६ ॥
ततस्ते तं हयश्रेष्ठं ददृशाते महाजवम् ।
शशाङ्ककिरणप्रख्यं कालवालमुभे तदा ॥ २७ ॥
निशम्य च बहून्वालान्कृष्णान्पुच्छसमाश्रितान् ।
विषण्णरूपां विनतां कद्रूर्दास्ये न्ययोजयत् ॥ २८ ॥
ततः सा विनता तस्मिन्पणितेन पराजिता ।
अभवद्दुःखसंतप्ता दासीभावं समास्थिता ॥ २९ ॥

---

## 5. Der Schlangendamon Śeṣa wird zum Träger der Erde bestellt (1, 36, 1–25).

शौनक उवाच ।
आख्याता भुजगास्तात वीर्यवन्तो दुरासदाः ।
शापं तं ते ऽभिविज्ञाय कृतवन्तः किमुत्तरम् ॥ १ ॥
सौतिरुवाच ।
तेषां तु भगवाञ्छेषः कद्रूं त्यक्त्वा महायशाः ।
उग्रं तपः समातस्थे वायुभक्षो यतव्रतः ॥ २ ॥
गन्धमादनमासाद्य बदर्यां च तपोरतः ।
गोकर्णे पुष्करारण्ये तथा हिमवतस्तटे ॥ ३ ॥
तेषुतेषु च पुण्येषु तीर्थेष्वायतनेषु च ।
एकान्तशीलो नियतः सततं विजितेन्द्रियः ॥ ४ ॥
तप्यमानं तपो घोरं तं ददर्श पितामहः ।
संशुष्कमांसत्वक्स्नायुं जटाचीरधरं मुनिम् ॥ ५ ॥
तमब्रवीत्सत्यधृतिं तप्यमानं पितामहः ।
किमिदं कुरुषे शेष प्रजानां स्वस्ति वै कुरु ॥ ६ ॥

त्वं हि तीव्रेण तपसा प्रजास्तापयसे ऽनघ ।
ब्रूहि कामं च मे शेष यस्ते हृदि व्यवस्थित ॥ ७ ॥
शेष उवाच ।
सोदर्या मम सर्वे हि भ्रातरो मन्दचेतस ।
सह तैर्नोत्सहे वस्तुं तद्भवाननुमन्यताम् ॥ ८ ॥
अभ्यसूयन्ति सततं परस्परममित्रवत् ।
ततो ऽहं तप आतिष्ठं नैतान्पश्येयमित्युत ॥ ९ ॥
न मर्षयन्ति सततं विनतां ससुतां च ते ।
अस्माकं चापरो भ्राता वैनतेयो ऽन्तरिक्षग ॥ १० ॥
तं च द्विषन्ति सततं स चापि बलवत्तर ।
वरप्रदानात्स पितु कश्यपस्य महात्मन ॥ ११ ॥
सो ऽहं तप समास्थाय मोक्ष्यामीदं कलेवरम् ।
कथं मे प्रेत्यभावे ऽपि न तै स्यात्सह संगम ॥ १२ ॥
सौतिरुवाच ।
तमेवं वादिनं शेषं पितामह उवाच ह ।
जानामि शेष सर्वेषां भ्रातॄणां ते विचेष्टितम् ॥ १३ ॥
मातुश्चाप्यपराधाद्वै भ्रातॄणां ते महद्भयम् ।
कृतो ऽत्र परिहारश्च पूर्वमेव भुजगम ॥ १४ ॥
भ्रातॄणां तव सर्वेषां न शोकं कर्तुमर्हसि ।
वृणीष्व च वरं मत्त शेष यत्ते ऽभिकाङ्क्षितम् ॥ १५ ॥
दिष्ट्या बुद्धिश्च ते धर्मे निविष्टा पन्नगोत्तम ।
भूयो भूयश्च ते बुद्धिर्धर्मे भवतु सुस्थिरा ॥ १६ ॥
शेष उवाच ।
एष एव वरो देव काङ्क्षितो मे पितामह ।
धर्मे मे रमतां बुद्धि शमे तपसि चेश्वर ॥ १७ ॥
ब्रह्मोवाच ।
प्रीतो ऽस्म्यनेन ते शेष दमेन च शमेन च ।
त्वया त्विदं वच कार्यं मन्नियोगात्प्रजाहितम् ॥ १८ ॥
इमां महीं शैलवनोपपन्नां ससागरग्रामविहारपत्तनाम् ।
त्वं शेष सम्यक्चलितां यथावत्संगृह्य तिष्ठस्व यथाचला स्यात् ॥ १९ ॥
शेष उवाच ।
यथाह देवो वरद प्रजापतिर्महीपतिर्भूतपतिर्जगत्पति ।
तथा महीं धारयितास्मि निश्चलां प्रयच्छ तां मे शिरसि प्रजापते ॥ २० ॥

ब्रह्मोवाच ।
अधो महीं गच्छ भुजगमोत्तम स्वयं तवैषा विवरं प्रदास्यति ।
इमां धरां धारयता त्वया हि मे महत्प्रियं शेष कृतं भविष्यति ॥ २१ ॥
सौतिरुवाच ।
तथेति कृत्वा विवरं प्रविश्य स प्रभुर्भुवो भुजगवराग्रज स्थित ।
बिभर्ति देवीं शिरसा महीमिमां समुद्रनेमिं परिगृह्य सर्वत ॥ २२ ॥
ब्रह्मोवाच ।
शेषो ऽसि नागोत्तम धर्मदेवो महीमिमां धारयसे यदेक ।
अनन्तभोगै परिगृह्य सर्वां यथाहमेव बलभिद्यथा वा ॥ २३ ॥
सौतिरुवाच ।
अधो भूमेर्वसत्येवं नागो ऽनन्त प्रतापवान् ।
धारयन्वसुधामेक शासनाद्ब्रह्मणो विभु ॥ २४ ॥
सुपर्णं च सहायं वै भगवानमरोत्तम ।
प्रादादनन्ताय तदा वैनतेयं पितामह ॥ २५ ॥

---

## 6 Parikṣit wird vom Schlangendämon Takṣaka gebissen (1, 40, 10, b—44, 4)

सौतिरुवाच ।
परिक्षिदिति नामासीद्राजा कौरववंशज ।
यथा पाण्डुर्महाबाहुर्धनुर्धरवरो युधि ॥ १ ॥
मृगान्विध्यन्वराहांश्च तरक्षून्महिषांस्तथा ।
अन्यांश्च विविधान्वन्यांश्चचार पृथिवीपति ॥ २ ॥
स कदा चिन्मृगं विद्ध्वा बाणेनानतपर्वणा ।
पृष्ठतो धनुरादाय ससार गहने वने ॥ ३ ॥
अन्वगच्छद्धनुष्पाणि पर्यन्वेष्टुमितस्तत ।
नहि तेन मृगो विद्धो जीवन्गच्छति वै वने ॥ ४ ॥
पूर्वरूपं तु तन्नूनमासीत्स्वर्गगतिं प्रति ।
परिक्षितो नरेन्द्रस्य विद्धो यन्नष्टवान्मृग ॥ ५ ॥
दूरं चापहृतस्तेन मृगेण स महीपति ।
परिश्रान्त पिपासार्त आससाद मुनिं वने ॥ ६ ॥
गवां प्रचारेष्वासीनं वत्सानां मुखनिःसृतम् ।
भूयिष्ठमुपयुञ्जानं फेनमापिबतां पय ॥ ७ ॥

तमभिद्रुत्य वेगेन स राजा संशितव्रतम् ।
अपृच्छद्धनुरुद्यम्य तं मुनिं क्षुच्छ्रमान्वितः ॥ ८ ॥
भो भो ब्रह्मन्नहं राजा परिक्षिदभिमन्युजः ।
मया विद्धो मृगो नष्टः कच्चित्त्वं दृष्टवानसि ॥ ९ ॥
स मुनिस्तं तु नोवाच किंचिन्मौनव्रते स्थितः ।
तस्य स्कन्धे मृतं सर्पं क्रुद्धो राजा समासजत् ॥ १० ॥
धनुष्कोट्या समुत्क्षिप्य स चैनं समुदैक्षत ।
न स किं चिदुवाचैनं शुभं वा यदि वाशुभम् ॥ ११ ॥
स राजा क्रोधमुत्सृज्य व्यथितस्तं तथागतम् ।
दृष्ट्वा जगाम नगरमृषिस्त्वासीत्तथैव सः ॥ १२ ॥
नहि तं राजशार्दूलं क्षमाशीलो महामुनिः ।
स्वधर्मनिरतं भूपं समाक्षिप्तो ऽप्यधर्षयत् ॥ १३ ॥
नहि तं राजशार्दूलस्तथा धर्मपरायणम् ।
जानाति भरतश्रेष्ठस्तत एनमधर्षयत् ॥ १४ ॥
तरुणस्तस्य पुत्रो ऽभूत्तिग्मतेजा महातपाः ।
शृङ्गी नाम महाक्रोधो दुष्प्रसादो महाव्रतः ॥ १५ ॥
स देवं परमीशानं सर्वभूतहिते रतम् ।
ब्रह्माणमुपतस्थे वै कालेकाले सुसंयतः ॥ १६ ॥
स तेन समनुज्ञातो ब्रह्मणा गृहमीयिवान् ।
सख्योक्तः क्रीडमानेन स तत्र हसता किल ॥ १७ ॥
उद्दिश्य पितरं तस्य यच्छ्रुत्वा रोषमाहरत् ।
ऋषिपुत्रेण नर्मार्थं कृशेन द्विजसत्तम ॥ १८ ॥
तेजस्विनस्तव पिता तथैव च तपस्विनः ।
शवं स्कन्धेन वहति मा शृङ्गिन्गर्वितो भव ॥ १९ ॥
व्याहरत्स्वृषिपुत्रेषु मा स्म किं चिद्वचो वदः ।
अस्मद्विधेषु सिद्धेषु ब्रह्मवित्सु तपस्विषु ॥ २० ॥
क्व ते पुरुषमानित्वं क्व ते वाचस्तथाविधाः ।
दर्पजाः पितरं द्रष्ट्वा यस्त्वं शवधरं तथा ॥ २१ ॥
पित्रा च तव तत्कर्म नानुरूपमिवात्मनः ।
कृतं मुनिजनश्रेष्ठ येनाहं भृशदुःखितः ॥ २२ ॥
एवमुक्तः स तेजस्वी शृङ्गी कोपसमन्वितः ।
मृतधारं गुरुं श्रुत्वा पर्यतप्यत मन्युना ॥ २३ ॥

स तं कृशमभिप्रेक्ष्य सूनृतां वाचमुत्सृजन् ।
अपृच्छत्तं कथं तातः स मे ऽद्य मृतधारकः ॥ २४ ॥
कृश उवाच ।
राज्ञा परिक्षिता तात मृगयां परिधावता ।
अवसक्तः पितुस्ते ऽद्य मृतः स्कन्धे भुजंगमः ॥ २५ ॥
शृङ्ग्युवाच ।
किं मे पित्रा कृतं तस्य राज्ञो ऽनिष्टं दुरात्मनः ।
ब्रूहि तत्कृश तत्त्वेन पश्य मे तपसो बलम् ॥ २६ ॥
कृश उवाच ।
स राजा मृगयां यातः परिक्षिदभिमन्युजः ।
ससार मृगमेकाकी विद्ध्वा बाणेन शीघ्रगम् ॥ २७ ॥
न चापश्यन्मृगं राजा चरंस्तस्मिन्महावने ।
पितरं ते स दृष्ट्वैव पप्रच्छानभिभाषिणम् ॥ २८ ॥
तं स्थाणुभूतं तिष्ठन्तं क्षुत्पिपासाश्रमातुरः ।*
पुनःपुनर्मृगं नष्टं पप्रच्छ पितरं तव ॥ २९ ॥
स च मौनव्रतोपेतो नैव तं प्रत्यभाषत ।
तस्य राजा धनुष्कोट्या सर्पं स्कन्धे समासजत् ॥ ३० ॥
शृङ्गिंस्तव पिता सो ऽपि तथैवास्ते यतव्रतः ।
सो ऽपि राजा स्वनगरं प्रस्थितो गजसाह्वयम् ॥ ३१ ॥
सौतिरुवाच ।
श्रुत्वैवमृषिपुत्रस्तु भृशं क्षुब्धेव तस्थिवान् ।
कोपसंरक्तनयनः प्रज्वलन्निव मन्युना ॥ ३२ ॥
आविष्टः स तु कोपेन शशाप नृपतिं तदा ।
वार्युपस्पृश्य तेजस्वी क्रोधवेगबलात्कृतः ॥ ३३ ॥
यो ऽसौ वृद्धस्य तातस्य तथा कृच्छ्रगतस्य ह ।
स्कन्धे मृतं समासाङ्क्षीत्पन्नगं राजकिल्बिषी ॥ ३४ ॥
तं पापमतिसंक्रुद्धस्तक्षकः पन्नगेश्वरः ।
आशीविषस्तिग्मतेजा मद्वाक्यबलचोदितः ॥ ३५ ॥
सप्तरात्रादितो नेता यमस्य सदनं प्रति ।
द्विजानामवमन्तारं कुरूणामयशस्करम् ॥ ३६ ॥
इति शप्त्वातिसंक्रुद्धः शृङ्गी पितरमभ्यगात् ।
आसीनं गोव्रजे तस्मिन्वहन्तं शवपन्नगम् ॥ ३७ ॥

स तमालक्ष्य पितरं शृङ्गी स्कन्धगतेन वै ।
शवेन भुजगेनासीद्भूयः क्रोधसमाकुलः ॥ ३८ ॥
दुःखाच्चाश्रूणि मुमुचे पितरं चेदमब्रवीत् ।
श्रुत्वेमां धर्षणां तात तव तेन दुरात्मना ॥ ३९ ॥
राज्ञा परिक्षिता कोपादशपं तमहं नृपम् ।
यथार्हति स एवोग्रं शापं कुरुकुलाधमः ॥ ४० ॥
सप्तमेऽहनि तं पापं तक्षकः पन्नगोत्तमः ।
वैवस्वतस्य सदनं नेता परमदारुणम् ॥ ४१ ॥
तमब्रवीत्पिता ब्रह्मंस्तथा कोपसमन्वितम् ।
न मे प्रियं कृतं तात नैष धर्मस्तपस्विनाम् ॥ ४२ ॥
वयं तस्य नरेन्द्रस्य विषये निवसामहे ।
न्यायतो रक्षितास्तेन तस्य शापं न रोचये ॥ ४३ ॥
सर्वथा वर्तमानस्य राज्ञो ह्यस्मद्विधैः सदा ।
क्षन्तव्यं पुत्र धर्मो हि हतो हन्ति न संशयः ॥ ४४ ॥
यदि राजा न संरक्षेत्पीडा नः परमा भवेत् ।
न शक्नुयाम चरितुं धर्मं पुत्र यथासुखम् ॥ ४५ ॥
रक्ष्यमाणा वयं तात राजभिर्धर्मदृष्टिभिः ।
चरामो विपुलं धर्मं तेषां भागोऽस्ति धर्मतः ॥ ४६ ॥
तेनेह क्षुधितेनाद्य श्रान्तेन च तपस्विना ।
अजानता कृतं मन्ये व्रतमेतदिदं मम ॥ ४७ ॥
कस्मादिदं त्वया बाल्यात्सहसा दुष्कृतं कृतम् ।
नह्यर्हति नृपः शापमस्मत्तः पुत्र सर्वथा ॥ ४८ ॥
शृङ्ग्युवाच ।
यद्येतत्साहसं तात यदि वा दुष्कृतं कृतम् ।
प्रियं वाप्यप्रियं वा ते वागुक्ता न मृषा भवेत् ॥ ४९ ॥
नैवान्यथेदं भविता पितरेष ब्रवीमि ते ।
नाहं मृषा ब्रवीम्येवं स्वैरेष्वपि कुतः शपन् ॥ ५० ॥
शमीक उवाच ।
जानाम्युग्रप्रभावं त्वां तात सत्यगिरं तथा ।
नानृतं चोक्तपूर्वं ते नैतन्मिथ्या भविष्यति ॥ ५१ ॥
पित्रा पुत्रो वयःस्थोऽपि सततं वाच्य एव तु ।
यथा स्याद्गुणसंयुक्तः प्राप्नुयाच्च महद्यशः ॥ ५२ ॥

कि पुनर्बाल एव त्व तपसा भावित सदा ।
वर्धते च प्रभवता कोपो ऽतीव महात्मनाम् ॥ ५३ ॥
सो ऽह पश्यामि वक्तव्य त्वयि धर्मभृता वर ।
पुत्रत्व बालता चैव तवावेक्ष्य च साहसम् ॥ ५४ ॥
स त्व शमपरो भूत्वा वन्यमाहारमाहरन् ।
चर क्रोधमिम हत्वा नैव धर्म प्रहास्यसि ॥ ५५ ॥
क्रोधो हि धर्म हरति यतीनां दुःखसंचितम् ।
ततो धर्मविहीनानां गतिरिष्टा न विद्यते ॥ ५६ ॥
शम एव यतीनां हि क्षमिणा सिद्धिकारक ।
क्षमावतामय लोक परश्चैव क्षमावताम् ॥ ५७ ॥
तस्माच्चरेथा सतत क्षमाशीलो जितेन्द्रिय ।
क्षमया प्राप्स्यसे लोकान्ब्रह्मण समनन्तरान् ॥ ५८ ॥
मया तु शममास्थाय यच्छक्य कर्तुमद्य वै ।
तत्करिष्याम्यहं तात प्रेषयिष्ये नृपाय वै ॥ ५९ ॥
मम पुत्रेण शप्तो ऽसि बालेनाकृतबुद्धिना ।
ममेमां धर्षणां त्वत्त प्रेक्ष्य राजन्नमर्षिणा ॥ ६० ॥

सौतिरुवाच ।

एवमादिश्य शिष्यं स प्रेषयामास सुव्रत ।
परिक्षिते नृपतये दयापन्नो महातपा ॥ ६१ ॥
संदिश्य कुशलप्रश्न कार्यवृत्तान्तमेव च ।
शिष्यं गौरमुखं नाम शीलवन्तं समाहितम् ॥ ६२ ॥
सो ऽभिगम्य तत शीघ्रं नरेन्द्र कुरुवर्धनम् ।
विवेश भवनं राज्ञ पूर्वं द्वा स्थैर्निवेदित ॥ ६३ ॥
पूजितश्च नरेन्द्रेण द्विजो गौरमुखस्तदा ।
आचख्यौ परिविश्रान्तो राज्ञ सर्वमशेषत ॥ ६४ ॥
शमीको नाम राजेन्द्र विषये वतते तव ।
ऋषि परमधर्मात्मा दान्त शान्तो महातपा ॥ ६५ ॥
तस्य त्वया नरव्याघ्र सर्प प्राणैर्वियोजित ।
अवसक्तो धनुष्कोट्या स्कन्धे मौनान्वितस्य ह ॥ ६६ ॥
क्षान्तवांस्तव तत्कर्म पुत्रस्तस्य न चक्षमे ।
तेन शप्तो ऽसि राजेन्द्र पितुरज्ञातमद्य वै ॥ ६७ ॥
तक्षक सप्तरात्रेण मृत्युस्तव भविष्यति ।
तत्र रक्षां कुरुष्वेति पुन पुनरथाब्रवीत् ॥ ६८ ॥

तदन्यथा न शक्यं च कर्तुं केन चिदच्युत ।
ततो ऽहं प्रेषितस्तेन तव राजन्हितार्थिना ॥ ६९ ॥
इति श्रुत्वा वचो घोरं स राजा कुरुनन्दन ।
पर्यतप्यत तत्पापं कृत्वा राजा महातपा ॥ ७० ॥
तं च मौनव्रतं श्रुत्वा वने मुनिवरं तदा ।
भूय एवाभवद्राजा शोकसंतप्तमानस ॥ ७१ ॥
अनुक्रोशात्मता तस्य शमीकस्यावधार्य च ।
पर्यतप्यत भूयो ऽपि कृत्वा तत्किल्बिषं मुने ॥ ७२ ॥
नहि मृत्युं तथा राजा श्रुत्वा वै सो ऽन्वतप्यत ।
अशोचदमरप्रख्यो यथा कृत्वेह कर्म तत् ॥ ७३ ॥
ततस्तं प्रेषयामास राजा गौरमुखं तदा ।
भूय प्रसादं भगवान्करोत्विह ममेति वै ॥ ७४ ॥
तस्मिंश्च गतमात्रे ऽथ राजा गौरमुखे तदा ।
मन्त्रिभिर्मन्त्रयामास सह संविग्नमानस ॥ ७५ ॥
संमन्त्र्य मन्त्रिभिश्चैव स तथा मन्त्रतत्त्ववित् ।
प्रासादं कारयामास एकस्तम्भं सुरक्षितम् ॥ ७६ ॥
रक्षां च विदधे तत्र भिषजश्चौषधानि च ।
ब्राह्मणान्मन्त्रसिद्धांश्च सर्वतो वै न्ययोजयत् ॥ ७७ ॥
राजकार्याणि तत्रस्थ सर्वाण्येव चकार स ।
मन्त्रिभि सह धर्मज्ञ समन्तात्परिरक्षित ॥ ७८ ॥
न चैनं कश्चिदारूढं लभते राजसत्तमम् ।
वातो ऽपि चरंस्तत्र प्रवेशे विनिवार्यते ॥ ७९ ॥
प्राप्ते च दिवसे तस्मिन्सप्तमे द्विजसत्तम ।
काश्यपो ऽभ्यागमद्विद्वांस्तं राजानं चिकित्सितुम् ॥ ८० ॥
श्रुतं हि तेन तदभूद्यथा तं राजसत्तमम् ।
तक्षक पन्नगश्रेष्ठो नेष्यते यमसादनम् ॥ ८१ ॥
तं दष्टं पन्नगेन्द्रेण करिष्ये ऽहमपज्वरम् ।
तत्र मे ऽर्थश्च धर्मश्च भवितेति विचिन्तयन् ॥ ८२ ॥
तं ददर्श स नागेन्द्रस्तक्षक काश्यपं पथि ।
गच्छन्तमेकमनसं द्विजो भूत्वा वयोऽतिग ॥ ८३ ॥
तमब्रवीत्पन्नगेन्द्र काश्यपं मुनिपुंगवम् ।
क्व भवांस्त्वरितो याति किं च कार्यं चिकीर्षति ॥ ८४ ॥

काश्यप उवाच ।
नृप कुरुकुलोत्पन्न परिक्षितमरिंदमम् ।
तक्षक पन्नगश्रेष्ठस्तेजसाद्य प्रधक्ष्यति ॥ ८५ ॥
तं दष्टं पन्नगेन्द्रेण तेनाग्निसमतेजसा ।
गच्छामि त्वरित सौम्य सद्य कर्तुमपज्वरम् ॥ ८६ ॥
तक्षक उवाच ।
अह स तक्षको ब्रह्मस्त धक्ष्यामि महीपतिम् ।
निवर्तस्व न शक्तस्त्व मया दष्ट चिकित्सितुम् ॥ ८७ ॥
काश्यप उवाच ।
अह त नृपति गत्वा त्वया दष्टमपज्वरम् ।
करिष्यामीति मे बुद्धिर्विद्याबलसमन्विता ॥ ८८ ॥
तक्षक उवाच ।
यदि दष्ट मयेह त्व शक्त किंचिच्चिकित्सितुम् ।
ततो वृक्ष मया दष्टमिम जीवय काश्यप ॥ ८९ ॥
पर मन्त्रबल यत्ते तद्दर्शय यतस्व च ।
न्यग्रोधमेत धक्ष्यामि पश्यतस्ते द्विजोत्तम ॥ ९० ॥
काश्यप उवाच ।
दश नागेन्द्र वृक्ष त्व यद्येतदभिमन्यसे ।
अहमेनं त्वया दष्ट जीवयिष्ये भुजगम ॥ ९१ ॥
सौतिरुवाच ।
एवमुक्त स नागेन्द्र काश्यपेन महात्मना ।
अदशद्वृक्षमभ्येत्य न्यग्रोध पन्नगोत्तम ॥ ९२ ॥
स वृक्षस्तेन दष्टस्तु पन्नगेन महात्मना ।
आशीविषविषोपेत प्रजज्वाल समन्तत ॥ ९३ ॥
तं दग्ध्वा स नग नाग काश्यप पुनरब्रवीत् ।
कुरु यत्न द्विजश्रेष्ठ जीवयैतं वनस्पतिम् ॥ ९४ ॥
भस्मीभूत ततो वृक्षं पन्नगेन्द्रस्य तेजसा ।
भस्म सर्वं समाहृत्य काश्यपो वाक्यमब्रवीत् ॥ ९५ ॥
विद्याबल पन्नगेन्द्र पश्य मे ऽद्य वनस्पतौ ।
अहं संजीवयाम्येनं पश्यतस्ते भुजगम ॥ ९६ ॥
तत स भगवान्विद्वान्काश्यपो द्विजसत्तम ।
भस्मराशीकृतं वृक्ष विद्यया समजीवयत् ॥ ९७ ॥

अङ्कुर छतवांस्तत्र तत पर्णद्वयान्वितम् ।
पलाशिन शाखिन च तथा विटपिन पुन ॥ ९८ ॥
त दृष्ट्वा जीवित वृक्ष काश्यपेन महात्मना ।
उवाच तक्षको ब्रह्मन्नेतदत्यद्भुत त्वयि ॥ ९९ ॥
द्विजेन्द्र यद्विष हन्या मम वा मद्विधस्य वा ।
क त्वमर्थमभिप्रेप्सुर्यासि तत्र तपोधन ॥ १०० ॥
यत्ते ऽभिलषितं प्राप्तु फल तस्मान्नृपोत्तमात् ।
अहमेव प्रदास्यामि तत्ते यद्यपि दुर्लभम् ॥ १०१ ॥
विप्रशापाभिभूते च क्षीणायुषि नराधिपे ।
घटमानस्य ते विप्र सिद्धि सशयिता भवेत् ॥ १०२ ॥
ततो यश प्रदीप्त ते त्रिषु लोकेषु विश्रुतम् ।
निरंशुरिव घर्मांशुरन्तर्धानमितो व्रजेत् ॥ १०३ ॥
काश्यप उवाच ।
धनार्थी याम्यहं तत्र तन्मे देहि भुजगम ।
ततो ऽह विनिवर्तिष्ये स्वापतेय प्रगृह्य वै ॥ १०४ ॥
तक्षक उवाच ।
यावद्धन प्रार्थयसे तस्माद्राज्ञस्ततो ऽधिकम् ।
अहमेव प्रदास्यामि निवर्तस्व द्विजोत्तम ॥ १०५ ॥
सौतिरुवाच ।
तक्षकस्य वच श्रुत्वा काश्यपो द्विजसत्तम ।
प्रदध्यौ सुमहातेजा राजान प्रति बुद्धिमान् ॥ १०६ ॥
दिव्यज्ञान स तेजस्वी ज्ञात्वा त नृपतिं तदा ।
क्षीणायुषं पाण्डवेयमपावर्तत काश्यप ॥ १०७ ॥
निवृत्ते काश्यपे तस्मिन्समयेन महात्मनि ।
जगाम तक्षकस्तूर्ण नगर नागसाह्वयम् ॥ १०८ ॥
अथ शुश्राव गच्छन्स तक्षको जगतीपतिम् ।
मन्त्रैर्गदैर्विषहरै रक्ष्यमाण प्रयत्नत ॥ १०९ ॥
स चिन्तयामास तदा मायायोगेन पार्थिव ।
मया वञ्चयितव्यो ऽसौ क उपायो भवेदिति ॥ ११० ॥
ततस्तापसरूपेण प्राहिणोत्स भुजगमान् ।
फलदर्भोदकं गृह्य राज्ञे नागो ऽथ तक्षक ॥ १११ ॥

तक्षक उवाच ।

गच्छध्वं यूयमव्यग्रा राजानं कार्यवत्तया ।
फलदर्भोदकं नाम प्रतिग्राहयितुं नृपम् ॥ ११२ ॥

सौतिरुवाच ।

ते तक्षकसमादिष्टास्तथा चक्रुर्भुजंगमाः ।
उपनिन्युस्तथा राज्ञे दर्भानापः फलानि च ॥ ११३ ॥
तच्च सर्वं स राजेन्द्रः प्रतिजग्राह वीर्यवान् ।
कृत्वा तेषां च कार्याणि गम्यतामित्युवाच तान् ॥ ११४ ॥
गतेषु तेषु नागेषु तापसच्छद्मरूपिषु ।
अमात्यान्सुहृदश्चैव प्रोवाच स नराधिपः ॥ ११५ ॥
भक्षयन्तु भवन्तो वै स्वादूनीमानि सर्वशः ।
तापसैरुपनीतानि फलानि सहिता मया ॥ ११६ ॥
ततो राजा ससचिवः फलान्यादातुमैच्छत ।
विधिना संप्रयुक्तो वै ऋषिवाक्येन तेन तु ॥ ११७ ॥
यस्मिन्नेव फले नागस्तमेवाभक्षयत्स्वयम् ।
ततो भक्षयतस्तस्य फलात्कृमिरभूदणुः ॥ ११८ ॥
ह्रस्वकः कृष्णनयनस्ताम्रवर्णोऽथ शौनक ।
स तं गृह्य नृपश्रेष्ठः सचिवानिदमब्रवीत् ॥ ११९ ॥
अस्तमभ्येति सविता विषादद्य न मे भयम् ।
सत्यवागस्तु स मुनिः कृमिर्मां दशतामयम् ॥ १२० ॥
तक्षको नाम भूत्वा वै तथा परिहृतं भवेत् ।
ते चैनमन्ववर्तन्त मन्त्रिणः कालचोदिताः ॥ १२१ ॥
एवमुक्त्वा स राजेन्द्रो ग्रीवायां संनिवेश्य ह ।
कृमिकं प्राहसत्तूर्णं मुमूर्षुर्नष्टचेतनः ॥ १२२ ॥
प्रहसन्नेव भोगेन तक्षकेण त्ववेष्ट्यत ।
तस्मात्फलाद्विनिष्क्रम्य यत्तद्राज्ञे निवेदितम् ॥ १२३ ॥
वेष्टयित्वा च भोगेन विनद्य च महास्वनम् ।
अदशत्पृथिवीपालं तक्षकः पन्नगेश्वरः ॥ १२४ ॥
तं तथा मन्त्रिणो दृष्ट्वा भोगेन परिवेष्टितम् ।
विषण्णवदनाः सर्वे रुरुदुर्भृशदुःखिताः ॥ १२५ ॥
तं तु नादं ततः श्रुत्वा मन्त्रिणस्ते प्रदुद्रुवुः ।
अपश्यन्त तथा यान्तमाकाशे नागमद्भुतम् ॥ १२६ ॥

सीमन्तमिव कुर्वाणं नभस पद्मवर्चसम् ।
तच्चकं पन्नगश्रेष्ठं भृशं शोकपरायणा ॥ १२७ ॥
ततस्तु ते तद्गृहमग्निना वृतं प्रदीप्यमानं विषजेन भोगिन ।
भयात्परित्यज्य दिश प्रपेदिरे पपात राजाशनिताडितो यथा ॥ १२८ ॥

---

### 7. *Die Geschichte von den beiden Jaratkāru*

(1, 45, 1—48, 22)

सौतिरुवाच ।

एतस्मिन्नेव काले तु जरत्कारुर्महातपा ।
चचार पृथिवीं कृत्स्नां यत्रसायंगृहो मुनि ॥ १ ॥
चरन्दीक्षां महातेजा दुश्चरामकृतात्मभि ।
तीर्थेष्वाप्लवनं कृत्वा पुण्येषु विचचार ह ॥ २ ॥
वायुभक्षो निराहार शुष्यन्नहरहर्मुनि ।
स ददर्श पितॄन्गर्ते लम्बमानानधोमुखान् ॥ ३ ॥
एकतन्त्ववशिष्टं वै वीरणस्तम्बमाश्रितान् ।
तं तन्तुं च शनैराखुमाददानं बिलेशयम् ॥ ४ ॥
निराहारान्कृशान्दीनान्गर्ते स्वत्राणमिच्छत ।
उपसृत्य स तान्दीनान्दीनरूपो ऽभ्यभाषत ॥ ५ ॥
के भवन्तो ऽवलम्बन्ते वीरणस्तम्बमाश्रिता ।
दुर्बल खादित मूल आखुना बिलवासिना ॥ ६ ॥
वीरणस्तम्बके मूलं यदप्येकमिह स्थितम् ।
तदप्ययं शनैराखुरादत्ते दशनै शितै ॥ ७ ॥
छेत्स्यते ऽल्पावशिष्टत्वादेतदप्यचिरादिव ।
ततस्तु पतितारो ऽत्र गर्ते व्यक्तमधोमुखा ॥ ८ ॥
तस्य मे दु खमुत्पन्नं दृष्ट्वा युष्मानधोमुखान् ।
कृच्छ्रामापदमापन्नान्प्रियं किं करवाणि व ॥ ९ ॥
तपसो ऽस्य चतुर्थेन तृतीयेनाथ वा पुन ।
अर्धेन वापि निस्तर्तुमापदं ब्रूत माचिरम् ॥ १० ॥
अथ वापि समग्रेण तरन्तु तपसा मम ।
भवन्त सर्व एवेह काममेवं विधीयताम् ॥ ११ ॥

पितर ऊचु ।

वृद्धो भवान्ब्रह्मचारी यो नस्त्रातुमिहेच्छसि ।
न तु विप्राग्र्य तपसा शक्यमेतद्व्यपोहितुम् ॥ १२ ॥

अस्ति नस्तात तपसः फलं प्रवदतां वर ।
सतानप्रक्षयाद्ब्रह्मन्पतामो निरये ऽशुचौ ॥ १३ ॥
लम्बतामिह नस्तात न ज्ञानं प्रतिभाति वै ।
येन त्वां नाभिजानीमो लोके विख्यातपौरुषम् ॥ १४ ॥
वृद्धो भवान्महाभागो यो नः शोच्यान्सुदुःखितान् ।
शोचत्युपेत्य कारुण्याच्छृणु ये वै वय द्विज ॥ १५ ॥
यायावरा नाम वयमृषयः संशितव्रताः ।
लोकात्पुण्यादिह भ्रष्टाः संतानप्रक्षयान्मुने ॥ १६ ॥
प्रनष्टं नस्तपस्तीव्रं नहि नस्तन्तुरस्ति वै ।
अस्ति त्वेको ऽद्य नस्तन्तुः सो ऽपि नास्ति यथा तथा ॥ १७ ॥
मन्दभाग्यो ऽल्पभाग्यानां बन्धुः स किल नः कुले ।
जरत्कारुरिति ख्यातो वेदवेदाङ्गपारगः ॥ १८ ॥
नियतात्मा महात्मा च सुव्रतः सुमहातपाः ।
तेन स्म तपसो लोभात्कृच्छ्रमापादिता वयम् ॥ १९ ॥
न तस्य भार्या पुत्रो वा बान्धवो वास्ति कश्चन ।
तस्माल्लम्बामहे गर्ते नष्टसंज्ञा ह्यनाथवत् ॥ २० ॥
स वक्तव्यस्त्वया दृष्ट्वा अस्माकं नाथवत्तया ।
पितरस्ते ऽवलम्बन्ते गर्ते दीना ह्यधोमुखाः ॥ २१ ॥
कुलतन्तुर्हि नः शिष्टस्त्वमेवैकस्तपोधन ।
साधु दारान्कुरुष्वेति प्रजामुत्पादयेति च ॥ २२ ॥
य तु पश्यसि नो ब्रह्मन्वीरणस्तम्बमाश्रितान् ।
एषो ऽस्माकं कुलस्तम्ब आसीत्स्वकुलवर्धनः ॥ २३ ॥
यानि पश्यसि वै ब्रह्मन्मूलानीहास्य वीरुधः ।
एते नस्तन्तवस्तात कालेन परिभक्षिताः ॥ २४ ॥
यत्त्वेतत्पश्यसि ब्रह्मन्मूलमस्यार्धभक्षितम् ।
यत्र लम्बामहे सर्वे सो ऽप्येकस्तप आस्थितः ॥ २५ ॥
यमाखुं पश्यसि ब्रह्मन्काल एष महाबलः ।
स तं तपोरतिं मन्दं शनैः क्षपयते तुदन् ॥ २६ ॥
जरत्कारु तपोलुब्धं मन्दात्मानमचेतसम् ।
नहि नस्तत्तपस्तस्य तारयिष्यति सत्तम ॥ २७ ॥
छिन्नमूलान्परिभ्रष्टान्कालोपहतचेतसः ।
अधः प्रविष्टान्पश्यास्मान्यथा दुष्कृतिनस्तथा ॥ २८ ॥

सौतिरुवाच ।

प्रतिश्रुते तु नागेन भरिष्ये भगिनीमिति ।
जरत्कारुस्तदा वेश्म भुजगस्य जगाम ह ॥ ५८ ॥
तत्र मन्त्रविदां श्रेष्ठस्तपोवृद्धो महाव्रतः ।
जग्राह पाणिं धर्मात्मा विधिमन्त्रपुरस्कृतम् ॥ ५९ ॥
ततो वासगृहं रम्यं पन्नगेन्द्रस्य संमतम् ।
जगाम भार्यामादाय स्तूयमानो महर्षिभिः ॥ ६० ॥
शयनं तत्र संक्लृप्तं स्पर्ध्यास्तरणसंवृतम् ।
तत्र भार्यासहायो ऽसौ जरत्कारुरुवास ह ॥ ६१ ॥
स तत्र समयं चक्रे भार्यया सह सत्तमः ।
विप्रियं मे न कर्तव्यं न च वाच्यं कदा चन ॥ ६२ ॥
त्यजेयं विप्रिये च त्वां हते वासं च ते गृहे ।
एतद्गृहाण वचनं मया यत्समुदीरितम् ॥ ६३ ॥
ततः परमसंविग्ना स्वसा नागपतेस्तदा ।
अतिदुःखान्विता वाक्यं तमुवाचैवमस्त्विति ॥ ६४ ॥
तथैव सा च भर्तारं दुःखशीलमुपाचरत् ।
उपायैः श्वेतकाकीयैः प्रियकामा यशस्विनी ॥ ६५ ॥
ऋतुकाले ततः स्नाता कदा चिद्वासुकेः स्वसा ।
भर्तारं वै यथान्यायमुपतस्थे महामुनिम् ॥ ६६ ॥
तत्र तस्याः समभवद्गर्भो ज्वलनसप्रभः ।
अतीव तेजसा युक्तो वैश्वानरसमद्युतिः ॥ ६७ ॥
ततः कतिपयाहस्य जरत्कारुर्महायशाः ।
उत्सङ्गे ऽस्याः शिरः कृत्वा सुष्वाप परिखिन्नवत् ॥ ६८ ॥
तस्मिंश्च सुप्ते विप्रेन्द्रे सवितास्तमयाद्गिरिम् ।
अहः परिक्षये ब्रह्मंस्ततः साचिन्तयत्तदा ॥ ६९ ॥
किं नु मे सुकृतं भूयाद्भर्तुरुत्थापनं न वा ।
दुःखशीलो हि धर्मात्मा कथं नास्यापराध्नुयाम् ॥ ७० ॥
कोपो वा धर्मशीलस्य धर्मलोपो ऽथ वा पुनः ।
धर्मलोपो गरीयान्वै स्यादत्रेत्यकरोन्मनः ॥ ७१ ॥
उत्थापयिष्ये यद्येनं ध्रुवं कोपं करिष्यति ।
धर्मलोपो भवेदस्य संध्यातिक्रमणे ध्रुवम् ॥ ७२ ॥
इति निश्चित्य मनसा जरत्कारुर्भुजंगमा ।
उवाचेदं वचः श्लक्ष्णं ततो मधुरभाषिणी ॥ ७३ ॥

उत्तिष्ठ त्वं महाभाग सूर्योऽस्तमुपतिष्ठति ।
संध्यामुपास्स्व भगवन्नपः स्पृष्ट्वा यतव्रत ॥ ७४ ॥
प्रादुष्कृताग्निहोत्रोऽयं मुहूर्तो रम्यदारुणः ।
संध्या प्रवर्तते चेयं पश्चिमस्यां दिशि प्रभो ॥ ७५ ॥
एवमुक्तः स भगवाञ्जरत्कारुर्महातपाः ।
तां भार्यां स्फुरमाणौष्ठ इदं वचनमब्रवीत् ॥ ७६ ॥
अवमानः प्रयुक्तोऽयं त्वया मम भुजंगमे ।
समीपे ते न वत्स्यामि गमिष्यामि यथागतम् ॥ ७७ ॥
शक्तिरस्ति न वामोरु मयि सुप्ते विभावसोः ।
अस्तं गन्तुं यथाकालमिति मे हृदि वर्तते ॥ ७८ ॥
न चाप्यवमतस्येह वासो रोचेत कस्य चित् ।
किं पुनर्धर्मशीलस्य मम वा मद्विधस्य वा ॥ ७९ ॥
एवमुक्ता जरत्कारुर्भर्त्रा हृदयकम्पनम् ।
अब्रवीद्भगिनी तत्र वासुकेः संनिवेशने ॥ ८० ॥
नावमानात्कृतवती तवाहं प्रतिबोधनम् ।
धर्मलोपो न ते विप्र स्यादित्येतत्कृतं मया ॥ ८१ ॥
उवाच भार्यामित्युक्तो जरत्कारुर्महातपाः ।
ऋषिः कोपसमाविष्टस्त्यक्तुकामो भुजंगमाम् ॥ ८२ ॥
न मे वागनृतं प्राह गमिष्येऽहं भुजंगमे ।
समयो ह्येष मे पूर्वं त्वया सह मिथः कृतः ॥ ८३ ॥
सुखमस्म्युषितो भद्रे ब्रूयास्त्वं भ्रातरं शुभे ।
इतो मयि गते भीरु गतः स भगवानिति ॥ ८४ ॥
त्वं चापि मयि निष्क्रान्ते न शोकं कर्तुमर्हसि ।
इत्युक्ता सानवद्याङ्गी प्रत्युवाच वचस्तदा ॥ ८५ ॥
जरत्कारुं जरत्कारुश्चिन्ताशोकपरायणा ।
बाष्पगद्गदया वाचा मुखेन परिशुष्यता ॥ ८६ ॥
कृताञ्जलिर्वरारोहा पर्यश्रुनयना ततः ।
धैर्यमालम्ब्य वामोरूर्हृदयेन प्रवेपता ॥ ८७ ॥
न मामर्हसि धर्मज्ञ परित्यक्तुमनागसम् ।
धर्मे स्थितां स्थितो धर्मे सदा प्रियहिते रताम् ॥ ८८ ॥
प्रदाने कारणं यच्च मम तुभ्यं द्विजोत्तम ।
तदलब्धवतीं मन्दां किं मां वक्ष्यति वासुकिः ॥ ८९ ॥

मातृशापाभिभूतानां ज्ञातीनां मम सत्तम ।
अपत्यमीप्सितं त्वत्तस्तच्च तावन्न दृश्यते ॥ ९० ॥
संप्रयोगो भवेन्नायं मम मोघस्त्वया द्विज ।
ज्ञातीनां हितमिच्छन्ती भगवंस्त्वां प्रसादये ॥ ९१ ॥
इममव्यक्तरूपं मे गर्भमाधाय सत्तम ।
कथं त्यक्त्वा महात्मा सन्गन्तुमिच्छस्यनागसम् ॥ ९२ ॥
एवमुक्तस्तु स मुनिर्भार्यां वचनमब्रवीत् ।
यद्युक्तमनुरूपं च जरत्कारुस्तपोधन ॥ ९३ ॥
अस्त्ययं सुभगे गर्भस्तव वैश्वानरोपम ।
ऋषि परमधर्मात्मा वेदवेदाङ्गपारग ॥ ९४ ॥
एवमुक्त्वा स धर्मात्मा जरत्कारुर्महानृषि ।
उग्राय तपसे भूयो जगाम कृतनिश्चय ॥ ९५ ॥
गतमात्रे तु भर्तारि जरत्कारुरवेदयत् ।
भ्रातु सकाशमागत्य याथातथ्यं तपोधन ॥ ९६ ॥
तत स भुजगश्रेष्ठ श्रुत्वा सुमहदप्रियम् ।
उवाच भगिनीं दीनां तदा दीनतर स्वयम् ॥ ९७ ॥
जानासि भद्रे यत्कार्यं प्रदाने कारणं च यत् ।
पन्नगानां हितार्थाय पुत्रस्ते स्यात्ततो यदि ॥ ९८ ॥
स सर्पसत्त्रात्किल नो मोचयिष्यति वीर्यवान् ।
एवं पितामह पूर्वमुक्तवांस्तु सुरै सह ॥ ९९ ॥
अप्यस्ति गर्भ सुभगे तस्मात्ते मुनिसत्तमात् ।
न चेच्छाम्यफलं तस्य दारकर्म मनीषिण ॥ १०० ॥
कामं च मम न न्याय्यं प्रष्टुं त्वां कार्यमीदृशम् ।
किं तु कार्यगरीयस्त्वात्ततस्त्वाहमचूचुदम् ॥ १०१ ॥
दुर्वार्यतां विदित्वा च भर्तुस्ते ऽतितपस्विन ।
नैनमन्वागमिष्यामि कदाचित्स शपेत माम् ॥ १०२ ॥
आचक्ष्व भद्रे भर्तुस्त्वं सर्वमेव विचेष्टितम् ।
उद्धरस्व च शल्यं मे घोरं हृदि चिरस्थितम् ॥ १०३ ॥
जरत्कारुस्ततो वाक्यमित्युक्ता प्रत्यभाषत ।
आश्वासयन्ती संतप्तं वासुकिं पन्नगेश्वरम् ॥ १०४ ॥
पृष्टो मयापत्यहेतो स महात्मा महातपा ।
अस्तीत्युदरमुद्दिश्य ममेदं गतवांश्च स ॥ १०५ ॥

स्वैरेष्वपि न तस्याहं स्मरामि वितथं वचः ।
उक्तपूर्वं कुतो राजन्सांपराये स वक्ष्यति ॥ १०६ ॥
न संतापस्त्वया कार्यः कार्यं प्रति भुजंगमे ।
उत्पत्स्यति हि ते पुत्रो ज्वलनार्कसमप्रभः ॥ १०७ ॥
इत्युक्त्वा स हि मां भ्रातर्गतो भर्ता तपोधनः ।
तस्माद्व्येतु परं दुःखं तवेदं मनसि स्थितम् ॥ १०८ ॥
एतच्छ्रुत्वा स नागेन्द्रो वासुकिः परया मुदा ।
एवमस्त्विति तद्वाक्यं भगिन्याः प्रत्यगृह्णत ॥ १०९ ॥
सान्त्वमानार्थदानैश्च पूजया चानुरूपया ।
सोदर्यां पूजयामास स्वसारं पन्नगोत्तमः ॥ ११० ॥
ततः प्रववृधे गर्भो महातेजा महाप्रभः ।
यथा सोमो द्विजश्रेष्ठ शुक्लपक्षोदितो दिवि ॥ १११ ॥
अथ काले तु सा ब्रह्मन्प्रजज्ञे भुजगस्वसा ।
कुमारं देवगर्भाभं पितृमातृभयापहम् ॥ ११२ ॥
ववृधे स तु तत्रैव नागराजनिवेशने ।
वेदांश्चाधिजगे साङ्गान्भार्गवाच्च्यवनान्मुनेः ॥ ११३ ॥
चीर्णव्रतो बाल एव बुद्धिसत्त्वगुणान्वितः ।
नाम चास्याभवत्ख्यातं लोकेष्वास्तीक इत्युत ॥ ११४ ॥
अस्तीत्युक्त्वा गतो यस्मात्पिता गर्भस्थमेव तम् ।
वनं तस्मादिदं तस्य नामास्तीकेति विश्रुतम् ॥ ११५ ॥
स बाल एव तत्रस्थश्चरन्नमितबुद्धिमान् ।
गृहे पन्नगराजस्य प्रयत्नात्परिरक्षितः ॥ ११६ ॥
भगवानिव देवेशः शूलपाणिर्हिरण्मयः ।
विवर्धमानः सर्वांस्तान्पन्नगानभ्यहर्षयत् ॥ ११७ ॥

---

## 8. Gāndhārī beschenkt Dhṛtarāṣṭra mit hundert Söhnen und einer Tochter (1, 115, 7, 6–41).

वैशंपायन उवाच ।

क्षुच्छ्रमाभिपरिग्लानं द्वैपायनमुपस्थितम् ।
तोषयामास गान्धारी व्यासस्तस्यै वरं ददौ ॥ १ ॥
सा वव्रे सदृशं भर्तुः पुत्राणां शतमात्मनः ।
ततः कालेन सा गर्भं धृतराष्ट्रादथाग्रहीत् ॥ २ ॥

संवत्सरद्वयं तं तु गान्धारी गर्भमाहितम् ।
अप्रजा धारयामास ततस्तां दुःखमाविशत् ॥ ३ ॥
श्रुत्वा कुन्तीसुतं जातं बालार्कसमतेजसम् ।
उदरस्यात्मनः स्थैर्यमुपलभ्यान्वचिन्तयत् ॥ ४ ॥
अज्ञातं धृतराष्ट्रस्य यत्नेन महता ततः ।
सोदरं घातयामास गान्धारी दुःखमूर्छिता ॥ ५ ॥
ततो जज्ञे मांसपेशी लोहाष्ठीलेव संहता ।
द्विवर्षसंभृता कुक्षौ तामुत्स्रष्टुं प्रचक्रमे ॥ ६ ॥
अथ द्वैपायनो ज्ञात्वा त्वरितः समुपागमत् ।
तां स मांसमयीं पेशीं ददर्श जपतां वरः ॥ ७ ॥
ततोऽब्रवीत्सौबलेयीं किमिदं ते चिकीर्षितम् ।
सा चात्मनो मतं सत्यं शशंस परमर्षये ॥ ८ ॥
ज्येष्ठं कुन्तीसुतं जातं श्रुत्वा रविसमप्रभम् ।
दुःखेन परमेणेदमुदरं घातितं मया ॥ ९ ॥
शतं च किल पुत्राणां वितीर्णं मे त्वया पुरा ।
इयं च मे मांसपेशी जाता पुत्रशताय वै ॥ १० ॥

व्यास उवाच ।

एवमेतत्सौबलेयि नैतज्जात्वन्यथा भवेत् ।
वितथं नोक्तपूर्वं मे स्वैरेष्वपि कुतोऽन्यथा ॥ ११ ॥
घृतपूर्णं कुण्डशतं क्षिप्रमेव विधीयताम् ।
शीताभिरद्भिरष्ठीलामिमां च परिषेचय ॥ १२ ॥

वैशंपायन उवाच ।

सा सिच्यमाना त्वष्ठीला बभूव शतधा तदा ।
अङ्गुष्ठपर्वमात्राणां गर्भाणां पृथगेव तु ॥ १३ ॥
ततस्तांस्तेषु कुण्डेषु गर्भानवदधे तदा ।
स्वनुगुप्तेषु देशेषु रक्षां च व्यदधात्ततः ॥ १४ ॥
शशास चैव भगवान्कालेनैतावता पुनः ।
उद्घाटनीयान्येतानि कुण्डानीति स्म सौबलीम् ॥ १५ ॥
इत्युक्त्वा भगवान्व्यासस्तथा प्रतिविधाय च ।
जगाम तपसे धीमान्हिमवन्तं शिलोच्चयम् ॥ १६ ॥
जज्ञे क्रमेण चैतेन तेषां दुर्योधनो नृप ।
तदाख्यातं तु भीष्माय विदुराय च धीमते ॥ १७ ॥

यस्मिन्नहनि दुर्धर्षो जज्ञे दुर्योधनस्तदा ।
तस्मिन्नेव महाबाहुर्जज्ञे भीमो ऽपि वीर्यवान् ॥ १८ ॥
स जातमात्र एवाथ धृतराष्ट्रसुतो नृप ।
रासभारावसदृशं रुराव च ननाद च ॥ १९ ॥
तं खराः प्रत्यभाषन्त गृध्रगोमायुवायसाः ।
वाताश्च प्रववुश्चापि दिग्दाहश्चाभवत्तदा ॥ २० ॥
ततस्तु भीतवद्राजा धृतराष्ट्रो ऽब्रवीदिदम् ।
समानीय बहून्विप्रान्भीष्मं विदुरमेव च ॥ २१ ॥
युधिष्ठिरो राजपुत्रो ज्येष्ठो नः कुलवर्धनः ।
प्राप्तः स्वगुणतो राज्यं न तस्मिन्वाच्यमस्ति नः ॥ २२ ॥
अयं त्वनन्तरस्तस्मादपि राजा भविष्यति ।
एतद्विब्रूत मे तथ्यं यदत्र भविता ध्रुवम् ॥ २३ ॥
वाक्यस्यैतस्य निधने दिक्षु सर्वासु भारत ।
क्रव्यादाः प्राणदन्घोराः शिवाश्चाशिवशंसिनः ॥ २४ ॥
लक्षयित्वा निमित्तानि तानि घोराणि सर्वशः ।
ते ऽब्रुवन्ब्राह्मणा राजन्विदुरश्च महामतिः ॥ २५ ॥
यथेमानि निमित्तानि घोराणि मनुजाधिप ।
उत्थितानि सुते जाते ज्येष्ठे ते पुरुषर्षभ ॥ २६ ॥
व्यक्तं कुलान्तकरणो भवितैष सुतस्तव ।
तस्य शान्तिः परित्यागे गुप्तावपनयो महान् ॥ २७ ॥
शतमेकोनमप्यस्तु पुत्राणां ते महीपते ।
त्यजैनमेकं शान्तिं चेत्कुलस्येच्छसि भारत ॥ २८ ॥
त्यजेदेकं कुलस्यार्थे ग्रामस्यार्थे कुलं त्यजेत् ।
ग्रामं जनपदस्यार्थे आत्मार्थे पृथिवीं त्यजेत् ॥ २९ ॥
स तथा विदुरेणोक्तस्तैश्च सर्वैर्द्विजोत्तमैः ।
न चकार तथा राजा पुत्रस्नेहसमन्वितः ॥ ३० ॥
ततः पुत्रशतं पूर्णं धृतराष्ट्रस्य पार्थिव ।
मासमात्रेण संजज्ञे कन्या चैका शताधिका ॥ ३१ ॥

---

## 9. Die Geschichte des Mandapāla (1, 229, 5, 6—234, 4)

वैशंपायन उवाच ।
आसीन्महर्षिः श्रुतवान्मन्दपाल इति श्रुतः ।
स मार्गमाश्रितो राजन्नृषीणामूर्ध्वरेतसाम् ॥ १ ॥

स गत्वा तपस पारं देहमुत्सृज्य भारत ।
जगाम पितृलोकाय न लेभे तत्र तत्फलम् ॥ २ ॥
स लोकानफलान्दृष्ट्वा तपसा निर्जितानपि ।
पप्रच्छ धर्मराजस्य समीपस्थान्दिवौकस ॥ ३ ॥
किमर्थमावृता लोका ममैते तपसार्जिता ।
किं मया न कृतं तत्र यस्यैतत्कर्मण फलम् ॥ ४ ॥
तत्राहं तत्करिष्यामि यदर्थमिदमावृतम् ।
फलमेतस्य तपस कथयध्व दिवौकस ॥ ५ ॥

देवा ऊचु ।

ऋणिनो मानवा ब्रह्मञ्जायन्ते येन तच्छृणु ।
क्रियाभिर्ब्रह्मचर्येण प्रजया च न संशय ॥ ६ ॥
तदपाक्रियते सर्वं यज्ञेन तपसा सुतै ।
तपस्वी यज्ञकृच्चासि न तु ते विद्यते प्रजा ॥ ७ ॥
त इमे प्रसवस्यार्थे तव लोका समावृता ।
प्रजायस्व ततो लोकानुपभोक्ष्यसि पुष्कलान् ॥ ८ ॥
पुंनाम्नो नरकात्पुत्रस्त्रायते पितरं श्रुति ।
तस्मादपत्यसंताने यतस्व ब्रह्मवित्तम ॥ ९ ॥

वैशंपायन उवाच ।

तच्छ्रुत्वा मन्दपालस्तु वचस्तेषां दिवौकसाम् ।
क्व नु शीघ्रमपत्य स्याद्बहुलं चेत्यचिन्तयत् ॥ १० ॥
शार्ङ्गिकां शार्ङ्गिको भूत्वा जरितां समुपेयिवान् ।
तस्यां पुत्रानजनयच्चतुरो ब्रह्मवादिन ॥ ११ ॥
तानपास्य स तत्रैव जगाम लपितां प्रति ।
बालान्सुतानण्डगतान्सह मात्रा मुनिर्वने ॥ १२ ॥
तस्मिन्गते महाभागे लपितां प्रति भारत ।
अपत्यस्नेहसंविग्ना जरिता बह्वचिन्तयत् ॥ १३ ॥
न जहौ पुत्रशोकार्ता जरिता खाण्डवे सुतान् ।
बभार चैतान्संजातान्स्ववृत्त्या स्नेहविक्लवा ॥ १४ ॥
ततो ऽपि खाण्डवं दग्धुमायान्तं दृष्टवानृषि ।
मन्दपालश्चरंस्तस्मिन्वने लपितया सह ॥ १५ ॥
तं संकल्पं विदित्वास्य ज्ञात्वा पुत्रांश्च बालकान् ।
सो ऽपि तुष्टाव विप्रर्षिर्ब्राह्मणो जातवेदसम् ॥ १६ ॥

त्वमग्ने सर्वलोकानां मुखं त्वमसि हव्यवाट् ।
त्वमन्तः सर्वभूतानां गूढश्चरसि पावक ॥ १७ ॥
त्वामेकमाहुः कवयस्त्वामाहुस्त्रिविधं पुनः ।
त्वामष्टधा कल्पयित्वा यज्ञवाहमकल्पयन् ॥ १८ ॥
त्वया विश्वमिदं सृष्टं वदन्ति परमर्षयः ।
त्वदृते हि जगत्कृत्स्नं सद्यो नश्येद्धुताशन ॥ १९ ॥
तुभ्यं कृत्वा नमो विप्राः स्वकर्मविजितां गतिम् ।
गच्छन्ति सह पत्नीभिः सुतैरपि च शाश्वतीम् ॥ २० ॥
त्वामग्ने जलदानाहुः खे विषक्तान्सविद्युतः ।
दहन्ति सर्वभूतानि त्वत्तो निष्क्रम्य हेतयः ॥ २१ ॥
जातवेदस्त्वयैवेदं विश्वं सृष्टं महाद्युते ।
तवैव कर्मविहितं भूतं सर्वं चराचरम् ॥ २२ ॥
त्वयापो विहिताः पूर्वं त्वयि सर्वमिदं जगत् ।
त्वयि हव्यं च कव्यं च यथावत्संप्रतिष्ठितम् ॥ २३ ॥
त्वमेव दहनो देव त्वं धाता त्वं बृहस्पतिः ।
त्वमश्विनौ यमौ मित्रः सोमस्त्वमसि चानिलः ॥ २४ ॥
एवं स्तुतस्तदा तेन मन्दपालेन पावकः ।
तुतोष तस्य नृपते मुनेरमिततेजसः ॥ २५ ॥
उवाच चैनं प्रीतात्मा किमिष्टं करवाणि ते ।
तमब्रवीन्मन्दपालः प्राञ्जलिर्हव्यवाहनम् ॥ २६ ॥
प्रदहन्खाण्डवं दावं मम पुत्रान्विसर्जय ।
॥ २७ ॥

तथेति तत्प्रतिश्रुत्य भगवान्हव्यवाहनः ।
खाण्डवे तेन कालेन प्रजज्वाल दिधक्षया ॥ २८ ॥
ततः प्रज्वलिते वह्नौ शार्ङ्गकास्ते सुदुःखिताः ।
व्यथिताः परमोद्विग्ना नाधिजग्मुः परायणम् ॥ २९ ॥
निशम्य पुत्रकान्बालान्माता तेषां तपस्विनी ।
जरिता शोकदुःखार्ता विललापाकुलेन्द्रिया ॥ ३० ॥
अयमग्निर्दहन्कक्षमित आयाति भीषणः ।
जगत्संदीपयन्भीमो मम दुःखविवर्धनः ॥ ३१ ॥
इमे च मां कर्षयन्ति शिशवो मन्दचेतसः ।
अबर्हाश्चरणैर्हीनाः पूर्वेषां नः परायणाः ॥ ३२ ॥

वासयन्दावमायाति लेलिहानो महीरुहान् ।
अजातपक्षाश्च सुता न शक्ता सरणे मम ॥ ३३ ॥
आदाय च न शक्नोमि पुत्रान्सरितुमन्यत ।
न च त्यक्तुमहं शक्ता हृदय दूयतीव मे ॥ ३४ ॥
क नु जह्यामहं पुत्र कमादाय व्रजाम्यहम् ।
कि नु मे स्यात्कृतं कृत्वा मन्यध्वं पुत्रका कथम् ॥ ३५ ॥
चिन्तयाना विमोक्ष वो नाधिगच्छामि कि चन ।
छादयिष्यामि वो गात्रै करिष्ये मरण सह ॥ ३६ ॥
जरितारौ कुल ह्येतज्ज्येष्ठत्वेन प्रतिष्ठितम् ।
सारिसृक्क प्रजायेत पितृणां कुलवर्धन ॥ ३७ ॥
स्तम्बमित्रस्तप कुर्याद्द्रोणो ब्रह्मविदां वर ।
इत्येवमुक्त्वा प्रययौ पिता वो निर्घृण पुरा ॥ ३८ ॥
कमुपादाय शक्येत तर्तुं कष्टापदुत्तमा ।
कि नु कृत्वा कृतं कार्य भवेदिति च विह्वला ॥ ३९ ॥
एव ब्रुवाणा शार्ङ्गास्ते प्रत्यूचुरथ मातरम् ।
स्नेहमुत्सृज्य मातस्त्व पत यत्र न हव्यवाट् ॥ ४० ॥
अस्मास्विह विनष्टेषु भवितार सुतास्तव ।
त्वयि मातर्विनष्टाया न न स्यात्कुलसंतति ॥ ४१ ॥
अन्ववेक्ष्यैतदुभय क्षेमं स्याद्यत्कुलस्य न ।
तद्वै कर्तुं पर कालो मातरेष भवेत्तव ॥ ४२ ॥
मा त्व सर्वविनाशाय स्नेह कार्षी सुतेषु न ।
नहीद कर्म मोघं स्याल्लोककामस्य न पितु ॥ ४३ ॥

जरितोवाच ।

इदमाखोर्बिल भूमौ वृक्षस्यास्य समीपत ।
तदाविशध्व त्वरिता वह्नेरत्र न वो भयम् ॥ ४४ ॥
ततोऽहं पांसुना छिद्रमपिधास्यामि पुत्रका ।
एव प्रतिकृत मन्ये ज्वलत कृष्णवर्त्मन ॥ ४५ ॥
तत एष्याम्यतीतेऽग्नौ विहर्तुं पांसुसंचयम् ।
रोचतामेष वो वादो मोक्षार्थं च हुताशनात् ॥ ४६ ॥

शार्ङ्गका ऊचु ।

अबर्हान्मांसभूतान्न क्रव्यादाखुर्विनाशयेत् ।
पश्यमाना भयमिद प्रवेष्टु नात्र शक्नुम ॥ ४७ ॥

कथमग्निर्न नो धक्ष्येत्कथमाखुर्न भक्षयेत् ।
कथं न स्यात्पिता मोघः कथं माता ध्रियेत नः ॥ ४८ ॥
बिले आखोर्विनाशः स्यादग्नेराकाशचारिणाम् ।
अन्ववेक्ष्यैतदुभयं श्रेयान्दाहो न भक्षणम् ॥ ४९ ॥
गर्हितं मरणं नः स्यादाखुना भक्षिते बिले ।
शिष्टादिष्टः परित्यागः शरीरस्य हुताशने ॥ ५० ॥

जरितोवाच ।

अस्माद्बिलान्निष्पतितमाखुं श्येनो जहार तम् ।
क्षुद्रं पद्भ्यां गृहीत्वा च यातो नात्र भयं हि वः ॥ ५१ ॥

शार्ङ्गका ऊचुः ।

न हृतं तं वयं विद्मः श्येनेनाखुं कथं चन ।
अन्ये ऽपि भवितारो ऽत्र तेभ्यो ऽपि भयमेव नः ॥ ५२ ॥
संशयो ऽग्निरिहागच्छेद्दृष्टं वायोर्निवर्तनम् ।
मृत्युर्नो बिलवासिभ्यो बिले स्यान्नात्र संशयः ॥ ५३ ॥
निःसंशयात्संशयितो मृत्युर्मातर्विशिष्यते ।
चर खे त्वं यथाकामं पुत्रानाप्स्यसि शोभनान् ॥ ५४ ॥

जरितोवाच ।

अहं वै श्येनमायान्तमद्राक्षं बिलमन्तिकात् ।
संचरन्तं समादाय जहाराखुं बिलाद्बली ॥ ५५ ॥
तं पतन्तमहं श्येनं त्वरिता पृष्ठतो ऽन्वगाम् ।
आशिषो ऽस्य प्रयुञ्जाना हरतो मूषिकं बिलात् ॥ ५६ ॥
यो नो द्वेष्टारमादाय श्येनराज प्रधावसि ।
भव त्वं दिवमास्थाय निरमित्रो हिरण्मयः ॥ ५७ ॥
यदा स भक्षितस्तेन क्षुधितेन पतत्रिणा ।
तदाहं तमनुज्ञाप्य प्रत्युपायां गृहान्प्रति ॥ ५८ ॥
प्रविशध्वं बिलं पुत्रा विस्रब्धा नास्ति वो भयम् ।
श्येनेन मम पश्यन्त्या हृत आखुर्न संशयः ॥ ५९ ॥

शार्ङ्गका ऊचुः ।

न विद्महे हृतं मातः श्येनेनाखुं कथं चन ।
अविज्ञाय न शक्यामः प्रवेष्टुं बिलमद्य वै ॥ ६० ॥

जरितोवाच ।

अहं हि तं प्रजानामि हृतं श्येनेन मूषिकम् ।
अत एव भयं नास्ति क्रियतां वचनं मम ॥ ६१ ॥

शार्ङ्गका ऊचुः ।

न त्वं मिथ्योपचारेण मोचयेथा भयाद्धि नः ।
समाकुलेषु ज्ञानेषु न बुद्धिकृतमेव तत् ॥ ६२ ॥
न चोपकृतमस्माभिर्न चास्मान्वेत्थ ये वयम् ।
पीड्यमाना बिभर्ष्यस्मान्का सती के वयं तव ॥ ६३ ॥
तरुणी दर्शनीयासि समर्था भर्तुरेषणे ।
अनुगच्छ पतिं मातः पुत्रानाप्स्यसि शोभनान् ॥ ६४ ॥
वयमप्यग्निमाविश्य लोकानाप्स्यामहे शुभान् ।
अथास्मान्न दहेदग्निरायास्त्वं पुनरेव नः ॥ ६५ ॥

वैशंपायन उवाच ।

एवमुक्ता ततः शार्ङ्गी पुत्रानुत्सृज्य खाण्डवे ।
जगाम त्वरिता देशं क्षेममग्नेरनामयम् ॥ ६६ ॥
ततस्तीक्ष्णार्चिरभ्यागात्त्वरितो हव्यवाहनः ।
यत्र शार्ङ्गा बभूवुस्ते मन्दपालस्य पुत्रकाः ॥ ६७ ॥
ते शार्ङ्गा ज्वलनं दृष्ट्वा ज्वलन्तं स्वेन तेजसा ।
जरितारिस्ततो वाक्यं श्रावयामास पावकम् ॥ ६८ ॥
पुरतः कृच्छ्रकालस्य धीमाञ्जागर्ति पूरुषः ।
स कृच्छ्रकालं संप्राप्य व्यथते नैव कर्हि चित् ॥ ६९ ॥
यस्तु कृच्छ्रमनुप्राप्तं विचेता नावबुध्यते ।
स कृच्छ्रकाले व्यथितो न प्रजानाति किं चन ॥ ७० ॥

सारिसृक्क उवाच ।

धीरस्त्वमसि मेधावी प्राणकृच्छ्रमिदं च नः ।
प्राज्ञः शूरो बहूनां हि भवत्येको न संशयः ॥ ७१ ॥

स्तम्बमित्र उवाच ।

ज्येष्ठस्त्राता भवति वै ज्येष्ठो मुञ्चति कृच्छ्रतः ।
ज्येष्ठश्चेन्न प्रजानाति कनीयान्किं करिष्यति ॥ ७२ ॥

द्रोण उवाच ।

हिरण्यरेतास्त्वरितो ज्वलन्नायाति नः क्षयम् ।
सप्तजिह्वाननः क्रूरो लेलिहानो विसर्पति ॥ ७३ ॥

वैशंपायन उवाच ।

एवमुक्तो भ्रातृभिस्तु जरितारिर्विभावसुम् ।
तुष्टाव प्राञ्जलिर्भूत्वा यथावत्कृणु पार्थिव ॥ ७४ ॥

आत्मासि वायोर्ज्वलन शरीरमसि वीरुधाम् ।
योनिरापश्च ते शुक्र योनिस्त्वमसि चाम्भसः ॥ ७५ ॥
ऊर्ध्वं चाधश्च सर्पन्ति पृष्ठतः पार्श्वतस्तथा ।
अर्चिषस्ते महावीर्य रश्मयः सवितुर्यथा ॥ ७६ ॥

सारिसृक्क उवाच ।

माता प्रनष्टा पितरं न विद्मः पक्षा जाता नैव नो धूमकेतो ।
न नस्त्राता विद्यते वै त्वदन्यस्तस्मादस्मांस्त्राहि बालांस्त्वमग्ने ॥ ७७ ॥
यदग्ने ते शिवं रूपं ये च ते सप्त हेतयः ।
तेन नः परिपाहि त्वमार्तान्नः शरणैषिणः ॥ ७८ ॥
त्वमेवैकस्तपसे जातवेदो नान्यस्तप्ता विद्यते गोषु देव ।
ऋषीनस्मान्बालकान्पालयस्व परेणास्मान्प्रैहि वै हव्यवाह ॥ ७९ ॥

स्तम्बमित्र उवाच ।

सर्वमग्ने त्वमेवैकस्त्वयि सर्वमिदं जगत् ।
त्वं धारयसि भूतानि भुवनं त्वं बिभर्षि च ॥ ८० ॥
त्वमग्निर्हव्यवाहस्त्वं त्वमेव परमं हविः ।
मनीषिणस्त्वां यजन्ते बहुधा चैकधापि च ॥ ८१ ॥
सृष्ट्वा लोकांस्त्रीनिमान्हव्यवाह काले प्राप्ते पचसि पुनः समिद्धः ।
त्वं सर्वस्य भुवनस्य प्रसूतिस्त्वमेवाग्ने भवसि पुनः प्रतिष्ठा ॥ ८२ ॥

द्रोण उवाच ।

त्वमन्नं प्राणिभिर्भुक्तमन्तर्भूतो जगत्पते ।
नित्यं प्रवृद्धः पचसि त्वयि सर्वं प्रतिष्ठितम् ॥ ८३ ॥
सूर्यो भूत्वा रश्मिभिर्जातवेदो भूमेरम्भो भूमिजातान्रसांश्च ।
विश्वानादाय पुनरुत्सृज्य काले दृष्ट्वा वृष्ट्या भावयसीह शुक्र ॥ ८४ ॥
त्वत्त एताः पुनः शुक्र वीरुधो हरितच्छदाः ।
जायन्ते पुष्करिण्यश्च समुद्रश्च महोदधिः ॥ ८५ ॥
इदं वै सद्म तिग्मांशो वरुणस्य परायणम् ।
शिवस्त्राता भवास्माकं मास्मानद्य विनाशय ॥ ८६ ॥
पिङ्गाक्ष लोहितग्रीव कृष्णवर्त्मन्हुताशन ।
परेण प्रैहि मुञ्चास्मान्सागरस्य गृहानिव ॥ ८७ ॥

वैशंपायन उवाच ।

एवमुक्तो जातवेदा द्रोणेन ब्रह्मवादिना ।
द्रोणमाह प्रतीतात्मा मन्दपालप्रतिज्ञया ॥ ८८ ॥

ऋषिर्द्रोणस्त्वमसि वै ब्रह्मैतद्व्याहृतं त्वया ।
ईप्सितं ते करिष्यामि न च ते विद्यते भयम् ॥ ८९ ॥
मन्दपालेन वै यूयं मम पूर्वं निवेदिता ।
वर्जयेः पुत्रकान्मह्यं दहन्दावमिति स्म ह ॥ ९० ॥
तस्य तद्वचनं द्रोण त्वया यच्चेह भाषितम् ।
उभयं मे गरीयस्तु ब्रूहि किं करवाणि ते ॥ ९१ ॥

द्रोण उवाच ।

इमे मार्जारका शुक्र नित्यमुद्वेजयन्ति नः ।
एतान्कुरुष्व दंष्ट्राग्रे हुताशन सबान्धवान् ॥ ९२ ॥

वैशंपायन उवाच ।

तथा तत्कृतवानग्निरभ्यनुज्ञाय शार्ङ्गकान् ।
ददाह खाण्डवं दावं समिद्धो जनमेजय ॥ ९३ ॥
मन्दपालोऽपि कौरव्य चिन्तयामास पुत्रकान् ।
उक्त्वापि च स तिग्मांशुं नैव शर्माधिगच्छति ॥ ९४ ॥
स तप्यमान पुत्रार्थे लपितामिदमब्रवीत् ।
कथ न्वशक्ता प्लवने लपिते मम पुत्रका ॥ ९५ ॥
वर्धमाने हुतवहे वाते चाशु प्रवायति ।
असमर्था विमोक्षाय भविष्यन्ति ममात्मजा ॥ ९६ ॥
कथं न्वशक्ता त्राणाय माता तेषां तपस्विनी ।
भविष्यति हि शोकार्ता पुत्रत्राणमपश्यती ॥ ९७ ॥
कथमुड्डीयने ऽशक्तान्पतने च ममात्मजान् ।
संतप्यमाना बहुधा वाशमाना प्रधावति ॥ ९८ ॥
जरितारि कथ पुत्र सारिसृक्क कथं च मे ।
स्तम्बमित्र कथं द्रोण कथं सा च तपस्विनी ॥ ९९ ॥
लालप्यमानं तमृषिं मन्दपाल तथा वने ।
लपिता प्रत्युवाचेद् सासूयमिव भारत ॥ १०० ॥
न ते पुत्रेष्ववेक्षास्ति यानृषीनुक्तवानसि ।
तेजस्विनो वीर्यवतो न तेषां ज्वलनाद्भयम् ॥ १०१ ॥
त्वयाग्नौ ते परीताश्च स्वयं हि मम संनिधौ ।
प्रतिश्रुतं तथा चेति ज्वलनेन महात्मना ॥ १०२ ॥
लोकपालो न तां वाचमुक्त्वा मिथ्या करिष्यति ।
समर्थं बन्धुकृत्येन तेन ते स्वस्थमानसम् ॥ १०३ ॥

तामेव तु मया मित्वा चिन्तयन्परितप्यसे ।
ध्रुवं मयि न ते स्नेहो यथा तस्यां पुराभवत् ॥ १०४ ॥
न हि पक्षवता न्याय्यं निःस्नेहेन सुहृज्जने ।
पीड्यमानान् उपद्रष्टुं शक्तेनात्मा कथंचन ॥ १०५ ॥
गच्छ त्वं जरितामेव यदर्थं परितप्यसे ।
चरिष्याम्यहमप्येका यथा कुपुरुषाश्रिता ॥ १०६ ॥

मन्दपाल उवाच ।

नाहमेवं चरे लोके यथा त्वमभिमन्यसे ।
अपत्यहेतोर्विचरे तच्च कृच्छ्रगतं मम ॥ १०७ ॥
भूतं हित्वा च भाव्यर्थे योऽवलम्बेत मन्दधीः ।
अवमन्येत तं लोको यथेच्छसि तथा कुरु ॥ १०८ ॥
एष हि प्रज्वलन्नग्निर्लेलिहानो महीरुहान् ।
आविषे हृदि संतापं जनयत्यशिवं मम ॥ १०९ ॥

वैशंपायन उवाच ।

तस्माद्देशादतिक्रान्ते ज्वलने जरिता पुनः ।
जगाम पुत्रकानेव त्वरिता पुत्रगृद्धिनी ॥ ११० ॥
सा तान्कुशलिनः सर्वान्निर्मुक्ताञ्जातवेदसः ।
रोरूयमाणान्ददृशे वने पुत्रान्निरामयान् ॥ १११ ॥
अश्रूणि मुमुचे तेषां दर्शनात्सा पुनः पुनः ।
एकैकशश्च तान्सर्वान्क्रोशमानान्वपद्यत ॥ ११२ ॥
ततोऽभ्यगच्छत्सहसा मन्दपालोऽपि भारत ।
अथ ते सर्व एवैनं नाभ्यनन्दंस्तदा सुताः ॥ ११३ ॥
लालप्यमानमेकैकं जरितां च पुनः पुनः ।
न चैवोचुस्तदा किंचित्तमृषिं साध्वसाधु वा ॥ ११४ ॥

मन्दपाल उवाच ।

ज्येष्ठः सुतस्ते कतमः कतमस्तस्य चानुजः ।
मध्यमः कतमः पुत्रः कनीयान्कतमश्च ते ॥ ११५ ॥
एवं ब्रुवन्तं दुःखार्तं किं मां न प्रतिभाषसे ।
कृतवानपि हि त्यागं नैव शान्तिमितो लभे ॥ ११६ ॥

जरितोवाच ।

किं नु ज्येष्ठेन ते कार्यं किमनन्तरजेन ते ।
किं वा मध्यमजातेन किं कनिष्ठेन वा पुनः ॥ ११७ ॥

यां त्वं मां सर्वतो हीनामुत्सृज्यासि गतः पुरा ।
तामेव लपितां गच्छ तरुणीं चारुहासिनीम् ॥ ११८ ॥

मन्दपाल उवाच ।

सापत्नकमृते लोके नान्यदर्थविनाशनम् ।
वैराग्निदीपनं चैव भृशमुद्वेगकारि च ॥ ११९ ॥
सुव्रता चापि कल्याणी सर्वलोकपरिश्रुता ।
अरुन्धती महात्मानं वसिष्ठं पर्यशङ्कत ॥ १२० ॥
विशुद्धभावमत्यन्तं सदा प्रियहिते रतम् ।
सप्तर्षिमध्यगं वीरमवमेने च तं मुनिम् ॥ १२१ ॥
अपध्यानेन सा तेन धूमारुणसमप्रभा ।
लक्ष्यालक्ष्या नातिरूपा निमित्तमिव दृश्यते ॥ १२२ ॥
अपत्यहेतोः संप्राप्तं तथा त्वमपि मामिह ।
इष्टमेव पतिं मत्वा सा यथैवाद्य वर्तसे ॥ १२३ ॥
नैव भार्येति विश्वासः कार्यः पुंसा कथं चन ।
नहि कार्यमनुध्याति नारी पुत्रवती सती ॥ १२४ ॥

वैशंपायन उवाच ।

ततस्ते सर्व एवैनं पुत्राः सम्यगुपासते ।
स च तानात्मजान्सर्वानाश्वासयितुमुद्यतः ॥ १२५ ॥

मन्दपाल उवाच ।

युष्माकमपवर्गार्थं विज्ञप्तो ज्वलनो मया ।
अग्निना च तथेत्येवं प्रतिज्ञातं महात्मना ॥ १२६ ॥
अग्नेर्वचनमाज्ञाय मातुर्धर्मज्ञतां च वः ।
भवतां च परं वीर्यं पूर्वं नाहमिहागतः ॥ १२७ ॥
न संतापो हि वः कार्यः पुत्रका हृदि मां प्रति ।
ऋषीन्वेद हुताशो ऽपि ब्रह्म तद्विदितं च वः ॥ १२८ ॥

वैशंपायन उवाच ।

एवमाश्वास्य तान्पुत्रान्भार्यामादाय च द्विजः ।
मन्दपालस्ततो देशादन्यं देशं जगाम ह ॥ १२९ ॥

---

## 10 Schilderung der Regenzeit und des Herbstes
(3, 182, 1–18)

वैशम्पायन उवाच ।

निदाघान्तकरः कालः सर्वभूतसुखावहः ।
तत्रैव वसतां तेषां प्रावृट्समभिपद्यत ॥ १ ॥
छादयन्तो महाघोषाः खं दिशश्च बलाहकाः ।
प्रववर्षुर्दिवारात्रमसिताः सततं तदा ॥ २ ॥
तपात्ययनिकेताश्च शतशोऽथ सहस्रशः ।
अपेतार्कप्रभाजालाः सविद्युद्विमलप्रभाः ॥ ३ ॥
विरूढशष्पा धरणी मत्तदंशसरीसृपा ।
बभूव पयसा सिक्ता शान्ता सर्वमनोरमा ॥ ४ ॥
न स्म प्रज्ञायते किंचिदम्भसा समवस्तृते ।
समं वा विषमं वापि नद्यो वा स्थावराणि वा ॥ ५ ॥
क्षुब्धतोया महावेगाः श्वसमाना इवाशुगाः ।
सिन्धवः शोभयां चक्रुः काननानि तपात्यये ॥ ६ ॥
नदतां काननान्तेषु श्रूयन्ते विविधाः स्वनाः ।
वृष्टिभिश्छाद्यमानानां वराहमृगपक्षिणाम् ॥ ७ ॥
स्तोककाः शिखिनश्चैव पुंस्कोकिलगणैः सह ।
मत्ताः परिपतन्ति स्म दर्दुराश्चैव दर्पिताः ॥ ८ ॥
तथा बहुविधाकारा प्रावृण्मेघानुनादिता ।
अभ्यतीता शिवा तेषां चरतां मरुधन्वसु ॥ ९ ॥
क्रौञ्चहंससमाकीर्णा शरत्प्रमुदिताभवत् ।
रूढकक्षवनप्रस्था प्रसन्नजलनिम्नगा ॥ १० ॥
विमलाकाशनक्षत्रा शरत्तेषां शिवाभवत् ।
मृगद्विजसमाकीर्णा पाण्डवानां महात्मनाम् ॥ ११ ॥
दृश्यन्ते शान्तरजसः क्षपा जलदशीतलाः ।
ग्रहनक्षत्रसंघैश्च सोमेन च विराजिताः ॥ १२ ॥
कुमुदैः पुण्डरीकैश्च शीतवारिधराः शिवाः ।
नदीः पुष्करिणीश्चैव ददृशुः समलंकृताः ॥ १३ ॥
आकाशनीकाशतटां तीरवानीरसंकुलाम् ।
बभूव चरतां हर्षः पुण्यतीर्थां सरस्वतीम् ॥ १४ ॥
ते वै मुमुदिरे वीराः प्रसन्नसलिलां शिवाम् ।
पश्यन्तो दृढधन्वानः परिपूर्णां सरस्वतीम् ॥ १५ ॥

तेषां पुण्यतमा रात्रिः पर्वसंधौ स्म शारदी ।
तत्रैव वसतामासीत्कार्त्तिकी जनमेजय ॥ १६ ॥
पुण्यकृद्भिर्महासत्त्वैस्तापसैः सह पाण्डवाः ।
तत्सर्वे भरतश्रेष्ठाः समूहुर्योगमुत्तमम् ॥ १७ ॥
तमिस्राभ्युदये तस्मिन्धौम्येन सह पाण्डवाः ।
सूतैः पौरोगवैश्चैव काम्यकं प्रययुर्वनम् ॥ १८ ॥

---

# VIII. Rāmāyaṇa.

## 1. Schilderung des Winters (ed. Bomb. 3, 16, 1–26).

वसतस्तस्य तु सुखं राघवस्य महात्मनः ।
शरद्व्यपाये हेमन्त ऋतुरिष्टः प्रवर्तत ॥ १ ॥
स कदा चित्प्रभातायां शर्वर्यां रघुनन्दनः ।
प्रययावभिषेकार्थं रम्यां गोदावरीं नदीम् ॥ २ ॥
प्रह्वः कलशहस्तस्तु सीतया सह वीर्यवान् ।
पृष्ठतोऽनुव्रजन्भ्राता सौमित्रिरिदमब्रवीत् ॥ ३ ॥
अयं स कालः संप्राप्तः प्रियो यस्ते प्रियंवद ।
अलंकृत इवाभाति येन संवत्सरः शुभः ॥ ४ ॥
नीहारपरुषो वायुः पृथिवी सस्यमालिनी ।
जलान्यनुपभोग्यानि सुभगो हव्यवाहनः ॥ ५ ॥
नवाग्रयणपूजाभिरभ्यर्च्य पितृदेवताः ।
कृताग्रयणकाः काले सन्तो विगतकल्मषाः ॥ ६ ॥
प्राज्यकामा जनपदाः संपन्नतरगोरसाः ।
विचरन्ति महीपाला यात्रार्थं विजिगीषवः ॥ ७ ॥
सेवमाने दृढं सूर्ये दिशमन्तकसेविताम् ।
विहीनतिलकेव स्त्री नोत्तरा दिक्प्रकाशते ॥ ८ ॥
प्रकृत्या हिमकोशाढ्यो दूरसूर्यश्च सांप्रतम् ।
यथार्थनामा सुव्यक्तं हिमवान्हिमवान्गिरिः ॥ ९ ॥
अत्यन्तसुखसंचारा मध्याह्ने स्पर्शतः सुखाः ।
दिवसाः सुभगादित्याश्छायासलिलदुर्भगाः ॥ १० ॥

मृदुसूर्याः सनीहाराः पटुशीताः समाहिताः ।
शून्यारण्या हिमध्वस्ता दिवसा भान्ति सांप्रतम् ॥ ११ ॥
निवृत्ताकाशशयनाः पुष्यनीता हिमारुणाः ।
शीतवृद्धतरायामास्त्रियामा यान्ति सांप्रतम् ॥ १२ ॥
रविसंक्रान्तसौभाग्यस्तुषारारुणमण्डलः ।
निश्वासान्ध इवादर्शश्चन्द्रमा न प्रकाशते ॥ १३ ॥
ज्योत्स्ना तुषारमलिना पौर्णमास्यां न राजते ।
सीतेव चातपश्यामा लक्ष्यते न च शोभते ॥ १४ ॥
प्रकृत्या शीतलस्पर्शो हिमविद्धश्च सांप्रतम् ।
प्रवाति पश्चिमो वायुः काले द्विगुणशीतलः ॥ १५ ॥
बाष्पच्छन्नान्यरण्यानि यवगोधूमवन्ति च ।
शोभन्ते ऽभ्युदिते सूर्ये नदद्भिः क्रौञ्चसारसैः ॥ १६ ॥
खर्जूरपुष्पाकृतिभिः शिरोभिः पूर्णतण्डुलैः ।
शोभन्ते किं चिदालम्बाः शालयः कनकप्रभाः ॥ १७ ॥
मयूखैरुपसर्पद्भिर्हिमनीहारसंवृतैः ।
दूरमभ्युदितः सूर्यः शशाङ्क इव लक्ष्यते ॥ १८ ॥
अग्राह्यवीर्यः पूर्वाह्णे मध्याह्ने स्पर्शतः सुखः ।
संसक्तः किं चिदापाण्डुरातपः शोभते चितौ ॥ १९ ॥
अवश्यायनिपातेन किंचित्प्रक्लिन्नशाद्वला ।
वनानां शोभते भूमिर्निविष्टतरुणातपा ॥ २० ॥
स्पृशन्सुविपुलं शीतमुदकं द्विरदः सुखम् ।
अत्यन्ततृषितो वन्यः प्रतिसंहरते करम् ॥ २१ ॥
एते हि समुपासीना विहगा जलचारिणः ।
नावगाहन्ति सलिलमप्रगल्भा इवाहवम् ॥ २२ ॥
अवश्यायतमोनद्धा नीहारतमसा वृताः ।
प्रसुप्ता इव लक्ष्यन्ते विपुष्पा वनराजयः ॥ २३ ॥
बाष्पसंछन्नसलिला रुतविज्ञेयसारसाः ।
हिमार्द्रवालुकास्तीरैः सरितो भान्ति साम्प्रतम् ॥ २४ ॥
तुषारपतनाच्चैव मृदुत्वाद्भास्करस्य च ।
शैत्यादगाग्रस्थमपि प्रायेण रसवज्जलम् ॥ २५ ॥
जराजर्झरितैः पत्रैः शीर्णकेसरकर्णिकैः ।
नालशेषा हिमध्वस्ता न भान्ति कमलाकराः ॥ २६ ॥

---

## 2 Indra und Ahalyā werden von Gautama verflucht

(ed Bomb 1, 48, 15—49 10)

गौतमस्य नरश्रेष्ठ पूर्वमासीन्महात्मन ।
आश्रमो दिव्यसकाश सुरैरपि सुपूजित ॥ १ ॥
स चात्र तप आतिष्ठदहल्यासहित पुरा ।
वर्षपूगान्यनेकानि राजपुत्र महायश ॥ २ ॥
तस्यान्तरं विदित्वा च सहस्राक्ष शचीपति ।
मुनिवेषधरो भूत्वा अहल्यामिदमब्रवीत् ॥ ३ ॥
ऋतुकाल प्रतीक्षन्ते नार्थिन सुसमाहिते ।
संगमं त्वहमिच्छामि त्वया सह सुमध्यमे ॥ ४ ॥
मुनिवेषं सहस्राक्ष विज्ञाय रघुनन्दन ।
मतिं चकार दुर्मेधा देवराजकुतूहलात् ॥ ५ ॥
अथाब्रवीत्सुरश्रेष्ठ कृतार्थेनान्तरात्मना ।
कृतार्थास्मि सुरश्रेष्ठ गच्छ शीघ्रमित प्रभो ॥ ६ ॥
आत्मानं मां च देवेश सर्वथा रक्ष गौतमात् ।
इन्द्रस्तु प्रहसन्वाक्यमहल्यामिदमब्रवीत् ॥ ७ ॥
सुश्रोणि परितुष्टो ऽस्मि गमिष्यामि यथागतम् ।
एव संगम्य तु तदा निश्चक्रामोटजात्तत ॥ ८ ॥
स संभ्रमात्त्वरन्राम शङ्कितो गौतमं प्रति ।
गौतमं सद्दर्शाथ प्रविशन्त महामुनिम् ॥ ९ ॥
देवदानवदुर्धर्ष तपोबलसमन्वितम् ।
तीर्थोदकपरिक्लिन्नं दीप्यमानमिवानलम् ॥ १० ॥
गृहीतसमिधं तत्र सकुशं मुनिपुंगवम् ।
दृष्ट्वा सुरपतिस्त्रस्तो विषण्णवदनो ऽभवत् ॥ ११ ॥
अथ दृष्ट्वा सहस्राक्ष मुनिवेषधरं मुनि ।
दुर्वृत्त वृत्तसंपन्नो रोषाद्वचनमब्रवीत् ॥ १२ ॥
मम रूपं समास्थाय कृतवानसि दुर्मते ।
अकर्तव्यमिदं यस्माद्विफलस्त्वं भविष्यसि ॥ १३ ॥
गौतमेनैवमुक्तस्य सरोषेण महात्मना ।
पेततुर्वृषणौ भूमौ सहस्राक्षस्य तत्क्षणात् ॥ १४ ॥
तथा शप्त्वा च वै शक्र भार्यामपि च शप्तवान् ।
इह वर्षसहस्राणि बहूनि निवसिष्यसि ॥ १५ ॥

वातभक्षा निराहारा तप्यन्ती भस्मशायिनी ।
अदृश्या सर्वभूतानामाश्रमे ऽस्मिन्वसिष्यसि ॥ १६ ॥
यदैतच्च वन घोर रामो दशरथात्मजः ।
आगमिष्यति दुर्धर्षस्तदा पूता भविष्यसि ॥ १७ ॥
तस्यातिथ्येन दुर्वृत्ते लोभमोहविवर्जिता ।
मत्सकाशे मुदा युक्ता स्ववपुर्धारयिष्यसि ॥ १८ ॥
एवमुक्त्वा महातेजा गौतमो दुष्टचारिणीम् ।
हिमवच्छिखरे रम्ये तपस्तेपे महातपाः ॥ १९ ॥
अफलस्तु ततः शक्रो देवानग्निपुरोगमान् ।
अब्रवीत्त्रस्तनयनः सिद्धगन्धर्वचारणान् ॥ २० ॥
कुर्वता तपसो विघ्नं गौतमस्य महात्मनः ।
क्रोधमुत्पाद्य हि मया सुरकार्यमिदं कृतम् ॥ २१ ॥
अफलो ऽस्मि कृतस्तेन क्रोधात्सा च निराकृता ।
शापमोक्षेण महता तपो ऽस्यापहृत मया ॥ २२ ॥
तन्मां सुरवराः सर्वे सर्षिसंघाः सचारणाः ।
सुरकार्यकरं यूय सफलं कर्तुमर्हथ ॥ २३ ॥
शतक्रतोर्वचः श्रुत्वा देवाः साग्निपुरोगमाः ।
पितृदेवानुपेत्याहुः सर्वे सह मरुद्गणैः ॥ २४ ॥
अय मेषः सवृषणः शक्रो ह्यवृषणः कृतः ।
मेषस्य वृषणौ गृह्य शक्रायाशु प्रयच्छत ॥ २५ ॥
भवतां हर्षणार्थाय ये च दास्यन्ति मानवाः ।
अक्षयं हि फल तेषां यूयं दास्यथ पुष्कलम् ॥ २६ ॥
अग्नेस्तु वचन श्रुत्वा पितृदेवाः समागताः ।
उत्पाट्य मेषवृषणौ सहस्राक्षे न्यवेशयन् ॥ २७ ॥
तदा प्रभृति काकुत्स्थ पितृदेवाः समागताः ।
अफलान्भुञ्जते मेषान्फलैस्तेषामयोजयन् ॥ २८ ॥
इन्द्रस्तु मेषवृषणस्तदा प्रभृति राघव ।
गौतमस्य प्रभावेण तपसा च महात्मनः ॥ २९ ॥

---

### 3. Die Sage von Śunaḥśepa (ed. Bomb. I, 61, 5—62, 27)

एतस्मिन्नेव काले तु अयोध्याधिपतिर्महान् ।
अम्बरीष इति ख्यातो यष्टु समुपचक्रमे ॥ १ ॥

तस्य वै यजमानस्य पशुमिन्द्रो जहार ह ।
प्रनष्टे तु पशौ विप्रो राजानमिदमब्रवीत् ॥ २ ॥
पशुरभ्याहृतो राजन्प्रनष्टस्तव दुर्नयात् ।
अरक्षितारं राजानं घ्नन्ति दोषा नरेश्वर ॥ ३ ॥
प्रायश्चित्तं महद्ध्येतन्नरं वा पुरुषर्षभ ।
आनयस्व पशुं शीघ्रं यावत्कर्म प्रवर्तते ॥ ४ ॥
उपाध्यायवचः श्रुत्वा स राजा पुरुषर्षभ ।
अन्वियेष महाबुद्धिः पशुं गोभिः सहस्रशः ॥ ५ ॥
देशाञ्जनपदांस्तांस्तान्नगराणि वनानि च ।
आश्रमाणि च पुण्यानि मार्गमाणो महीपतिः ॥ ६ ॥
स पुत्रसहितं तात सभार्यं रघुनन्दन ।
भृगुतुङ्गे समासीनमृचीकं संददर्श ह ॥ ७ ॥
तमुवाच महातेजाः प्रणम्याभिप्रसाद्य च ।
पृष्ट्वा सर्वत्र कुशलमृचीकं तमिदं वचः ॥ ८ ॥
गवां शतसहस्रेण विक्रीणीषे सुतं यदि ।
पशोरर्थे महाभाग कृतकृत्योऽस्मि भार्गव ॥ ९ ॥
सर्वे परिगता देशा यज्ञियं न लभे पशुम् ।
दातुमर्हसि मूल्येन सुतमेकमितो मम ॥ १० ॥
एवमुक्तो महातेजा ऋचीकस्त्वब्रवीद्वचः ।
नाहं ज्येष्ठं नरश्रेष्ठ विक्रीणीयां कथं चन ॥ ११ ॥
ऋचीकस्य वचः श्रुत्वा तेषां माता महात्मनाम् ।
उवाच नरशार्दूलमम्बरीषमिदं वचः ॥ १२ ॥
अविक्रेयं सुतं ज्येष्ठं भगवानाह भार्गवः ।
ममापि दयितं विद्धि कनिष्ठं शुनकं प्रभो ॥ १३ ॥
प्रायेण हि नरश्रेष्ठ ज्येष्ठाः पितृषु वल्लभाः ।
मातॄणां च कनीयांसस्तस्माद्रक्षे कनीयसम् ॥ १४ ॥
उक्तवाक्ये मुनौ तस्मिन्मुनिपत्न्यां तथैव च ।
शुनःशेपः स्वयं राम मध्यमो वाक्यमब्रवीत् ॥ १५ ॥
पिता ज्येष्ठमविक्रेयं माता चाह कनीयसम् ।
विक्रेयं मध्यमं मन्ये राजपुत्र नयस्व माम् ॥ १६ ॥
गवां शतसहस्रेण शुनःशेपं नरेश्वरः ।
गृहीत्वा परमप्रीतो जगाम रघुनन्दन ॥ १७ ॥

अम्बरीषस्तु राजर्षी रथमारोप्य सत्वरः ।
शुनःशेपं महातेजा जगामाशु महायशाः ॥ १८ ॥
शुनःशेपो नरश्रेष्ठ गृहीत्वा तु महायशाः ।
व्यश्राम्यत्पुष्करे राजा मध्याह्ने रघुनन्दन ॥ १९ ॥
तस्य विश्रममाणस्य शुनःशेपो महायशाः ।
पुष्करं ज्येष्ठमागम्य विश्वामित्रं ददर्श ह ॥ २० ॥
तप्यन्तमृषिभिः सार्धं मातुलं परमातुरः ।
विषण्णवदनो दीनस्तृष्णया च श्रमेण च ॥ २१ ॥
पपाताङ्के मुने राम वाक्यं चेदमुवाच ह ।
न मे ऽस्ति माता न पिता ज्ञातयो बान्धवाः कुतः ॥ २२ ॥
त्रातुमर्हसि मां सौम्य धर्मेण मुनिपुंगव ।
त्राता त्वं हि नरश्रेष्ठ सर्वेषां त्वं हि भावनः ॥ २३ ॥
राजा च कृतकार्यः स्यादहं दीर्घायुरव्ययः ।
स्वर्गलोकमुपाश्नीयां तपस्तप्त्वा ह्यनुत्तमम् ॥ २४ ॥
स मे नाथो ह्यनाथस्य भव भव्येन चेतसा ।
पितेव पुत्रं धर्मात्मंस्त्रातुमर्हसि किल्बिषात् ॥ २५ ॥
तस्य तद्वचनं श्रुत्वा विश्वामित्रो महातपाः ।
सान्त्वयित्वा बहुविधं पुत्रानिदमुवाच ह ॥ २६ ॥
यत्कृते पितरः पुत्राञ्जनयन्ति शुभार्थिनः ।
परलोकहितार्थाय तस्य कालो ऽयमागतः ॥ २७ ॥
अयं मुनिसुतो बालो मत्तः शरणमिच्छति ।
अस्य जीवितमात्रेण प्रियं कुरुत पुत्रकाः ॥ २८ ॥
सर्वे सुकृतकर्माणः सर्वे धर्मपरायणाः ।
पशुभूता नरेन्द्रस्य तृप्तिमग्नेः प्रयच्छत ॥ २९ ॥
नाथवांश्च शुनःशेपो यज्ञश्चाविघ्नितो भवेत् ।
देवतास्तर्पिताश्च स्युर्मम चापि कृतं वचः ॥ ३० ॥
मुनेस्तद्वचनं श्रुत्वा मधुच्छन्दादयः सुताः ।
साभिमानं नरश्रेष्ठ सलीलमिदमब्रुवन् ॥ ३१ ॥
कथमात्मसुतान्हित्वा त्रायसे ऽन्यसुतं विभो ।
अकार्यमिव पश्यामः श्वमांसमिव भोजने ॥ ३२ ॥
तेषां तद्वचनं श्रुत्वा पुत्राणां मुनिपुंगवः ।
क्रोधसंरक्तनयनो व्याहर्तुमुपचक्रमे ॥ ३३ ॥

नि साध्वसमिद प्रोक्त धर्मादपि विगर्हितम् ।
अतिक्रम्य तु मद्वाक्य दारुण रोमहर्षणम् ॥ ३४ ॥
श्वमासभोजिन सर्वे वासिष्ठा इव जातिषु ।
पूर्णं वर्षसहस्र तु पृथिव्यामनुवत्स्यथ ॥ ३५ ॥
कृत्वा शापसमायुक्तान्पुत्रान्मुनिवरस्तदा ।
शुन शेपमुवाचार्त कृत्वा रक्षा निरामयाम् ॥ ३६ ॥
पवित्रपाशैराबद्धो रक्तमाल्यानुलेपन ।
वैष्णव यूपमासाद्य वाग्भिरग्निमुदाहर ॥ ३७ ॥
इमे च गाथे द्वे दिव्ये गायेथा मुनिपुत्रक ।
अम्बरीषस्य यज्ञे ऽस्मिस्तत सिद्धिमवाप्स्यसि ॥ ३८ ॥
शुन शेपो गृहीत्वा ते द्वे गाथे सुसमाहित ।
त्वरया राजसिंह तमम्बरीषमुवाच ह ॥ ३९ ॥
राजसिंह महाबुद्धे शीघ्र गच्छामहे वयम् ।
निवर्तयस्व राजेन्द्र दीक्षा च समुपाहर ॥ ४० ॥
तद्वाक्यमृषिपुत्रस्य श्रुत्वा हर्षसमन्वित ।
जगाम नृपति शीघ्रं यज्ञवाटमतन्द्रित ॥ ४१ ॥
सदस्यानुमते राजा पवित्रकृतलक्षणम् ।
पशुं रक्ताम्बरं कृत्वा यूपे तं समबन्धयत् ॥ ४२ ॥
स बद्धो वाग्भिरग्र्याभिरभितुष्टाव वै सुरौ ।
इन्द्रमिन्द्रानुज चैव यथावन्मुनिपुत्रक ॥ ४३ ॥
तत प्रीत सहस्राक्षो रहस्यस्तुतितोषित ।
दीर्घमायुस्तदा प्रादाच्छुन शेपाय वासव ॥ ४४ ॥
स च राजा नरश्रेष्ठ यज्ञस्य च समाप्तवान् ।
फलं बहुगुणं राम सहस्राक्षप्रसादजम् ॥ ४५ ॥

---

## 4 Rāma schildert der Sita die Beschwerden des Waldlebens (ed Bomb 2, 28, 5, 6–24)

बहुदोषं हि कान्तारं वनमित्यभिधीयते ।
सदा सुख न जानामि दु खमेव सदा वनम् ॥ १ ॥
गिरिनिर्झरसभूता गिरिनिर्दरिवासिनाम् ।
सिंहाना निनदा दु खा श्रोतुं दु खमतो वनम् ॥ २ ॥
क्रीडमानाश्च विस्रब्धा मत्ता शून्ये तथा मृगा ।
दृष्ट्वा समभिवर्तन्ते सीते दु खमतो वनम् ॥ ३ ॥

सग्रहा सरितश्चैव पङ्कवत्यस्तु दुस्तरा ।
मत्तैरपि गजैर्नित्यमतो दुःखतरं वनम् ॥ ४ ॥
लताकण्टकसंकीर्णा कृकवाकूपनादिता ।
निरपाश्च सुदुःखाश्च मार्गा दुःखमतो वनम् ॥ ५ ॥
सुप्यते पर्णशय्यासु स्वयंभग्नासु भूतले ।
रात्रिषु श्रमखिन्नेन तस्माद्दुःखतरं वनम् ॥ ६ ॥
अहोरात्रं च संतोषः कर्तव्यो नियतात्मना ।
फलैर्वृक्षावपतितैः सीते दुःखमतो वनम् ॥ ७ ॥
उपवासश्च कर्तव्यो यथाप्राणेन मैथिलि ।
जटाभारश्च कर्तव्यो वल्कलाम्बरधारणम् ॥ ८ ॥
देवतानां पितॄणां च कर्तव्यं विधिपूर्वकम् ।
प्राप्तानामतिथीनां च नित्यशः प्रतिपूजनम् ॥ ९ ॥
कार्यस्त्रिरभिषेकश्च काले काले च नित्यशः ।
चरतां नियमेनैव तस्माद्दुःखतरं वनम् ॥ १० ॥
उपहारश्च कर्तव्यः कुसुमैः स्वयमाहृतैः ।
आर्षेण विधिना वेद्यां सीते दुःखमतो वनम् ॥ ११ ॥
यथालब्धेन कर्तव्यः संतोषस्तेन मैथिलि ।
यथाहारैर्वनचरैः सीते दुःखमतो वनम् ॥ १२ ॥
अतीव वातस्तिमिरं बुभुक्षा चास्ति नित्यशः ।
भयानि च महान्त्यत्र अतो दुःखतरं वनम् ॥ १३ ॥
सरीसृपाश्च बहवो बहुरूपाश्च भामिनि ।
चरन्ति पथि ते दर्पात्ततो दुःखतरं वनम् ॥ १४ ॥
नदीनिलयनाः सर्पा नदीकुटिलगामिनः ।
तिष्ठन्त्यावृत्य पन्थानमतो दुःखतरं वनम् ॥ १५ ॥
पतंगा वृश्चिकाः कीटा दंशाश्च मशकैः सह ।
बाधन्ते नित्यमबले सर्वं दुःखमतो वनम् ॥ १६ ॥
द्रुमाः कण्टकिनश्चैव कुशाः काशाश्च भामिनि ।
वने व्याकुलशाखाग्रास्तेन दुःखतरं वनम् ॥ १७ ॥
कायक्लेशाश्च बहवो भयानि विविधानि च ।
अरण्यवासे वसतो दुःखमेव सदा वनम् ॥ १८ ॥
क्रोधलोभौ विमोक्तव्यौ कर्तव्या तपसे मतिः ।
न भेतव्यं च भेतव्ये दुःखं नित्यमतो वनम् ॥ १९ ॥

---

### 5 Daśaratha erzählt seiner Gattin Kausalyā, wie er einen Eremitenknaben getötet hat (ed Bomb 2, 63, 14–53)

देव्यनूढा त्वमभवो युवराजो भवाम्यहम् ।
ततः प्रावृडनुप्राप्ता मम कामविवर्धिनी ॥ १ ॥
अपास्य हि रसान्भौमांस्तप्त्वा च जगदंशुभिः ।
परेताचरितां भीमां रविराचरते दिशम् ॥ २ ॥
उष्णमन्तर्दधे सद्यः स्निग्धा ददृशिरे घनाः ।
ततो जहृषिरे सर्वे भेकसारङ्गबर्हिणः ॥ ३ ॥
क्लिन्नपक्षोत्तराः स्नाताः कृच्छ्रादिव पतत्रिणः ।
वृष्टिवातावधूताग्रान्पादपानभिपेदिरे ॥ ४ ॥
पतितेनाम्भसा छन्नः पतमानेन चासकृत् ।
आबभौ मत्तसारङ्गस्तोयराशिरिवाचलः ॥ ५ ॥
पाण्डुरारुणवर्णानि स्रोतांसि विमलान्यपि ।
सुस्रुवुर्गिरिधातुभ्यः सभस्मानि भुजंगवत् ॥ ६ ॥
तस्मिन्नतिसुखे काले धनुष्मानिषुमान्रथी ।
व्यायामकृतसंकल्पः सरयूमन्वगां नदीम् ॥ ७ ॥
निपाने महिषं रात्रौ गजं वाभ्यागतं मृगम् ।
अन्यद्वा श्वापदं किंचिज्जिघांसुरजितेन्द्रियः ॥ ८ ॥
अथान्धकारे त्वश्रौषं जले कुम्भस्य पूर्यतः ।
अचक्षुर्विषये घोषं वारणस्येव नर्दतः ॥ ९ ॥
ततोऽहं शरमुद्धृत्य दीप्तमाशीविषोपमम् ।
शब्दं प्रति गजप्रेप्सुरभिलक्ष्यमपातयम् ॥ १० ॥
तस्मिन्निपतिते भूमौ वागभूत्तत्र मानुषी ।
कथमस्मद्विधे शस्त्रं निपतेच्च तपस्विनि ॥ ११ ॥
प्रविविक्तां नदीं रात्रावुदाहारोऽहमागतः ।
इषुणाभिहतः केन कस्य वापकृतं मया ॥ १२ ॥
ऋषेर्हि न्यस्तदण्डस्य वने वन्येन जीवतः ।
कथं नु शस्त्रेण वधो मद्विधस्य विधीयते ॥ १३ ॥
जटाभारधरस्यैव वल्कलाजिनवाससः ।
को वधेन ममार्थी स्यात्किं वास्यापकृतं मया ॥ १४ ॥
एवं निष्फलमारब्धं केवलानर्थसंहितम् ।
न कश्चित्साधु मन्येत यथैव गुरुतल्पगम् ॥ १५ ॥

नेम तथानुशोचामि जीवितक्षयमात्मनः ।
मातरं पितरं चोभावनुशोचामि मद्वधे ॥ १६ ॥
तदेतन्मिथुनं वृद्धं चिरकालभृतं मया ।
मयि पञ्चत्वमापन्ने कां वृत्तिं वर्तयिष्यति ॥ १७ ॥
वृद्धौ च मातापितरावहं चैकेषुणा हतः ।
केन स्म निहताः सर्वे सुबालेनाकृतात्मना ॥ १८ ॥
तां गिरं करुणां श्रुत्वा मम धर्मानुकाङ्क्षिणः ।
कराभ्यां सशरं चापं व्यथितस्यापतद्भुवि ॥ १९ ॥
तं देशमहमागम्य दीनसत्त्वः सुदुर्मनाः ।
अपश्यमिषुणा तीरे सरय्वास्तापसं हतम् ॥ २० ॥
अवकीर्णजटाभारं प्रविद्धकलशोदकम् ।
पांसुशोणितदिग्धाङ्गं शयानं शल्यवेधितम् ॥ २१ ॥
स मामुद्वीक्ष्य नेत्राभ्यां त्रस्तमस्वस्थचेतनम् ।
इत्युवाच वचः क्रूरं दिधक्षन्निव तेजसा ॥ २२ ॥
किं तवापकृतं राजन्वने निवसता मया ।
जिहीर्षुरम्भो गुर्वर्थं यदहं ताडितस्त्वया ॥ २३ ॥
एकेन खलु बाणेन मर्मण्यभिहते मयि ।
द्वावन्धौ निहतौ वृद्धौ माता जनयिता च मे ॥ २४ ॥
तौ नूनं दुर्बलावन्धौ मत्प्रतीक्षौ पिपासितौ ।
चिरमाशां कृतां कष्टां तृष्णां संधारयिष्यतः ॥ २५ ॥
न नूनं तपसो वास्ति फलयोगः श्रुतस्य वा ।
पिता यन्मां न जानीते शयानं पतितं भुवि ॥ २६ ॥
जानन्नपि च किं कुर्यादशक्तश्चापरिक्रमः ।
भिद्यमानमिवाशक्तस्त्रातुमन्यो नगो नगम् ॥ २७ ॥
पितुस्त्वमेव मे गत्वा शीघ्रमाचक्ष्व राघव ।
न त्वामनुदहेत्क्रुद्धो वनमग्निरिवैधितः ॥ २८ ॥
इयमेकपदी राजन्यतो मे पितुराश्रमः ।
तं प्रसादय गत्वा त्वं न त्वा स कुपितः शपेत् ॥ २९ ॥
विशल्यं कुरु मां राजन्मर्म मे निशितः शरः ।
रुणद्धि मृदु सोत्सेधं तीरमम्बुरयो यथा ॥ ३० ॥
सशल्यः क्लिश्यते प्राणैर्विशल्यो विनशिष्यति ।
इति मामविशच्चिन्ता तस्य शल्यापकर्षणे ॥ ३१ ॥

दुःखितस्य च दीनस्य मम शोकातुरस्य च ।
लम्भयामास स चापि विशल्यं मुनिसुतस्तदा ॥ ३२ ॥
ताम्यमानः स मां कृच्छ्रादुवाच परमार्तवत् ।
सीदमानो विवृत्ताङ्गश्चेष्टमानो गतः क्षयम् ॥ ३३ ॥
संस्तभ्य शोकं धैर्येण स्थिरचित्तो भवाधुना ।
ब्रह्महत्याकृतं पापं हृदयादपनीयताम् ॥ ३४ ॥
न द्विजातिरहं राजन्मा भूत्ते मनसो व्यथा ।
शूद्रायामस्मि वैश्येन जातो नरवराधिप ॥ ३५ ॥
इतीव वदतः कृच्छ्राद्बाणाभिहतमर्मणः ।
विघूर्णतो विचेष्टस्य वेपमानस्य भूतले ॥ ३६ ॥
तस्य त्वाताम्यमानस्य तं बाणमहमुद्धरम् ।
स मामुद्वीक्ष्य संत्रस्तो जहौ प्राणांस्तपोधन ॥ ३७ ॥

---

# IX Raghuvamsa

## Raghu's Geschichte von seiner Geburt bis zur Thronbesteigung (3)

अथेप्सितं भर्तुरुपस्थितोदयं सखीजनोद्वीक्षणकौमुदीमुखम् ।
निदानमिक्ष्वाकुकुलस्य संततेः सुदक्षिणा दोहदलक्षणं दधौ ॥ १ ॥
शरीरसादादसमग्रभूषणा मुखेन सालक्ष्यत लोध्रपाण्डुना ।
तनुप्रकाशेन विचेयतारका प्रभातकल्पा शशिनेव शर्वरी ॥ २ ॥
तदाननं सैवितमृत्तिकालवं नृपः समाघ्राय न तृप्तिमाययौ ।
करीव सिक्तं पृषतैः पयोमुचां शुचिव्यपाये वनराजिपल्वलम् ॥ ३ ॥
दिवं मरुत्वानिव भोक्ष्यते महीं दिगन्तविश्रान्तरथो हि मत्सुतः ।
अतोऽभिलाषे प्रथमं तथाविधे मनो बबन्धान्यरसान्विलङ्घ्य सा ॥ ४ ॥
न मे ह्रिया शंसति किंचिदीप्सितं स्पृहावती वस्तुषु केषु मागधी ।
इति स्म पृच्छत्यनुवेलमादृतः प्रियासखीरुत्तरकोसलेश्वरः ॥ ५ ॥
उपेत्य सा दोहददुःखशीलतां यदेव वव्रे तदपश्यदाहृतम् ।
न हीष्टमस्य त्रिदिवेऽपि भूपतेरभूदनासाद्यमधिज्यधन्वनः ॥ ६ ॥
क्रमेण निस्तीर्य च दोहदव्यथां प्रचीयमानावयवा रराज सा ।
पुराणपत्रापगमादनन्तरं लतेव संनद्धमनोज्ञपल्लवा ॥ ७ ॥

दिनेषु गच्छत्सु नितान्तपीवरं तदीयमानीलमुखं स्तनद्वयम् ।
तिरश्चकार भ्रमराभिलीनयोः सुजातयोः पङ्कजकोशयोः श्रियम् ॥ ८ ॥
निधानगर्भामिव सागराम्बरां शमीमिवाभ्यन्तरलीनपावकाम् ।
नदीमिवान्तःसलिलां सरस्वतीं नृपः ससत्त्वां महिषीममन्यत ॥ ९ ॥
प्रियानुरागस्य मनःसमुन्नतेर्भुजार्जितानां च दिगन्तसंपदाम् ।
यथाक्रमं पुंसवनादिकाः क्रिया श्रुतेश्च धीरः सदृशीर्व्यधत्त सः ॥ १० ॥
सुरेन्द्रमात्राश्रितगर्भगौरवात्प्रयत्नमुक्तासनया गृहागतः ।
तयोपचाराञ्जलिखिन्नहस्तया ननन्द पारिप्लवनेत्रया नृपः ॥ ११ ॥
कुमारभृत्याकुशलैरधिष्ठिते भिषग्भिराप्तैरथ गर्भवेश्मनि ।
पतिः प्रतीतः प्रसवोन्मुखीं प्रियां ददर्श काले दिवमभ्रितामिव ॥ १२ ॥
ग्रहैस्ततः पञ्चभिरुच्चसंश्रयैरसूर्यगैः सूचितभाग्यसंपदम् ।
असूत पुत्रं समये शचीसमा त्रिसाधना शक्तिरिवार्थमक्षयम् ॥ १३ ॥
दिशः प्रसेदुर्मरुतो ववुः सुखाः प्रदक्षिणार्चिर्हविरग्निराददे ।
बभूव सर्वं शुभशंसि तत्क्षणं भवो हि लोकाभ्युदयाय तादृशाम् ॥ १४ ॥
अरिष्टशय्यां परितो विसारिणा सुजन्मनस्तस्य निजेन तेजसा ।
निशीथदीपाः सहसा हतत्विषो बभूवुरालेख्यसमर्पिता इव ॥ १५ ॥
जनाय शुद्धान्तचराय शंसते कुमारजन्मामृतसंमिताक्षरम् ।
अदेयमासीत्त्रयमेव भूपतेः शशिप्रभं छत्रमुभे च चामरे ॥ १६ ॥
निवातपद्मस्तिमितेन चक्षुषा नृपस्य कान्तं पिबतः सुताननम् ।
महोदधेः पूर इवेन्दुदर्शनाद्गुरुः प्रहर्षः प्रबभूव नात्मनि ॥ १७ ॥
स जातकर्मण्यखिले तपस्विना तपोवनादेत्य पुरोधसा कृते ।
दिलीपसूनुर्मणिराकरोद्भवः प्रयुक्तसंस्कार इवाधिकं बभौ ॥ १८ ॥
सुखश्रवा मङ्गलतूर्यनिस्वनाः प्रमोदनृत्यैः सह वारयोषिताम् ।
न केवलं सद्मनि मागधीपतेः पथि व्यजृम्भन्त दिवौकसामपि ॥ १९ ॥
न संयतस्तस्य बभूव रक्षितुर्विसर्जयेद्यं सुतजन्महर्षितः ।
ऋणाभिधानात्स्वयमेव केवलं तदा पितॄणां मुमुचे स बन्धनात् ॥ २० ॥
श्रुतस्य यायादयमन्तमर्भकस्तथा परेषां युधि चेति पार्थिवः ।
अवेक्ष्य धातोर्गमनार्थमर्थविच्चकार नाम्ना रघुमात्मसंभवम् ॥ २१ ॥
पितुः प्रयत्नात्स समग्रसंपदः शुभैः शरीरावयवैर्दिने दिने ।
पुपोष वृद्धिं हरिदश्वदीधितेरनुप्रवेशादिव बालचन्द्रमाः ॥ २२ ॥
उमावृषाङ्कौ शरजन्मना यथा यथा जयन्तेन शचीपुरंदरौ ।
तथा नृपः सा च सुतेन मागधी ननन्दतुस्तत्सदृशेन तत्समौ ॥ २३ ॥

रथाङ्गनाम्नोरिव भाववन्धनं बभूव यत्प्रेम परस्पराश्रयम् ।
विभक्तमप्येकसुतेन तत्तयो परस्परस्योपरि पर्यचीयत ॥ २४ ॥
उवाच धात्र्या प्रथमोदितं वचो ययौ तदीयामवलम्ब्य चाङ्गुलिम् ।
अभूच नम्र प्रणिपातशिक्षया पितुर्मुदं तेन ततान सो ऽर्भक ॥ २५ ॥
तमङ्कमारोप्य शरीरयोगजै सुखैर्निषिञ्चन्तमिवामृतं त्वचि ।
उपान्तसंमीलितलोचनो नृपश्चिरात्सुतस्पर्शरसज्ञतां ययौ ॥ २६ ॥
अमंस्त चानेन परार्ध्यजन्मना स्थितेरभेत्ता स्थितिमन्तमन्वयम् ।
स्वमूर्तिभेदेन गुणाग्र्यवर्तिना पति प्रजानामिव सर्गमात्मन ॥ २७ ॥
स वृत्तचौलश्चलकाकपक्षकैरमात्यपुत्रै सवयोभिरन्वित ।
लिपेर्यथावद्ग्रहणेन वाङ्मयं नदीमुखेनेव समुद्रमाविशत् ॥ २८ ॥
अथोपनीतं विधिवद्विपश्चितो विनिन्युरेनं गुरवो गुरुप्रियम् ।
अवन्ध्ययत्नाश्च बभूवुरर्भके क्रिया हि वस्तूपहिता प्रसीदति ॥ २९ ॥
धिय समग्रै स गुणैरुदारधी क्रमाच्चतस्रश्चतुरर्णवोपमा ।
ततार विद्या पवनातिपातिभिर्दिशो हरिद्भिर्हरितामिवेश्वर ॥ ३० ॥
त्वचं स मेध्यां परिधाय रौरवीमशिक्षतास्त्रं पितुरेव मन्त्रवत् ।
न केवलं तद्गुरुरेकपार्थिव क्षितावभूदेकधनुर्धरो ऽपि स ॥ ३१ ॥
महोक्षतां वत्सतर स्पृशन्निव द्विपेन्द्रभावं कलभ श्रयन्निव ।
रघु क्रमाद्यौवनभिन्नशैशव पुपोष गाम्भीर्यमनोहरं वपु ॥ ३२ ॥
अथास्य गोदानविधेरनन्तरं विवाहदीक्षां निरवर्तयद्गुरु ।
नरेन्द्रकन्यास्तमवाप्य सत्पतिं तमोनुदं दक्षसुता इवाबभु ॥ ३३ ॥
युवा युगव्यायतबाहुरंसल कपाटवक्षा परिणद्धकंधर ।
वपुप्रकर्षादजयद्गुरुं रघुस्तथापि नीचैर्विनयाददृश्यत ॥ ३४ ॥
तत प्रजानां चिरमात्मना धृतां नितान्तगुर्वीं लघयिष्यता धुरम् ।
निसर्गसंस्कारविनीत इत्यसौ नृपेण चक्रे युवराजशब्दभाक् ॥ ३५ ॥
नरेन्द्रमूलायतनादनन्तरं तदास्पदं श्रीर्युवराजसंज्ञितम् ।
अगच्छदंशेन गुणाभिलाषिणी नवावतारं कमलादिवोत्पलम् ॥ ३६ ॥
विभावसु सारथिनेव वायुना घनव्यपायेन गभस्तिमानिव ।
बभूव तेनातितरां सुदु सह कटप्रभेदेन करीव पार्थिव ॥ ३७ ॥
नियुज्य तं होमतुरंगरक्षणे धनुर्धरं राजसुतैरनुद्रुतम् ।
अपूर्णमेकेन शतक्रतूपम शतं क्रतूनामपविघ्नमाप स ॥ ३८ ॥
तत परं तेन मखाय यज्वना तुरंगमुत्सृष्टमनर्गलं पुन ।
धनुर्भृतामग्रत एव रक्षिणां जहार शक्र किल गूढविग्रह ॥ ३९ ॥

विषादलुप्तप्रतिपत्ति विस्मितं कुमारसैन्यं सपदि स्थितं च तत् ।
वसिष्ठधेनुश्च यदृच्छयागता श्रुतप्रभावा ददृशे ऽथ नन्दिनी ॥ ४० ॥
तदङ्गनिस्यन्दजलेन लोचने प्रमृज्य पुण्येन पुरस्कृतः सताम् ।
अतीन्द्रियेष्वप्युपपन्नदर्शनो बभूव भावेषु दिलीपनन्दनः ॥ ४१ ॥
स पूर्वतः पर्वतपक्षशातिनं ददर्श देवं नरदेवसंभवः ।
पुनः पुनः सूतनिषिद्धचापलं हरन्तमश्वं रथरश्मिसंयतम् ॥ ४२ ॥
शतैस्तमक्ष्णामनिमेषवृत्तिभिर्हरिं विदित्वा हरिभिश्च वाजिभिः ।
अवोचदेनं गगनस्पृशा रघुः स्वरेण धीरेण निवर्तयन्निव ॥ ४३ ॥
मखांशभाजां प्रथमो मनीषिभिस्त्वमेव देवेश यतो निगद्यसे ।
अजस्रदीक्षाप्रयतस्य मद्गुरोः क्रियाविघाताय कथं प्रवर्तसे ॥ ४४ ॥
त्रिलोकनाथेन सता मखद्विषस्त्वया नियम्या ननु दिव्यचक्षुषा ।
स चेत्स्वयं कर्मसु धर्मचारिणां त्वमन्तरायो भवसि च्युतो विधिः ॥ ४५ ॥
तदङ्गमग्र्यं मघवन्महाक्रतोरमुं तुरंगं प्रतिमोक्तुमर्हसि ।
पथः श्रुतेर्दर्शयितार ईश्वरा मलीमसामाददते न पद्धतिम् ॥ ४६ ॥
इति प्रगल्भं रघुणा समीरितं वचो निशम्याधिपतिर्दिवौकसाम् ।
निवर्तयामास रथं सविस्मयः प्रचक्रमे च प्रतिवक्तुमुत्तरम् ॥ ४७ ॥
यदात्थ राजन्यकुमार तत्तथा यशस्तु रक्ष्यं परतो यशोधनैः ।
जगत्प्रकाशं तदशेषमिज्यया भवद्गुरुर्लङ्घयितुं ममोद्यतः ॥ ४८ ॥
हरिर्यथैकः पुरुषोत्तमः स्मृतो महेश्वरस्त्र्यम्बक एव नापरः ।
तथा विदुर्मां मुनयः शतक्रतुं द्वितीयगामी नहि शब्द एष नः ॥ ४९ ॥
अतो ऽयमश्वः कपिलानुकारिणा पितुस्त्वदीयस्य मयापहारितः ।
अलं प्रयत्नेन तवात्र मा निधाः पदं पदव्यां सगरस्य संततेः ॥ ५० ॥
ततः प्रहस्यापभयः पुरंदरं पुनर्बभाषे तुरगस्य रक्षिता ।
गृहाण शस्त्रं यदि सर्ग एष ते न खल्वनिर्जित्य रघुं कृती भवान् ॥ ५१ ॥
स एवमुक्त्वा मघवन्तमुन्मुखः करिष्यमाणः सशरं शरासनम् ।
अतिष्ठदालीढविशेषशोभिना वपुःप्रकर्षेण विडम्बितेश्वरः ॥ ५२ ॥
रघोरवष्टम्भमयेन पत्त्रिणा हृदि क्षतो गोत्रभिदप्यमर्षणः ।
नवाम्बुदानीकमुहूर्तलाञ्छने धनुष्यमोघं समधत्त सायकम् ॥ ५३ ॥
दिलीपसूनोः स बृहद्भुजान्तरं प्रविश्य भीमासुरशोणितोचितः ।
पपावनास्वादितपूर्वमाशुगः कुतूहलेनेव मनुष्यशोणितम् ॥ ५४ ॥
हरेः कुमारो ऽपि कुमारविक्रमः सुरद्विपास्फालनकर्कशाङ्गुलौ ।
भुजे शचीपत्त्रविशेषकाङ्किते स्वनामचिह्नं निचखान सायकम् ॥ ५५ ॥

जहार चान्येन मयूरपत्रिणा शरेण शक्रस्य महाशनिध्वजम् ।
चुकोप तस्मै स भृशं सुरश्रियः प्रसह्य केशव्यपरोपणादिव ॥ ५६ ॥
तयोरुपान्तस्थितसिद्धसैनिकं गरुत्मदाशीविषभीमदर्शनैः ।
बभूव युद्धं तुमुलं जयैषिणोरधोमुखैरूर्ध्वमुखैश्च पत्रिभिः ॥ ५७ ॥
अतिप्रबन्धप्रहितास्त्रवृष्टिभिस्तमाश्रयं दुष्प्रसहस्य तेजसः ।
शशाक निर्वापयितुं न वासवः स्वतश्च्युतं वह्निमिवाद्भिरम्बुदः ॥ ५८ ॥
ततः प्रकोष्ठे हरिचन्दनाङ्किते प्रमथ्यमानार्णवधीरनादिनीम् ।
रघुः शशाङ्कार्धमुखेन पत्रिणा शरासनज्यामलुनाद्बिडौजसः ॥ ५९ ॥
स चापमुत्सृज्य विवृद्धमत्सरः प्रणाशनाय प्रबलस्य विद्विषः ।
महीध्रपक्षव्यपरोपणोचितं स्फुरत्प्रभामण्डलमस्त्रमाददे ॥ ६० ॥
रघुर्भृशं वक्षसि तेन ताडितः पपात भूमौ सह सैनिकाश्रुभिः ।
निमेषमात्रादवधूय तद्व्यथां सहोत्थितः सैनिकहर्षनिस्वनैः ॥ ६१ ॥
तथापि शस्त्रव्यवहारनिष्ठुरे विपक्षभावे चिरमस्य तस्थुषः ।
तुतोष वीर्यातिशयेन वृत्रहा पदं हि सर्वत्र गुणैर्निधीयते ॥ ६२ ॥
असङ्गमद्रिष्वपि सारवत्तया न मे त्वदन्येन विसोढमायुधम् ।
अवेहि मां प्रीतमृते तुरंगमाद्वरं वृणीष्वेति तमाह वासवः ॥ ६३ ॥
ततो निषङ्गादसमग्रमुद्धृतं सुवर्णपुङ्खद्युतिरञ्जिताङ्गुलिः ।
नरेन्द्रसूनुः प्रतिसंहरन्निषुं प्रियंवदः प्रत्यवदत्सुरेश्वरम् ॥ ६४ ॥
अमोच्यमश्वं यदि मन्यसे प्रभो ततः समाप्ते विधिनैव कर्मणि ।
अजस्रदीक्षाप्रयतः स मे गुरुः क्रतोरशेषेण फलेन युज्यताम् ॥ ६५ ॥
यथा च वृत्तान्तमिमं सदोगतस्त्रिलोचनैकांशतया दुरासदः ।
तवैव संदेशहराद्विशां पतिः शृणोति देवेश तथा विधीयताम् ॥ ६६ ॥
तथेति कामं प्रतिशुश्रुवान्रघोर्यथागतं मातलिसारथिर्ययौ ।
नृपस्य नातिप्रमनाः सदोगृहं सुदक्षिणासूनुरपि न्यवर्तत ॥ ६७ ॥
तमभ्यनन्दत्प्रथमं प्रबोधितः प्रजेश्वरः शासनहारिणा हरेः ।
परामृशन्हर्षजडेन पाणिना तदीयमङ्गं कुलिशव्रणाङ्कितम् ॥ ६८ ॥
इति क्षितीशो नवतिं नवाधिकां महाक्रतूनां महनीयशासनः ।
समारुरुक्षुर्दिवमायुषः क्षये ततान सोपानपरंपरामिव ॥ ६९ ॥

अथ स विषयव्यावृत्तात्मा यथाविधि सूनवे
नृपतिककुदं दत्त्वा यूने सितातपवारणम् ।
मुनिवनतरुच्छायां देव्या तया सह शिश्रिये
गलितवयसामिक्ष्वाकूणामिदं हि कुलव्रतम् ॥ ७० ॥

# X. Viṣṇupurāṇa.

## 1. Die Sage von der Saṃjñā und der Chāyā (3, 2, 2–12).

पराशर उवाच ।

सूर्यस्य पत्नी संज्ञाभूत्सुता या विश्वकर्मणः ।
मनुर्यमो यमी चैव तदपत्यानि वै मुने ॥ १ ॥
असहन्ती तु सा भर्तुस्तेजश्छायां युयोज वै ।
भर्तुः शुश्रूषणे ऽरण्यं स्वयं च तपसे ययौ ॥ २ ॥
संज्ञेयमित्यथार्कश्च छायायामात्मजत्रयम् ।
शनैश्चरं मनुं चान्यं तपतीं चाप्यजीजनत् ॥ ३ ॥
छायासंज्ञा ददौ शापं यमाय कुपिता यदा ।
तदान्येयमसौ बुद्धिरित्यासीद्यमसूर्ययोः ॥ ४ ॥
ततो विवस्वानाख्याते तयैवारण्यसंस्थिताम् ।
समाधिदृष्ट्या ददृशे तामश्वां तपसि स्थिताम् ॥ ५ ॥
वाजिरूपधरः सो ऽपि तस्यां देवावथाश्विनौ ।
जनयामास रेवन्तं रेतसो ऽन्ते च भास्करः ॥ ६ ॥
आनिन्ये च पुनः संज्ञां स्वस्थानं भगवान्रविः ।
तेजसः शमनं चास्य विश्वकर्मा चकार सः ॥ ७ ॥
भ्रमिमारोप्य सूर्यं तु तस्य तेजोनिशातनम् ।
कृतवानष्टमं भागं न व्यशातयताव्ययम् ॥ ८ ॥
यत्सूर्याद्वैष्णवं तेजः शातितं विश्वकर्मणा ।
जाज्वल्यमानमपतत्तद्भूमौ मुनिसत्तम ॥ ९ ॥
त्वष्टैव तेजसा तेन विष्णोश्चक्रमकल्पयत् ।
त्रिशूलं चैव रुद्रस्य शिबिकां धनदस्य च ॥ १० ॥
शक्तिं गुहस्य देवानामन्येषां च यदायुधम् ।
तत्सर्वं तेजसा तेन विश्वकर्मा व्यवर्तयत् ॥ ११ ॥

---

## 2. Die Sage von Yājñavalkya und dem ihm mitgeteilten Veda (3, 5, 1–29).

पराशर उवाच ।

यजुर्वेदतरोः शाखाः सप्तविंशन्महामते ।
वैशम्पायननामासौ व्यासशिष्यश्चकार वै ॥ १ ॥

शिष्येभ्यः प्रददौ ताश्च जगृहुस्ते ऽप्यनुक्रमात् ।
याज्ञवल्क्यस्तु तस्याभूद्ब्रह्मरातसुतो द्विज ॥ २ ॥
शिष्यः परमधर्मज्ञो गुरुवृत्तिपरः सदा ।
ऋषिर्यो ऽद्य महामेरौ समाजे नागमिष्यति ॥ ३ ॥
तस्य वै सप्तरात्रे तु ब्रह्महत्या भविष्यति ।
पूर्वमेवं मुनिगणैः समयो ऽभूत्कृतो द्विज ॥ ४ ॥
वैशंपायन एकस्तु तं व्यतिक्रान्तवांस्तदा ।
स्वस्रीयं बालकं सो ऽथ पदा स्पृष्टमघातयत् ॥ ५ ॥
शिष्यानाह च भोः शिष्या ब्रह्महत्यापहं व्रतम् ।
चरध्वं मत्कृते सर्वे न विचार्यमिदं तथा ॥ ६ ॥
अथाह याज्ञवल्क्यस्तं किमेभिर्भगवन्द्विजैः ।
क्लेशितैरल्पतेजोभिश्चरिष्ये ऽहमिदं व्रतम् ॥ ७ ॥
ततः क्रुद्धो गुरुः प्राह याज्ञवल्क्यं महामतिः ।
मुच्यतां यत्त्वयाधीतं मत्तो विप्रावमन्यक ॥ ८ ॥
निस्तेजसो वदस्येतान्यस्त्वं ब्राह्मणपुंगवान् ।
तेन शिष्येण नार्थो ऽस्ति ममाज्ञाभङ्गकारिणा ॥ ९ ॥
याज्ञवल्क्यस्ततः प्राह भक्त्यैतत्ते मयोदितम् ।
ममाप्यलं त्वयाधीतं यन्मया तदिदं द्विज ॥ १० ॥
इत्युक्त्वा रुधिराक्तानि सरूपाणि यजूंषि सः ।
छर्दयित्वा ददौ तस्मै ययौ च स्वेच्छया मुनिः ॥ ११ ॥
यजूंष्यथ विसृष्टानि याज्ञवल्क्येन वै द्विज ।
जगृहुस्तित्तिरा भूत्वा तैत्तिरीयास्तु ते ततः ॥ १२ ॥
ब्रह्महत्याव्रतं चीर्णं गुरुणा चोदितैस्तु यैः ।
चरकाध्वर्यवस्ते तु चरणान्मुनिसत्तम ॥ १३ ॥
याज्ञवल्क्यो ऽपि मैत्रेय प्राणायामपरायणः ।
तुष्टाव प्रयतः सूर्यं यजूंष्यभिलषंस्ततः ॥ १४ ॥

याज्ञवल्क्य उवाच ।

नमः सवित्रे द्वाराय मुक्तेरमिततेजसे ।
ऋग्यजुःसामभूताय त्रयीधामवते नमः ॥ १५ ॥
नमो ऽग्नीषोमभूताय जगतः कारणात्मने ।
भास्कराय परं तेजः सौषुम्णमुरु बिभ्रते ॥ १६ ॥
कलाकाष्ठानिमेषादिकालज्ञानात्मने नमः ।
ध्येयाय विष्णुरूपाय परमाक्षररूपिणे ॥ १७ ॥

बिभर्ति यः सुरगणानाप्यायेन्दुं स्वरश्मिभिः ।
सुधामृतेन च पितॄंस्तस्मै तृप्त्यात्मने नमः ॥ १८ ॥
हिमाम्बुघर्मवृष्टीनां कर्ता हर्ता च यः प्रभुः ।
तस्मै त्रिकालरूपाय नमः सूर्याय वेधसे ॥ १९ ॥
यो हन्ति तिमिरास्येको जगतो ऽस्य जगत्पतिः ।
सत्त्वधामधरो देवो नमस्तस्मै विवस्वते ॥ २० ॥
सत्कर्मयोग्यो न जनो नैवापः शौचकारणम् ।
यस्मिन्ननुदिते तस्मै नमो देवाय भास्वते ॥ २१ ॥
स्पृष्टो यदंशुभिर्लोकः क्रियायोग्यो ऽभिजायते ।
पवित्रताकारणाय तस्मै शुद्धात्मने नमः ॥ २२ ॥
नमः सवित्रे सूर्याय भास्कराय विवस्वते ।
आदित्यायादिभूताय देवादीनां नमो नमः ॥ २३ ॥
हिरण्मये रथे यस्य केतवो ऽमृतवाजिनः ।
वहन्ति भुवनालोकि चक्षुषस्तं नमाम्यहम् ॥ २४ ॥

पराशर उवाच ।

इत्येवमादिभिस्तेन स्तूयमानः स्तवै रविः ।
वाजिरूपधरः प्राह व्रियतामिति वाञ्छितम् ॥ २५ ॥
याज्ञवल्क्यस्तदा प्राह प्रणिपत्य दिवाकरम् ।
यजूंषि तानि मे देहि यानि सन्ति न मे गुरौ ॥ २६ ॥
एवमुक्तो ददौ तस्मै यजूंषि भगवान्रविः ।
अयातयामसंज्ञानि यानि वेत्ति न तद्गुरुः ॥ २७ ॥
यजूंषि यैरधीतानि तानि विप्रैर्द्विजोत्तम ।
वाजिनस्ते समाख्याताः सूर्यो ऽश्वः सो ऽभवद्यतः ॥ २८ ॥
शाखाभेदास्तु तेषां वै दश पञ्च च वाजिनाम् ।
कण्वाद्यास्तु महाभाग याज्ञवल्क्यप्रवर्तिताः ॥ २९ ॥

---

### 3. Die Grenzen von Yama's Macht (3, 7, 1–39).

मैत्रेय उवाच ।

यथावत्कथितं सर्वं यत्पृष्टो ऽसि मया द्विज ।
श्रोतुमिच्छाम्यहं त्वेकं तद्भवान्प्रब्रवीतु मे ॥ १ ॥
सप्त द्वीपानि पातालवीथ्यश्च सुमहामुने ।
सप्त लोका ये ऽन्तरस्था ब्रह्माण्डस्यास्य सर्वतः ॥ २ ॥

शिष्येभ्यः प्रददौ ताश्च जगृहुस्ते ऽप्यनुक्रमात् ।
याज्ञवल्क्यस्तु तस्याभूद्ब्रह्मरातसुतो द्विज ॥ २ ॥
शिष्यः परमधर्मज्ञो गुरुवृत्तिपरः सदा ।
ऋषिर्यो ऽद्य महामेरौ समाजे नागमिष्यति ॥ ३ ॥
तस्य वै सप्तरात्रेण ब्रह्महत्या भविष्यति ।
पूर्वमेवं मुनिगणैः समयो ऽभूत्कृतो द्विज ॥ ४ ॥
वैशंपायन एकस्तु तं व्यतिक्रान्तवांस्तदा ।
स्वस्रीयं बालकं सो ऽथ पदा स्पृष्टमघातयत् ॥ ५ ॥
शिष्यानाह च भोः शिष्या ब्रह्महत्यापहं व्रतम् ।
चरध्वं मत्कृते सर्वे न विचार्यमिदं तथा ॥ ६ ॥
अथाह याज्ञवल्क्यस्तं किमेभिर्भगवन्द्विजैः ।
क्लेशितैरल्पतेजोभिश्चरिष्ये ऽहमिदं व्रतम् ॥ ७ ॥
ततः क्रुद्धो गुरुः प्राह याज्ञवल्क्यं महामतिम् ।
मुच्यतां यत्त्वयाधीतं मत्तो विप्रावमन्यक ॥ ८ ॥
निस्तेजसो वदस्येतान्यस्त्वं ब्राह्मणपुंगवान् ।
तेन शिष्येण नार्थो ऽस्ति ममाज्ञाभङ्गकारिणा ॥ ९ ॥
याज्ञवल्क्यस्ततः प्राह भक्त्यैतत्ते मयोदितम् ।
ममाप्यलं त्वयाधीतं यन्मया तदिदं द्विज ॥ १० ॥
इत्युक्त्वा रुधिराक्तानि सरूपाणि यजूंषि सः ।
छर्दयित्वा ददौ तस्मै ययौ च स्वेच्छया मुनिः ॥ ११ ॥
यजूंष्यथ विसृष्टानि याज्ञवल्क्येन वै द्विज ।
जगृहुस्तित्तिरा भूत्वा तैत्तिरीयास्तु ते ततः ॥ १२ ॥
ब्रह्महत्याव्रतं चीर्णं गुरुणा चोदितैस्तु यैः ।
चरकाध्वर्यवस्ते तु चरणान्मुनिसत्तम ॥ १३ ॥
याज्ञवल्क्यो ऽपि मैत्रेय प्राणायामपरायणः ।
तुष्टाव प्रयतः सूर्यं यजूंष्यभिलषंस्ततः ॥ १४ ॥
याज्ञवल्क्य उवाच ।
नमः सवित्रे द्वाराय विमुक्तेः सिततेजसे ।
ऋग्यजुःसामभूताय त्रयीधामवते नमः ॥ १५ ॥
नमो ऽग्नीषोमभूताय जगतः कारणात्मने ।
भास्कराय परं तेजः सौषुम्णमुरु बिभ्रते ॥ १६ ॥
कलाकाष्ठानिमेषादिकालज्ञानात्मने नमः ।
ध्येयाय विष्णुरूपाय परमाक्षररूपिणे ॥ १७ ॥

बिभर्ति यः सुरगणानाप्याय्येन्दुं स्वरश्मिभिः ।
सुधामृतेन च पितॄंस्तस्मै तृप्त्यात्मने नमः ॥ १८ ॥
हिमाम्बुघर्मवृष्टीनां कर्ता हर्ता च यः प्रभुः ।
तस्मै त्रिकालरूपाय नमः सूर्याय वेधसे ॥ १९ ॥
यो हन्ति तिमिराण्येको जगतो ऽस्य जगत्पतिः ।
सत्त्वधामधरो देवो नमस्तस्मै विवस्वते ॥ २० ॥
सत्कर्मयोग्यो न जनो नैवापः शौचकारणम् ।
यस्मिन्ननुदिते तस्मै नमो देवाय भास्वते ॥ २१ ॥
स्पृष्टो यदंशुभिर्लोकः क्रियायोग्यो ऽभिजायते ।
पवित्रताकारणाय तस्मै शुद्धात्मने नमः ॥ २२ ॥
नमः सवित्रे सूर्याय भास्कराय विवस्वते ।
आदित्यायादिभूताय देवादीनां नमो नमः ॥ २३ ॥
हिरण्मये रथे यस्य केतवो ऽमृतधायिनः ।
वहन्ति भुवनालोकि चक्षुषस्तं नमाम्यहम् ॥ २४ ॥
पराशर उवाच ।
इत्येवमादिभिस्तेन स्तूयमानः स्तवै रविः ।
वाजिरूपधरः प्राह व्रियतामिति वाञ्छितम् ॥ २५ ॥
याज्ञवल्क्यस्तदा प्राह प्रणिपत्य दिवाकरम् ।
यजूंषि तानि मे देहि यानि सन्ति न मे गुरौ ॥ २६ ॥
एवमुक्तो ददौ तस्मै यजूंषि भगवान्रविः ।
अयातयामसंज्ञानि यानि वेत्ति न तद्गुरुः ॥ २७ ॥
यजूंषि यैरधीतानि तानि विप्रैर्द्विजोत्तम ।
वाजिनस्ते समाख्याताः सूर्यो ऽश्वः सो ऽभवद्यतः ॥ २८ ॥
शाखाभेदास्तु तेषां वै दश पञ्च च वाजिनाम् ।
काण्वाद्यास्तु महाभाग याज्ञवल्क्यप्रवर्तिताः ॥ २९ ॥

---

## 3. Die Grenzen von Yama's Macht (3, 7, 1–39).

मैत्रेय उवाच ।
यथावत्कथितं सर्वं यत्पृष्टो ऽसि मया द्विज ।
श्रोतुमिच्छाम्यहं त्वेकं तद्भवान्प्रब्रवीतु मे ॥ १ ॥
सप्त द्वीपानि पातालवीथ्यश्च सुमहामुने ।
सप्त लोका ये ऽन्तरस्था ब्रह्माण्डस्यास्य सर्वतः ॥ २ ॥

स्थूलै सूक्ष्मैस्तथा स्थूलसूक्ष्मै सूक्ष्मतरैस्तथा ।
स्थूलास्थूलतरैश्चैतत्सर्वं प्राणिभिरावृतम् ॥ ३ ॥
अङ्गुलस्याष्टभागो ऽपि न सो ऽस्ति मुनिसत्तम ।
न सन्ति प्राणिनो यत्र कर्मबन्धनिबन्धना ॥ ४ ॥
सर्वे चैते वशं यान्ति यमस्य भगवन्किल ।
आयुषो ऽन्तेन ते यान्ति यातनास्तत्प्रचोदिता ॥ ५ ॥
यातनाभ्य परिभ्रष्टा देवाद्यास्वथ योनिषु ।
जन्तव परिवर्तन्ते शास्त्राणामेष निर्णय ॥ ६ ॥
सो ऽहमिच्छामि तच्छ्रोतुं यमस्य वशवर्तिन ।
न भवन्ति नरा येन तत्कर्म कथयामलम् ॥ ७ ॥

पराशर उवाच ।

अयमेव मुने प्रश्नो नकुलेन महात्मना ।
पृष्ट पितामह प्राह भीष्मो यत्तच्छृणुष्व मे ॥ ८ ॥

भीष्म उवाच ।

पुरा ममागतो वत्स सखा कालिङ्गको द्विज ।
स मामुवाच पृष्टो वै मया जातिस्मरो मुनि ॥ ९ ॥
तेनाख्यातमिदं चेदमित्थं चैतद्भविष्यति ।
तथा च तदभूद्वत्स यथोक्तं तेन धीमता ॥ १० ॥
स पृष्टश्च मया भूय श्रद्दधानवता द्विज ।
यद्यदाह न तद्दृष्टमन्यथा हि मया क्वचित् ॥ ११ ॥
एकदा तु मया पृष्ट यदेतद्भवतोदितम् ।
प्राह कालिङ्गको विप्र स्मृत्वा तस्य मुनेर्वच ॥ १२ ॥
जातिस्मरेण कथितो रहस्य परमो मम ।
यमकिंकरयोर्यो ऽभूत्संवादस्तं ब्रवीमि ते ॥ १३ ॥

कालिङ्ग उवाच ।

स्वपुरुषमभिवीक्ष्य पाशहस्त वदति यम किल तस्य कर्णमूले ।
परिहर मधुसूदनप्रपन्नान्प्रभुरहमस्मि नृणां न वैष्णवानाम् ॥ १४ ॥
अहममरवरार्चितेन धात्रा यम इति लोकहिताहिते नियुक्त ।
हरिगुरुवशगो ऽस्मि न स्वतन्त्र प्रभवति संयमने ममापि विष्णु ॥ १५ ॥
कटकमुकुटकर्णिकादिभेदै कनकमभेदमपीष्यते यथैकम् ।
सुरपशुमनुजादिकल्पनाभिर्हरिरखिलाभिरुदीर्यते तथैक ॥ १६ ॥
क्षितिजलपरमाणवो ऽनिलान्ते पुनरपि यान्ति यथैकतां धरित्र्या ।
सुरपशुमनुजादयस्तथान्ते गुणकलुषेण सनातनेन तेन ॥ १७ ॥

हरिममरगणार्चिताङ्घ्रिपद्मं प्रणमति यः परमार्थतो हि मर्त्यः ।
तमथ गतसमस्तपापबन्धं व्रज परिहृत्य यथाग्निमाज्यसिक्तम् ॥ १८ ॥
इति यमवचनं निशम्य पाशी यमपुरुषस्तमुवाच धर्मराजम् ।
कथय मम विभोः समस्तधातुर्भवति हरेः खलु यादृशो ऽस्य भक्तः ॥ १९ ॥
यम उवाच ।
न चलति निजवर्णधर्मतो यः सममतिरात्मसुहृद्विपक्षपक्षे ।
न हरति न च हन्ति किं चिदुच्चैः सितमनसं तमवेहि विष्णुभक्तम् ॥ २०
कलिकलुषमलेन यस्य नात्मा विमलमतेर्मलिनीकृतो ऽस्तमोहे ।
मनसि कृतजनार्दनं मनुष्यं सततमवेहि हरेरतीव भक्तम् ॥ २१ ॥
कनकमपि रहस्यवेक्ष्य बुद्ध्या तृणमिव यः समवैति वै परस्वम् ।
भवति च भगवत्यनन्यचेताः पुरुषवरं तमवेहि विष्णुभक्तम् ॥ २२ ॥
स्फटिकगिरिशिलामलः क्व विष्णुर्मनसि नृणां क्व च मत्सरादिदोषः ।
नहि तुहिनमयूखरश्मिपुञ्जे भवति हुताशनदीप्तिजः प्रतापः ॥ २३ ॥
विमलमतिविमत्सरः प्रशान्तः शुचिचरितो ऽखिलसत्त्वमित्रभूतः ।
प्रियहितवचनो ऽस्तमानमायो वसति सदा हृदि तस्य वासुदेवः ॥ २४ ॥
वसति हृदि सनातने च तस्मिन्भवति पुमाञ्जगतो ऽस्य सौम्यरूपः ।
क्षितिरसमतिरम्यमात्मनो ऽन्तः कथयति चारुतयैव शालपोतः ॥ २५ ॥
यमनियमविधूतकल्मषाणामनुदिनमच्युतसक्तमानसानाम् ।
अपगतमदमानमत्सराणां व्रज भट दूरतरेण मानवानाम् ॥ २६ ॥
हृदि यदि भगवाननादिरास्ते हरिरसिशङ्खगदाधरो ऽव्ययात्मा ।
तदघमघविघातकर्तृभिन्नं भवति कथं सति चान्धकारमर्के ॥ २७ ॥
हरति परधनं निहन्ति जन्तून्वदति तथानृतनिष्ठुराणि यश्च ।
अशुभजनितदुर्मदस्य पुंसः कलुषमतेर्हृदि तस्य नास्त्यनन्तः ॥ २८ ॥
न सहति परसंपदं विनिन्दां कलुषमतिः कुरुते सतामसाधुः ।
न यजति न ददाति यश्च सन्तं मनसि न तस्य जनार्दनो ऽधमस्य ॥ २९ ॥
परमसुहृदि बान्धवे कलत्रे सुततनयापितृमातृभृत्यवर्गे ।
शठमतिरुपयाति यो ऽर्थतृष्णां तमधमचेष्टमवेहि नास्य भक्तम् ॥ ३० ॥
अशुभमतिरसत्प्रवृत्तिसक्तः सततमनार्यविशालसङ्गमत्तः ।
अनुदिनकृतपापबन्धयत्नः पुरुषपशुर्नहि वासुदेवभक्तः ॥ ३१ ॥
सकलमिदमहं च वासुदेवः परमपुमान्परमेश्वरः स एकः ।
इति मतिरमला भवत्यनन्ते हृदयगते व्रज तान्विहाय दूरात् ॥ ३२ ॥
कमलनयन वासुदेव विष्णो धरणिधराच्युत शङ्खचक्रपाणे ।
भव शरणमितीरयन्ति ये वै त्यज भट दूरतरेण तानपापान् ॥ ३३ ॥

स्थूलैः सूक्ष्मैस्तथा स्थूलसूक्ष्मैः सूक्ष्मतरैस्तथा ।
स्थूलास्थूलतरैश्चैतत्सर्वं प्राणिभिरावृतम् ॥ ३ ॥
अङ्गुलस्याष्टभागो ऽपि न सो ऽस्ति मुनिसत्तम ।
न सन्ति प्राणिनो यत्र कर्मबन्धनिबन्धनाः ॥ ४ ॥
सर्वे चैते वशं यान्ति यमस्य भगवन्किल ।
आयुषो ऽन्तेन ते यान्ति यातनास्तत्प्रचोदिताः ॥ ५ ॥
यातनाभ्यः परिभ्रष्टा देवाद्यास्वथ योनिषु ।
जन्तवः परिवर्तन्ते शास्त्राणामेष निर्णयः ॥ ६ ॥
सो ऽहमिच्छामि तच्छ्रोतुं यमस्य वशवर्तिनः ।
न भवन्ति नरा येन तत्कर्म कथयामलम् ॥ ७ ॥

पराशर उवाच ।

अयमेव मुने प्रश्नो नकुलेन महात्मना ।
पृष्टः पितामहः प्राह भीष्मो यत्तच्छृणुष्व मे ॥ ८ ॥

भीष्म उवाच ।

पुरा ममागतो वत्स सखा कालिङ्गको द्विजः ।
स मामुवाच पृष्टो वै मया जातिस्मरो मुनिः ॥ ९ ॥
तेनाख्यातमिदं चेदमित्थं चैतद्भविष्यति ।
तथा च तदभूद्वत्स यथोक्तं तेन धीमता ॥ १० ॥
स पृष्टश्च मया भूयः श्रद्दधानवता द्विजः ।
यद्यदाह न तद्दृष्टमन्यथा हि मया क्वचित् ॥ ११ ॥
एकदा तु मया पृष्टं यदेतद्भवतोदितम् ।
प्राह कालिङ्गको विप्रः स्मृत्वा तस्य मुनेर्वचः ॥ १२ ॥
जातिस्मरेण कथितो रहस्यः परमो मम ।
यमकिंकरयोर्यो ऽभूत्संवादस्तं ब्रवीमि ते ॥ १३ ॥

कालिङ्ग उवाच ।

स्वपुरुषमभिवीक्ष्य पाशहस्तं वदति यमः किल तस्य कर्णमूले ।
परिहर मधुसूदनप्रपन्नान्प्रभुरहमस्मि नृणां न वैष्णवानाम् ॥ १४ ॥
अहममरगणार्चितेन धात्रा यम इति लोकहिताहिते नियुक्तः ।
हरिगुरुवशगो ऽस्मि न स्वतन्त्रः प्रभवति संयमने ममापि विष्णुः ॥ १५ ॥
कटकमुकुटकर्णिकादिभेदैः कनकमभेदमपीष्यते यथैकम् ।
सुरपशुमनुजादिकल्पनाभिर्हरिरखिलाभिरुदीर्यते तथैकः ॥ १६ ॥
क्षितिजलपरमाणवो ऽनिलान्ते पुनरपि यान्ति यथैकतां धरित्र्या ।
सुरपशुमनुजादयस्तथान्ते गुणकलुषेण सनातनेन तेन ॥ १७ ॥

हरिममरगणार्चिताङ्घ्रिपद्मं प्रणमति यः परमार्थतो हि मर्त्यः ।
तमथ गतसमस्तपापबन्धं व्रज परिहृत्य यथाग्निमाज्यसिक्तम् ॥ १८ ॥
इति यमवचनं निशम्य पाशी यमपुरुषस्तमुवाच धर्मराजम् ।
कथय मम विभोः समस्तधातुर्भवति हरेः खलु यादृशो ऽस्य भक्तः ॥ १९ ॥

यम उवाच ।

न चलति निजवर्णधर्मतो यः सममतिरात्मसुहृद्विपक्षपक्षे ।
न हरति न च हन्ति किं चिदुच्चैः सितमनसं तमवेहि विष्णुभक्तम् ॥ २०
कलिकलुषमलेन यस्य नात्मा विमलमतेर्मलिनीकृतो ऽस्तमोहे ।
मनसि कृतजनार्दनं मनुष्यं सततमवेहि हरेरतीव भक्तम् ॥ २१ ॥
कनकमपि रहस्यवेक्ष्य बुद्ध्या तृणमिव यः समवैति वै परस्वम् ।
भवति च भगवत्यनन्यचेताः पुरुषवरं तमवेहि विष्णुभक्तम् ॥ २२ ॥
स्फटिकगिरिशिलामलः क्व विष्णुर्मनसि नृणां क्व च मत्सरादिदोषः ।
नहि तुहिनमयूखरश्मिपुञ्जे भवति हुताशनदीप्तिजः प्रतापः ॥ २३ ॥
विमलमतिविमत्सरः प्रशान्तः शुचिचरितो ऽखिलसत्त्वमित्रभूतः ।
प्रियहितवचनो ऽस्तमानमायो वसति सदा हृदि तस्य वासुदेवः ॥ २४ ॥
वसति हृदि सनातने च तस्मिन्भवति पुमाञ्जगतो ऽस्य सौम्यरूपः ।
क्षितिरसमतिरम्यमात्मनो ऽन्तः कथयति चारुतयैव शालपोतः ॥ २५ ॥
यमनियमविधूतकल्मषाणामनुदिनमच्युतसक्तमानसानाम् ।
अपगतमदमानमत्सराणां व्रज भट दूरतरेण मानवानाम् ॥ २६ ॥
हृदि यदि भगवाननादिरास्ते हरिरसिशङ्खगदाधरो ऽव्ययात्मा ।
तदघमघविघातकर्तृभिन्नं भवति कथं सति चान्धकारमर्के ॥ २७ ॥
हरति परधनं निहन्ति जन्तून्वदति तथानृतनिष्ठुराणि यश्च ।
अशुभजनितदुर्मदस्य पुंसः कलुषमतेर्हृदि तस्य नास्त्यनन्तः ॥ २८ ॥
न सहति परसंपदं विनिन्दां कलुषमतिः कुरुते सतामसाधुः ।
न यजति न ददाति यश्च सन्तं मनसि न तस्य जनार्दनो ऽधमस्य ॥ २९ ॥
परमसुहृदि बान्धवे कलत्रे सुततनयापितृमातृभृत्यवर्गे ।
शठमतिरुपयाति यो ऽर्थतृष्णां तमधमचेष्टमवेहि नास्य भक्तम् ॥ ३० ॥
अशुभमतिरसत्प्रवृत्तिसक्तः सततमनार्यविशीलसङ्गमत्तः ।
अनुदिनकृतपापबन्धयत्नः पुरुषपशुर्नहि वासुदेवभक्तः ॥ ३१ ॥
सकलमिदमहं च वासुदेवः परमपुमान्परमेश्वरः स एकः ।
इति मतिरमला भवत्यनन्ते हृदयगते व्रज तान्विहाय दूरात् ॥ ३२ ॥
कमलनयन वासुदेव विष्णो धरणिधराच्युत शङ्खचक्रपाणे ।
भव शरणमितीरयन्ति ये वै त्यज भट दूरतरेण तानपापान् ॥ ३३ ॥

वसति मनसि यस्य सो ऽव्ययात्मा पुरुषवरस्य न तस्य दृष्टिपाते ।
तव गतिरथ वा ममास्ति चक्रप्रतिहतवीर्यबलस्य सो ऽन्यलोक्यः ॥ ३४ ॥

कालिङ्ग उवाच ।

इति निजभटशासनाय देवो रवितनयः स किलाह धर्मराजः ।
मम कथितमिदं च तेन तुभ्यं कुरुवर सम्यगिदं मयापि चोक्तम् ॥ ३५ ॥

भीष्म उवाच ।

नकुलैतन्ममाख्यातं पूर्वं तेन द्विजन्मना ।
कलिङ्गदेशादभ्येत्य प्रीयता सुमहात्मना ॥ ३६ ॥
मयाप्येतद्यथान्यायं सम्यग्वत्स तवोदितम् ।
यथा विष्णुमृते नान्यत्त्राणं संसारसागरे ॥ ३७ ॥
किंकरा दण्डपाशौ वा न यमो न च यातना ।
समर्थास्तस्य यस्यात्मा केशवालम्बनः सदा ॥ ३८ ॥

पराशर उवाच ।

एतन्मुने तवाख्यातं गीतं वैवस्वतेन यत् ।
त्वत्प्रश्नानुगतं सम्यक्किमन्यच्छ्रोतुमिच्छसि ॥ ३९ ॥

---

## 4 Die Sage von Sagara und seinen Söhnen
(4, 3, 15—4, 17)

त्रिशङ्कोर्हरिश्चन्द्रः । तस्माद्रोहिताश्वः । ततश्च हरितः । हरिताच्चञ्चुः । चञ्चोर्विजयवसुदेवौ । रुरुको विजयात् । रुरुकस्य च वृकः । ततो बाहुर्यो ऽसौ हैहयतालजङ्घादिभिरवजितो ऽन्तर्वत्न्या महिष्या सह वनं प्रविवेश । तस्याश्च सपत्न्या गर्भस्तम्भनाय गरो दत्तः । तेनास्या गर्भः सप्त वर्षाणि जठर एव तस्थौ । स च बाहुर्वृद्धभावादौर्वाश्रमसमीपे ममार । सा तस्य भार्या चितां कृत्वा तमारोप्यानुमरणकृतनिश्चयाभूत् । अथैनामतीतानागतवर्तमानकालवेदी भगवानौर्वः स्वाश्रमान्निर्यायाब्रवीत् । अलमेतेनासद्ग्रहेण । अखिलभूमण्डलपतिरतिवीर्यपराक्रमो ऽनेकयज्ञकृदरातिपक्षक्षयकर्ता तवोदरे चक्रवर्ती तिष्ठति । नैवं नैवं साहसाध्यवसायिनी भव । इत्युक्ते च सा तस्मादनुमरणनिर्बन्धाद्विरराम । तेनैव भगवता स्वाश्रममानीयत । कतिपयदिनान्तरे च सहैव तेन गरेणातितेजस्वी बालको जज्ञे । तस्यौर्वो जातकर्मादिका क्रिया निष्पाद्य सगर इति नाम चकार । कृतोपनयनं चैनमौर्वो वेदाञ्छास्त्राण्यशेषाण्यस्त्रं चाग्नेयं भार्गवाख्यमध्यापयामास । उत्पन्नबुद्धिश्च मातरमपृच्छत् । अम्ब । कथमत्र वयम् । क्व तातः ।

तातो ऽस्माकं क्व । इत्येवमादि पृच्छतस्तन्माता सर्वमबोचत् । ततः पितृराज्यहरणामर्षितो हैहयतालजङ्घादिवधाय प्रतिज्ञामकरोत् । प्रायशश्च हैहयाञ्जघान । शकयवनकाम्बोजपारदपह्लवा हन्यमानास्तत्कुलगुरुं वसिष्ठं शरणं ययुः । अथैतान्वसिष्ठो जीवन्मृतकान्कृत्वा सगरमाह । वत्स वत्स । अलमेभिरतिजीवन्मृतकैरनुसृतैः । एते च मयैव त्वत्प्रतिज्ञापरिपालनाय निजधर्मद्विजसङ्गपरित्यागं कारिताः । स तथेति तद्गुरुवचनमभिनन्द्य तेषां वेषान्यत्वमकारयत् । यवनान्मुण्डितशिरसो ऽर्धमुण्डाञ्छकान्प्रलम्बकेशान्पारदान्पह्लवांश्च श्मश्रुधरान्निःस्वाध्यायवषट्कारानेतानन्यांश्च क्षत्रियांश्चकार । ते च निजधर्मपरित्यागाद्ब्राह्मणैश्च परित्यक्ता म्लेच्छतां ययुः । सगरो ऽपि स्वमधिष्ठानमागम्यास्खलितचक्रः सप्तद्वीपवतीमिमामुर्वीं प्रशशास । काश्यपदुहिता सुमतिर्विदर्भराजतनया च केशिनी द्वे भार्ये सगरस्यास्ताम् । ताभ्यां चापत्यार्थमाराधितः और्वः परमेण समाधिना वरमदात् । एका वंशधरमेकं पुत्रमपरा षष्टिं पुत्रसहस्राणि जनयिष्यतीति । यस्या यदभिमतं तदिच्छया गृह्यताम् । इत्युक्ते केशिनी पुत्रमेकं सुमतिः पुत्रसहस्राणि षष्टिं वव्रे । तथेति चर्षिणाभिहिते ऽल्पैरेवाहोभिरेकमसमञ्जसं नाम वंशधरं पुत्रमसूत केशिनी । विनतातनयायास्तु सुमत्याः षष्टिः पुत्रसहस्राण्यभवन् । तस्मादसमञ्जसो ऽंशुमान्नाम कुमारो जज्ञे । स त्वसमञ्जा बाल्यादेवासद्वृत्तः । पिता चास्याचिन्तयत् । अयमतिबाल्यो बुद्धिमान्भविष्यतीति । अथ तत्रापि वयस्यतीते तच्चरितमेवैनं पिता तत्याज । तान्यपि षष्टिः कुमारसहस्राण्यसमञ्जसचरितमनुचक्रुः । ततश्चासमञ्जसचरितानुकारिभिः सागरैरपध्वस्तयज्ञादिसन्मार्गे जगति देवाः सकलविद्यामयमसंस्पृष्टमशेषदोषैर्भगवतः पुरुषोत्तमस्यांशभूतं कपिलर्षिं प्रणम्य तदर्थमूचुः । भगवन् । एभिः सगरतनयैरसमञ्जसचरितमनुगम्यते । कथमेवमेभिरनुसरद्भिर्जगद्भविष्यति । इत्यार्तजगत्परित्राणाय च भगवतो ऽत्र शरीरग्रहणम् । इत्याकर्ण्य भगवानल्पैरेव दिनैरेते विनङ्क्ष्यन्तीत्युक्तवान् । तत्रान्तरे च सगरो हयमेधमारेभे । तत्र पुत्रैरधिष्ठितमस्याश्वं को ऽप्यपहृत्य भुवो विवरं प्रविवेश । ततश्चाश्वान्वेषणाय तनयान्युयोज । ततस्ते तनयाश्चातिनिर्बन्धेन वसुधातलमेकैको योजनं योजनमवनेश्चखान । पाताले चाश्वं परिभ्रमन्तमवनिपतितनयास्ते ददृशुः । नातिदूरस्थितं च भगवन्तमपघने शरत्काले ऽर्कमिव तेजोभिरनवरतमूर्ध्वमधश्चाशेषा दिशश्चोद्भासयमानं कपिलर्षिमपश्यन् । ततश्चोद्यतायुधा दुरात्मानो ऽयमस्मदपकारी यज्ञविघातकर्ता हयहर्ता हन्यतां हन्यतामित्यधावन् । ततश्च तेनापि भगवता किंचिदीषत्परिवर्तितलोचनेनावलोकिताः स्वशरीरसमुत्थेनाग्निना दह्यमाना विनेशुः । सगरो ऽप्यवगम्याश्वानुसारि तत्पुत्रबलमशेषं परमर्षि-

कपिलतेजसा दग्धमंशुमन्तमसमञ्जसः पुत्रमश्वानयनाय चोदयामास । स तु सगरतनयखातमार्गेण कपिलमुपगम्य भक्तिनम्रस्तथा तथा तुष्टाव यथैनं भगवानाह । गच्छ । एतं पितामहायाश्वं प्रापय वरं वृणीष्व च पुत्र पौत्रश्च ते स्वर्गाद्गङ्गामानयिष्यतीति । अथांशुमानपि ब्रह्मदण्डहतानामस्मत्पितॄणामस्वर्गयोग्यानां स्वर्गप्राप्तिकरं वरमस्माकं भगवान्प्रयच्छत्वित्याह । तं चाह भगवान् । उक्तमेवैतन्मया । पौत्रस्ते त्रिदिवाद्गङ्गां भुवमानयिष्यतीति । तदम्भसा संस्पृष्टेष्वस्थिभस्मस्वेते स्वर्गमारोक्ष्यन्ति । भगवद्विष्णुपादाङ्गुष्ठविनिर्गतजलस्य हि तन्माहात्म्यं यन्न केवलमभिसंधिपूर्वकं स्नानाद्युपभोगेषूपकारकम् अनभिसंहितमप्यपेतप्राणस्यास्थिचर्मस्नायुकेशाद्युत्सृष्टं शरीरजं यत्र पतितं सद्यः शरीरिणं स्वर्गं नयति । इत्युक्तः प्रणम्य च भगवते ऽश्वमादाय पितामहयज्ञमाजगाम । सगरो ऽप्यश्वमादाय तं यज्ञं समापयामास । सागरं चात्मजप्रीत्या पुत्रत्वे कल्पयामास । तस्यांशुमतो दिलीपः पुत्रो ऽभवत् । दिलीपस्यापि भगीरथो यो ऽसौ गङ्गां स्वर्गादिहानीय भागीरथीसंज्ञां चकार ।

---

## 5. Die Sage von Mitrasaha (4, 4, 19 ff)

ऋतुपर्णपुत्रः सर्वकामः । तत्तनयः सुदासः । सुदासात्सौदासो मित्रसहनामा यो ऽसावटव्यां मृगयागतो व्याघ्रद्वयमपश्यत् । ताभ्यां च तद्वनमपमृगं कृतम् । स चैकं तयोर्बाणेन जघान । म्रियमाणश्चासावतिभीषणाकृतिः करालवदनो राक्षसो ऽभवत् । द्वितीयो ऽपि प्रतिक्रियां ते करिष्यामीत्युक्त्वान्तर्धानं जगाम । कालेन गच्छता स सौदासो यज्ञमयजत् । परिनिष्ठितयज्ञे चाचार्ये वसिष्ठे निष्क्रान्ते तद्रक्षो वसिष्ठरूपमास्थाय यज्ञावसाने मम समांसं भोजनं देयं तत्संस्क्रियतां क्षणादिहागमिष्यामीत्युक्त्वा निष्क्रान्तः । भूयश्च सूदवेषं कृत्वा राजाज्ञया मानुषं मांसं संस्कृत्य राज्ञे न्यवेदयत् । असावपि हिरण्यपात्रस्थितं मांसमादाय वसिष्ठागमनप्रतीक्षो ऽभवत् । आगताय च वसिष्ठाय निवेदितवान् । स चाचिन्तयत् । अहो राज्ञो ऽस्य दौःशील्यं येनैतन्मांसमस्माकं प्रयच्छति । किमेतद्द्रव्यजातमिति ध्यानपरो ऽभूत् । अपश्यच्च तन्मानुषं मांसम् । ततश्च क्रोधकलुषीकृतचेता राजानं प्रति शापमुत्ससर्ज । यस्मादभोज्यमस्मद्विधानां तपस्विनामवगच्छन्नपि भवान्मह्यं ददाति तस्मात्तवैवात्र लोलुपा बुद्धिर्भविष्यतीति । अनन्तरं च तेनापि भगवतैवाभिहितो ऽस्मीत्युक्ते किं किं मयैवाभिहितमिति मुनिरपि समाधौ तस्थौ । समाधिविज्ञानावगतार्थश्चास्यानुग्रहं चकार । नात्यन्तिकमेतद्द्वादशाब्दं भवतो भोजनं भविष्यतीति । असावपि तु प्रगृह्योदकाञ्जलिं

ते ऽभाषिषत राजा त्वां दिदृक्षुः क्षणदाचर ।
सो ऽस्नासीद्व्यलिपन्मासमप्सासीद्वारुणीमपात् ॥ ६ ॥
न्यवसिष्ट ततो द्रष्टुं रावणं प्रावृतद्गृहात् ।
राजायान्तं तमद्राक्षीदुदस्थाच्चैषदासनात् ॥ ७ ॥
अतुषत्पीठमासन्नं निरदिक्षच्च काञ्चनम् ।
अस्मेष्ट कुम्भकर्णो ऽल्पमुपाविक्षदथान्तिके ॥ ८ ॥
अवादीन्मां किमित्याह्वो राज्ञा च प्रत्यवादि सः ।
नाज्ञासीस्त्वं सुखी रामो यदकार्षीत्स रक्षसाम् ॥ ९ ॥
उदतारीदुदन्वन्तं पुरं नः परितो ऽरुधत् ।
व्यद्योतिष्ट रणे शस्त्रैरनैषीद्राक्षसान्क्षयम् ॥ १० ॥
न प्रावोचमहं किंचित्प्रिय यावदजीविषम् ।
बन्धुस्त्वमर्चितः स्नेहान्मा द्विषो न वधीर्मम ॥ ११ ॥
वीर्यं मा न ददर्शस्त्वं मा न त्रास्थाः क्षता पुरम् ।
तवाद्राक्ष्म वयं वीर्यं त्वमजैषीः पुरा सुरान् ॥ १२ ॥
अवोचत्कुम्भकर्णस्तं वयं मन्त्रे ऽभ्यधाम यत् ।
न त्वं सर्वं तदश्रौषीः फलं तस्येदमागमत् ॥ १३ ॥
प्राज्ञवाक्यान्यवामंस्था मूर्खवाक्येष्ववास्थिथाः ।
अध्यगीष्ठाश्च शास्त्राणि प्रत्यपत्था हितं न च ॥ १४ ॥
मूर्खास्त्वामववञ्चन्त ये विग्रहमचीकरन् ।
अभाणीन्माल्यवान्युक्तमशुश्रूषस्त्वं न तन्मदात् ॥ १५ ॥
राघवस्यामुचः कान्तामाहितक्रो न चार्पिपः ।
मा नानुभूः स्वकान्दोषान्मा मुहो मा रुषो ऽधुना ॥ १६ ॥
तस्याप्यत्यक्रमीत्कालो यत्तदाहमवादिषम् ।
अघानिषत रक्षांसि परैः कोशांस्त्वमव्ययीः ॥ १७ ॥
संधानकारणं तेजो न्यगभूत्ते ऽक्षयास्तथा ।
यत्त्वं वैराणि कोशं च सुहृदङ्गमजिग्लपः ॥ १८ ॥

# XII. Kathāsaritsāgara
## (Vetālapañcaviṃśatikā = Kathās 75, 21, b—99).

### 1. Einleitung (75, 21, b—58)

प्रतिष्ठानाभिधानोऽस्ति देशो गोदावरीतटे ॥ १ ॥
तत्र विक्रमसेनस्य पुत्रः शक्रपराक्रमः ।
प्राक्त्रिविक्रमसेनाख्यः ख्यातकीर्तिरभून्नृपः ॥ २ ॥
तस्य प्रत्यहमास्थानगतस्योपेत्य भूपतेः ।
सेवार्थं क्षान्तिशीलाख्यो भिक्षुः फलमुपानयत् ॥ ३ ॥
सोऽपि राजा तदादाय फलमासन्नवर्तिनः ।
हस्ते ददौ प्रतिदिनं कोशागाराधिकारिणः ॥ ४ ॥
इत्थं गतेषु वर्षेषु दशस्वत्र किलैकदा ।
दत्त्वा राज्ञे फलं तस्मिन्भिक्षावास्थानतो गते ॥ ५ ॥
स राजा तत्फलं प्रादात्प्रविष्टायात्र दैवतः ।
क्रीडामर्कटपोताय हस्तभ्रष्टाय रक्षिणाम् ॥ ६ ॥
स मर्कटस्तदश्नाति यावत्तावत्फलात्ततः ।
विभिन्नमध्यान्निरगादनर्घ्यं रत्नमुत्तमम् ॥ ७ ॥
तद्दृष्ट्वादाय पप्रच्छ तं भाण्डागारिकं नृपः ।
भिक्षूपनीतानि मया यानि नित्यं फलानि ते ॥ ८ ॥
हस्ते दत्तानि तानि क्व स्थापितानि सदा त्वया ।
तच्छ्रुत्वा तं स सभयः कोशाध्यक्षो व्यजिज्ञपत् ॥ ९ ॥
क्षिप्तानि तान्यनुद्घाट्य मया गञ्जे गवाक्षतः ।
यद्यादिशसि तद्देव तमुद्घाट्य गवेषये ॥ १० ॥
इत्युक्तवाननुमतो राज्ञा गत्वा क्षणेन सः ।
कोशाध्यक्षः समागत्य प्रभुं व्यज्ञापयत्पुनः ॥ ११ ॥
शीर्णानि चात्र पश्यामि कोशे तानि फलान्यहम् ।
रत्नराशिं तु पश्यामि रश्मिज्वालाकुलं विभो ॥ १२ ॥
तच्छ्रुत्वा तान्मणीन्दत्त्वा तुष्टोऽस्मै कोशरक्षिणे ।
राजान्येद्युरपृच्छत्तं भिक्षुं प्राग्वत्तमागतम् ॥ १३ ॥
भिक्षो धनव्ययेनैवं सेवसे मां किमन्वहम् ।
नेदानीं ते ग्रहीष्यामि फलं यावन्न वक्ष्यसि ॥ १४ ॥

इत्युक्तवन्तं राजानं भिक्षुस्तं विजने ऽब्रवीत् ।
वीरसाचिव्यसापेक्षं मन्त्रसाधनमस्ति मे ॥ १५ ॥
तत्र वीरेन्द्र साहाय्यं क्रियमाणं त्वयार्थये ।
तच्छ्रुत्वा प्रतिपेदे तत्तथेत्यस्य स भूपतिः ॥ १६ ॥
ततः स श्रमणस्तुष्टो नृपं पुनरुवाच तम् ।
तर्हि कृष्णचतुर्दश्यामागामिन्यां निशागमे ॥ १७ ॥
इतो महाश्मशानान्ते वटस्याधः स्थितस्य मे ।
आगन्तव्यं त्वया देव प्रतिपालयतो ऽन्तिकम् ॥ १८ ॥
,बाढमेव करिष्यामीत्युक्ते तेन महीभृता ।
स क्षान्तिशीलः श्रमणो हृष्टः स्वनिलयं ययौ ॥ १९ ॥
अथातः स महासत्त्वः प्राप्य कृष्णचतुर्दशीम् ।
प्रार्थनां प्रतिपन्नां तां भिक्षोस्तस्य नृपः स्मरन् ॥ २० ॥
प्रदोषे नीलवसनसमलंकृतशेखरः ।
निर्ययौ राजधानीतः खड्गपाणिरलक्षितः ॥ २१ ॥
ययौ च घोरनिबिडध्वान्तव्रातमलीमसम् ।
चितानलोग्रतपनज्वालादारुणदर्शनम् ॥ २२ ॥
आलक्ष्यनरकङ्कालकपालास्थिविशङ्कटम् ।
हृष्यत्सनिहितोत्तालभूतवेतालवेष्टितम् ॥ २३ ॥
भैरवस्यापरं रूपमिव गम्भीरभीषणम् ।
स्फूर्जन्महाशिवारावं श्मशानं तदविक्लवः ॥ २४ ॥
विचित्य चात्र तं प्राप्य भिक्षुं वटतरोरधः ।
कुर्वाणं मण्डलन्यासमुपसृत्य जगाद सः ॥ २५ ॥
एषो ऽहमागतो भिक्षो ब्रूहि किं करवाणि ते ।
तच्छ्रुत्वा स नृपं दृष्ट्वा हृष्टो भिक्षुरुवाच तम् ॥ २६ ॥
राजन्कृतः प्रसादश्चेत्तदितो दक्षिणामुखम् ।
गत्वा विदूरमेकाकी विद्यते शिंशपातरुः ॥ २७ ॥
तस्मिन्नुल्लम्बितमृतः को ऽप्येकः पुरुषः स्थितः ।
तमिहानय गत्वा त्वं साहाय्यं कुरु वीर मे ॥ २८ ॥
तच्छ्रुत्वैव तथेत्युक्त्वा स राजा सत्यसंगरः ।
दक्षिणां दिशमालम्ब्य प्रवीरः प्रययौ ततः ॥ २९ ॥
स च दीप्तचितालोकलक्षितेन पथा च सः ।
गत्वा तमसि तं प्राप कथं चिच्छिंशपातरुम् ॥ ३० ॥

तस्य स्कन्धे चिताधूमदग्धस्य क्रव्यगन्धिनः ।
सो ऽपश्यल्लम्बमानं तं भूतस्येव शवं तरोः ॥ ३१ ॥
आरुह्य चात्र भूमौ तं छिन्नरज्जुमपातयत् ।
पातितः सो ऽपि चाकस्माच्चक्रन्द व्यथितो यथा ॥ ३२ ॥
ततो ऽवरुह्य कृपया जीवाशङ्की स तस्य यत् ।
राजाङ्गं प्रामृशत्तेन सो ऽट्टहासं व्यधाच्छवः ॥ ३३ ॥
ततः स राजा मत्वा तं वेतालाधिष्ठितं तदा ।
किं हससीहि गच्छाव इति यावदकम्पितः ॥ ३४ ॥
वक्ति तावन्न भूमौ सवेतालं शवमैक्षत ।
ऐक्षतात्रैव वृक्षे तु लम्बमानं स्थितं पुनः ॥ ३५ ॥
ततो ऽधिरुह्य भूयो ऽपि तमवातारयत्ततः ।
वज्रादपि हि वीराणां चित्तरत्नमखण्डितम् ॥ ३६ ॥
आरोप्य च सवेतालं स्कन्धे मौनेन तं शवम् ।
स त्रिविक्रमसेनो ऽथ राजा गन्तुं प्रचक्रमे ॥ ३७ ॥
यान्तं च तं शवान्तस्थो वेतालो ऽंसस्थितो ऽब्रवीत् ।
राजन्नध्वविनोदाय कथामाख्यामि ते शृणु ॥ ३८ ॥

---

## 2. Erste Erzählung (75, 39—136).

अस्ति वाराणसी नाम पुरारिवसतिः पुरी ।
स्थलीव कैलासगिरेर्या पुण्यजनसेविता ॥ १ ॥
भूरिवारिभृता यद्वदुपकण्ठनिवेशिनी ।
हारयष्टिरिवाभाति यस्याः स्वर्गतरंगिणी ॥ २ ॥
प्रतापानलनिर्दग्धविपक्षकुलकाननः ।
तस्यां प्रतापमुकुटो नाम राजाभवत्पुरा ॥ ३ ॥
तस्याभूद्वज्रमुकुटस्तनयो रूपशौर्ययोः ।
अवरोहदर्पदलनं स्मरस्मारिमनस्य च ॥ ४ ॥
राजपुत्रस्य तस्याथ मन्त्रिपुत्रो महामतिः ।
आसीद्बुद्धिशरीराख्यः शरीराभ्यधिकः सखा ॥ ५ ॥
तेन सख्या सह क्रीडन्स कदाचिन्नृपात्मजः ।
जगाम दूरमध्वानं मृगयातिप्रसङ्गतः ॥ ६ ॥
शौर्यस्योच्चामराणीव सिंहानां मस्तकानि सः ।
छिन्दन्क्षुरैः सबाणानि विवेशैकं महावनम् ॥ ७ ॥

तत्र स्थाने स्मरस्येव पठत्कोकिलबन्दिनि ।
दत्तोपकारे तरुभिर्मञ्जरीचलचामरैः ॥ ८ ॥
सो ऽन्वितो मन्त्रिपुत्रेण तेनापश्यत्सरो महत् ।
विचित्रकमलोत्पत्तिधामाम्बुधिमिवापरम् ॥ ९ ॥
तस्मिंश्च देव सरसि स्नानार्थं का चिदागता ।
तेन दिव्याकृतिः कन्या ददृशे सपरिच्छदा ॥ १० ॥
पूरयन्तीव लावण्यनिर्झरेण सरोवरम् ।
दृष्टिपातैः सृजन्तीव तत्रोत्पलवनं नवम् ॥ ११ ॥
प्रत्यादिशन्तीव मुखेनाम्बुजं निर्जितेन्दुना ।
सा जहार मनस्तस्य राजपुत्रस्य तत्क्षणम् ॥ १२ ॥
सो ऽप्यहार्षीत्तथा तस्या युवा दृष्टो विलोचने ।
यथा नैक्षत सा कन्या लज्जां स्वामप्यलंकृतिम् ॥ १३ ॥
ततः पश्यति तस्मिन्सा केयं स्यादिति सानुगे ।
सख्या स्वदेशाद्याख्यातु विलासच्छद्मनाकरोत् ॥ १४ ॥
करोति स्मोत्पलं कर्णे गृहीत्वा पुष्पशेखरात् ।
चिरं च दन्तरचनां चकारादाय च व्यधात् ॥ १५ ॥
पद्मं शिरसि साकूतं हृदये चादधे करम् ।
राजपुत्रश्च तस्यास्तां सञ्ज्ञां न ज्ञातवांस्तदा ॥ १६ ॥
मन्त्रिपुत्रस्तु बुबुधे स सखा तस्य बुद्धिमान् ।
क्षणाच्च सा ययौ कन्या नीयमानानुगैस्ततः ॥ १७ ॥
प्राप्य च स्वगृहं तस्थौ पर्यङ्के ऽङ्गं निधाय सा ।
चित्तं तु निजसञ्ज्ञार्थमस्थात्तस्मिन्नृपात्मजे ॥ १८ ॥
सो ऽपि राजसुतो भ्रष्टविद्यो विद्याधरो यथा ।
गत्वा स्वनगरीं कष्टां प्रापावस्थां तया विना ॥ १९ ॥
सख्या च मन्त्रिपुत्रेण तेन पृष्टस्तदा रहः ।
शंसता तामदुष्प्रापां त्यक्तधैर्यो जगाद सः ॥ २० ॥
यस्या न नाम न ग्रामो नान्वयो वावबुध्यते ।
सा कथं प्राप्यते तन्मामाश्वासयसि किं मृषा ॥ २१ ॥
इत्युक्तो राजपुत्रेण मन्त्रिपुत्रस्तमभ्यधात् ।
किं न दृष्टं त्वया यद्यत्संज्ञया सूचितं तया ॥ २२ ॥
न्यस्तं यदुत्पलं कर्णे तेनैव ते तयोदितम् ।
कर्णोत्पलस्य राष्ट्रे ऽहं निवसामि महीभृतः ॥ २३ ॥

ज्ञाता यद्दन्तरचना तवैतत्कथित तया ।
तच्च जानीहि मा दन्तघाटकस्य सुतामिति ॥ २४ ॥
पद्मावतीति नामोक्त तयोत्तंसितपद्मया ।
त्वयि प्राणा इति प्रोक्त हृदयार्पितहस्तया ॥ २५ ॥
कलिङ्गदेशे ह्यस्त्यत्र ख्यातः कर्णोत्पलो नृपः ।
तस्य प्रसादवित्तो ऽस्ति महान्यो दन्तघाटकः ॥ २६ ॥
सग्रामवर्धनाख्यस्य तस्याप्यस्ति जगत्त्रये ।
रत्न पद्मावती नाम कन्या प्राणाधिकप्रिया ॥ २७ ॥
एतच्च लोकतो देव यथावद्विदित मम ।
अतो ज्ञाता मया संज्ञा तस्या देशादिशंसिनी ॥ २८ ॥
इत्युक्तो मन्त्रिपुत्रेण तेन राजसुतो ऽथ सः ।
तुतोष तस्मै सुधिये लब्धोपायो जहर्ष च ॥ २९ ॥
समन्त्य च सम तेन स तद्युक्तः स्वमन्दिरात् ।
प्रियार्थी मृगयाव्याजात्पुनस्तामगमद्दिशम् ॥ ३० ॥
अर्धमार्गे च वाताश्ववेगवञ्चितसैनिकः ।
त मन्त्रिपुत्रैकयुतः कलिङ्गविषयं ययौ ॥ ३१ ॥
तत्र तौ प्राप्य नगर कर्णोत्पलमहीपतेः ।
अन्विष्य दृष्ट्वा भवन दन्तघाटस्य तस्य च ॥ ३२ ॥
तद्दूरे च वासार्थमेकस्या वृद्धयोषितः ।
गृह प्राविशता राजपुत्रमन्त्रिसुतावुभौ ॥ ३३ ॥
दत्ताम्बुयवसौ वाहौ गुप्ते ऽवस्थाप्य चात्र सः ।
राजपुत्रे स्थिते वृद्धा मन्त्रिपुत्रो जगाद ताम् ॥ ३४ ॥
कच्चिद्वेत्स्यम्ब सग्रामवर्धनं दन्तघाटकम् ।
तच्छ्रुत्वा सा जरद्योषित्सश्रद्धा तमभाषत ॥ ३५ ॥
वेद्म्येव धात्री तस्यास्मि स्थापिता तेन चाधुना ।
पद्मावत्याः स्वदुहितुः पार्श्वे ज्येष्ठतरेत्यहम् ॥ ३६ ॥
किं त्वहं न सदा तत्र गच्छाम्युपहृताम्बरा ।
कुपुत्रः कितवो वस्त्रं दृष्ट्वा हि हरते मम ॥ ३७ ॥
एवमुक्तवती हृष्टः स्वोत्तरीयादिदानतः ।
संतोष्य सो ऽत्र वृद्धां ता मन्त्रिपुत्रो ऽब्रवीत्पुनः ॥ ३८ ॥
माता त्व तद्वदामस्ते गुप्त यत्तत्कुरुष्व नः ।
दन्तघाटसुतामेता गत्वा पद्मावती वद ॥ ३९ ॥

सो ऽत्रागतो राजपुत्रो दृष्टो य सरसि त्वया ।
तेन चेह तवाख्यातुं प्रेषिता प्रणयादहम् ॥ ४० ॥
तच्छ्रुत्वा सा तथेत्युक्त्वा वृद्धा दानवशीकृता ।
गत्वा पद्मावतीपार्श्वमाजगाम क्षणान्तरे ॥ ४१ ॥
पृष्टा जगाद तौ राजसुतमन्त्रिसुतौ च सा ।
युष्मदागमन तस्या गत्वा गुप्त मयोदितम् ॥ ४२ ॥
तया श्रुत्वा च निर्भर्त्स्य पाणिभ्यामहमाहता ।
द्वाभ्यां कर्पूरलिप्ताभ्यामुभयोर्गण्डयोर्मुखे ॥ ४३ ॥
तत परिभवोद्विग्ना रुदन्त्यहमिहागता ।
एतास्तदङ्गुलीमुद्रा पुत्रौ मे पश्यत मुखे ॥ ४४ ॥
एवं तयोक्ते नैराश्यविषण्ण त नृपात्मजम् ।
जगाद स महाप्राज्ञो मन्त्रिपुत्रो जनान्तिकम् ॥ ४५ ॥
मा गा विषादं रचन्त्या मन्त्रं निर्भर्त्स्य यत्तया ।
कर्पूरशुभ्रा वक्त्रे ऽस्या स्वाङ्गुल्यो दश पातिता ॥ ४६ ॥
तदेतदुक्त पत्रे ऽस्मिञ्शुक्ले चन्द्रवतीरिमा ।
रात्रीर्दश प्रतीक्षध्वं संगमानुचिता इति ॥ ४७ ॥
इत्याश्वास्य स त राजपुत्रं मन्त्रिसुतस्तत ।
विक्रीय गुप्त हस्तस्थं काञ्चनं किं चिदापणे ॥ ४८ ॥
वृद्धया साधयामास महार्हं भोजनं तया ।
ततस्तौ बुभुजाते द्वौ तत्तया सह वृद्धया ॥ ४९ ॥
एवं नीत्वा दशाहानि जिज्ञासार्थं पुन स ताम् ।
पद्मावत्यन्तिक वृद्धां मन्त्रिपुत्रो विसृष्टवान् ॥ ५० ॥
सापि मिष्टान्नपानादिलुब्धा तदनुरोधत ।
गत्वा वासगृहं तस्या भूयो ऽभ्येत्य जगाद तौ ॥ ५१ ॥
इतो गत्वाद्य तूष्णीमप्यहं तत्र स्थिता तया ।
युष्मत्कथापराधं तमुद्भिरन्त्या स्वयं पुन ॥ ५२ ॥
सालक्तकाभिस्तिसृभि कराङ्गुलिभिराहता ।
उरस्यस्मिन्नथैषाहमिहायाता तदङ्किता ॥ ५३ ॥
तच्छ्रुत्वा राजपुत्रं त स्वैरं मन्त्रिसुतो ऽब्रवीत् ।
मा कार्षीरन्यथा शङ्कामस्या हि हृदये तया ॥ ५४ ॥
सालक्तकाङ्गुलीमुद्रात्रयं विन्यस्य सूचित ।
रजस्वला त्रिरात्रमस्मि स्थिताहमिति सूचितम् ॥ ५५ ॥

एवमुक्त्वा नृपसुत मन्त्रिपुत्रस्त्वयि गते ।
पद्मावत्यै पुनस्तस्यै वृद्धां तां प्रजिघाय स ॥ ५६ ॥
सा गता मन्दिरं तस्यास्तया संमान्य भोजिता ।
प्रीत्या पानादिलीलाभिर्दिनं चात्र विनोदिता ॥ ५७ ॥
सायं च यावत्सा वृद्धा गृहमागन्तुमिच्छति ।
उदभूद्भयदस्तावत्तत्र कोलाहलो बहिः ॥ ५८ ॥
हा हा भ्रष्टो ऽयमालानाज्जनान्मथ्नन्प्रधावति ।
मत्तहस्तीति लोकस्य तदाक्रन्दो ऽथ शुश्रुवे ॥ ५९ ॥
ततः पद्मावती सा तां वृद्धामेवमभाषत ।
स्पष्टेन हस्तिरुद्धेन गन्तुं युक्तं न ते पथा ॥ ६० ॥
तत्पीठिकां समारोप्य बद्धालम्बनरज्जुकाम् ।
बृहद्गवाक्षेणानेन त्वामत्र प्रक्षिपामहे ॥ ६१ ॥
गृहोद्याने ततो वृक्षमारुह्यामुं विलङ्घ्य च ।
प्राकारमवरुह्यान्यवृक्षेण स्वगृहं व्रज ॥ ६२ ॥
इत्युक्त्वा सा गवाक्षेण क्षेपयामास तत्र ताम् ।
वृद्धां चेटीभिरुद्याने रज्जुपीठिकया ततः ॥ ६३ ॥
सा च गत्वा यथोक्तेन पथा सर्वं शशंस तत् ।
यथावद्राजपुत्राय तस्मै मन्त्रिसुताय च ॥ ६४ ॥
ततः स मन्त्रिपुत्रस्तं राजपुत्रमभाषत ।
सिद्धं तवेष्टं मार्गो हि युक्त्या ते दर्शितस्तया ॥ ६५ ॥
तद्गच्छाद्यैव तत्र त्वं प्रदोषे ऽस्मिन्नुपागते ।
एतेनैव पथा तस्याः प्रियाया मन्दिरं विश ॥ ६६ ॥
इत्युक्तस्तेन तद्युक्तो राजपुत्रो ययौ स तत् ।
उद्यानं वृद्धयोक्तेन तेन प्राकारवर्त्मना ॥ ६७ ॥
तत्रापश्यच्च रज्जुं तां लम्बमानां सपीठिकाम् ।
मार्गोन्मुखीभिश्चेटीभिरुपरिष्टादधिष्ठिताम् ॥ ६८ ॥
आरूढस्तां च दृष्ट्वैव दासीभिस्ताभिराशु स ।
रज्ज्वोत्क्षिप्तो गवाक्षेण प्रविवेश प्रियान्तिकम् ॥ ६९ ॥
तस्मिन्प्रविष्टे स ययौ मन्त्रिपुत्रः स्वमास्पदम् ।
राजपुत्रस्तु तां पद्मावतीं तत्र ददर्श स ॥ ७० ॥
पूर्णामृतांशुवदनां प्रसरत्कान्तिचन्द्रिकाम् ।
कृष्णपक्षभयाद्गुप्तं स्थितां राकानिशामिव ॥ ७१ ॥

सापि दृष्ट्वा तमुत्थाय चिरोत्सुकोचितैस्तत ।
कण्ठग्रहादिभिस्तैस्तैः प्रौढाचारैरमानयत् ॥ ७२ ॥
ततस्तया स गान्धर्वविधिनोढया सह ।
गुप्तं राजसुतस्तस्थौ पूर्णेच्छस्तत्र कान्तया ॥ ७३ ॥
स्थित्वा चाहानि कति चिद्रात्रौ तामवदत्प्रियाम् ।
सखा मम सहायातो मन्त्रिपुत्र इह स्थितः ॥ ७४ ॥
स चात्र तिष्ठत्येकाकी त्वज्ज्येष्ठतरिकागृहे ।
गत्वा संभाव्य तं तन्वि पुनरेष्यामि ते ऽन्तिकम् ॥ ७५ ॥
तच्छ्रुत्वा तमवोचत्सा धूर्ता पद्मावती प्रियम् ।
हन्तार्यपुत्र पृच्छामि तां संज्ञा मत्कृतास्त्वया ॥ ७६ ॥
ज्ञाता किं किमु वा तेन सख्या मन्त्रिसुतेन ते ।
एवमुक्तवतीमेतां राजपुत्रो जगाद स ॥ ७७ ॥
न ज्ञातं तन्मया किं चिज्ज्ञात्वा सर्वं तु तेन मे ।
आख्यातं मन्त्रिपुत्रेण दिव्यप्रज्ञानशालिना ॥ ७८ ॥
एतच्छ्रुत्वा विचिन्त्यैव भामिनी सा जगाद तम् ।
तर्ह्ययुक्तं कृतं यन्मे चिरात्स कथितस्त्वया ॥ ७९ ॥
स मे भ्राता सखा यस्ते तस्य च प्रथमं मया ।
ताम्बूलादिसमाचारः कर्तव्यो हि सदा भवेत् ॥ ८० ॥
इत्युक्तः सत्यानुमतस्तया पूर्वपथेन स ।
राजपुत्रो ऽन्तिकं सख्युस्तस्यागाच्च ततो निशि ॥ ८१ ॥
शशंस च कथामध्ये तत्तस्मै यत्तदाश्रयम् ।
संज्ञाविज्ञानकथनं कृतं तेन प्रियान्तिके ॥ ८२ ॥
मन्त्रिपुत्रस्तु सो ऽयुक्तमिति न श्रद्दधे ऽस्य तत् ।
तावच्च सा तयोस्तत्र विभाताभूद्विभावरी ॥ ८३ ॥
अथैतयोर्विधौ सांध्ये निर्वृत्ते कुर्वतोः कथाः ।
आगात्पक्वान्नताम्बूलहस्ता पद्मावतीसखी ॥ ८४ ॥
सा मन्त्रिपुत्र कुशलं पृष्ट्वा दत्तोपचारिका ।
निषेद्धुं राजपुत्रस्य भोजनं तत्र युक्तितः ॥ ८५ ॥
कथान्तरे स्वामिनीं स्वां भोजनादौ तदागमम् ।
प्रतीक्षमाणामावेद्य क्षणात्तूर्णं ततो ययौ ॥ ८६ ॥
ततश्च मन्त्रिपुत्रः स राजपुत्रमभाषत ।
कौतुकं पश्य देवैकं दर्शयाम्यधुना तव ॥ ८७ ॥

इत्युक्त्वा भक्ष्यमेतत्स पक्वान्नं दत्तवांस्ततः ।
सारमेयाय स च तत्खादन्नेव व्यपद्यत ॥ ८८ ॥
तद्दृष्ट्वा किमिदं चित्रमिति राजसुतोऽत्र सः ।
पप्रच्छ मन्त्रिपुत्रं तं स चैनं प्रत्यभाषत ॥ ८९ ॥
सख्याख्यानेन धूर्तं मां विदित्वा हन्तुकामया ।
तया विषान्नं प्रहितं मम त्वदनुरक्तया ॥ ९० ॥
नाक्षिप्स्यति मदेकाग्रो राजपुत्रो भवेदयम् ।
एतदर्थं च मुक्त्वा मां नगरीं स्वां व्रजेदिति ॥ ९१ ॥
तन्मुञ्च मन्युमेतस्यां बन्धुत्यागान्महात्मन् ।
कुर्यास्त्वं हरणे युक्तिं वक्ष्याम्यालोचयाम्यहम् ॥ ९२ ॥
इत्युक्तवन्तं तं मन्त्रिसुतं राजसुतोऽत्र सः ।
सत्यं बुद्धिशरीरस्त्वमिति यावत्प्रशंसति ॥ ९३ ॥
अशङ्कितं बहिस्तावद्दुःखाकुलजनारवः ।
हा धिगद्य सुतो बालो विपन्न इति शुश्रुवे ॥ ९४ ॥
तदाकर्णनहृष्टोऽथ मन्त्रिपुत्रो नृपात्मजम् ।
जगाद हन्त गच्छाद्य पद्मावत्या गृहं निशि ॥ ९५ ॥
तत्र तां पाययेस्तावद्यावत्पानमदेन सा ।
निःसंज्ञा नष्टचेष्टा च गतजीवेव जायते ॥ ९६ ॥
ततस्तस्याः सनिद्रायाः शूलेनाङ्कं कटीतटे ।
दत्त्वामितक्षेनादाय तदाभरणसंचयम् ॥ ९७ ॥
आगच्छेस्त्वं गवाक्षेण रज्जुलम्बविनिर्गतः ।
ततः परं यथा भद्रं भवेत्तन्नाख्याम्यहं तथा ॥ ९८ ॥
इत्युक्त्वा कारयित्वा च क्रोडवालनिभाग्रिकम् ।
मन्त्रिपुत्रो ददौ तस्मै त्रिशूलं राजसूनवे ॥ ९९ ॥
राजपुत्रः स हस्ते तत्कृत्वा कुटिलकर्कशम् ।
कान्तायसदृढं चित्तमिव कान्तावयस्ययोः ॥ १०० ॥
तथेति पूर्ववद्रात्रावगात्पद्मावतीगृहम् ।
अविचार्यं प्रभूणां हि शुचेर्वाक्यं स्वमन्त्रिणः ॥ १०१ ॥
तत्र तां मद्यनिश्चेष्टां शूलेन जघनेऽङ्किताम् ।
हृतालंकरणां कृत्वा तस्यागात्सख्युरन्तिकम् ॥ १०२ ॥
दर्शिताभरणस्तस्मै शशंस च यथा कृतम् ।
ततः स मन्त्रिपुत्रोऽपि सिद्धं मेने मनीषितम् ॥ १०३ ॥

प्रातर्गत्वा श्मशाने च सो ऽभूत्तापसवेषभृत् ।
स्वैरं राजसुतं तं च विदधे शिष्यरूपिणम् ॥ १०४ ॥
अब्रवीत्तं च गच्छैकामितो ऽलङ्करणादिमाम् ।
मुक्तावलीं समादाय त्वं विक्रेतुमिहापणे ॥ १०५ ॥
बहु मूल्यं वदेस्तस्या येनैतां नैव कश्चन ।
गृह्णीयाद्भ्राम्यमाणां च सर्वे को ऽपि विलोकयेत् ॥ १०६ ॥
गुरुणा मम विक्रेतुमियं दत्तेत्यनाकुलः ।
ब्रूयाश्च यदि गृह्णीयुस्त्वां पुररक्षिणः ॥ १०७ ॥
इति स प्रेषितस्तेन गत्वा राजसुतस्तदा ।
अतिष्ठदापणे भ्राम्यन्व्यक्तं मुक्तावलीं दधत् ॥ १०८ ॥
तथाभूतश्च जगृहे स दृष्ट्वा पुररक्षिभिः ।
दन्तघाटसुतामोषप्रसक्तैश्चौरगवेषिभिः ॥ १०९ ॥
निन्ये च नगराध्यक्षनिकटं तैः स तत्क्षणम् ।
स च तं तापसाकारं दृष्ट्वा पप्रच्छ सान्त्वतः ॥ ११० ॥
कुतो मुक्तावलीयं ते भगवन्निह हारिता ।
दन्तघाटककन्याया हृते ह्याभरणे निशि ॥ १११ ॥
तच्छ्रुत्वा राजपुत्रस्तं सो ऽवादीत्तापसाकृतिः ।
गुरुणा मम दत्तेयमेत्यासौ पृच्छ्यतामिति ॥ ११२ ॥
ततश्चोपेत्य तं नत्वा पप्रच्छ नगराधिपः ।
मुक्तावलीयं भगवन्कुतस्ते शिष्यहस्तगा ॥ ११३ ॥
श्रुत्वैतद्विजनं कृत्वा स धूर्तस्तमभाषत ।
अहं तपस्वी भ्राम्यामि सदारण्येष्वितस्ततः ॥ ११४ ॥
सो ऽहं दैवादिह प्राप्तः श्मशाने ऽद्य स्थितो निशि ।
अपश्यं योगिनीचक्रं समागतमितस्ततः ॥ ११५ ॥
तन्मध्ये चैकयानीय योगिन्या राजपुत्रकः ।
उद्घाटितहृदम्भोजो भैरवाय निवेदितः ॥ ११६ ॥
पानमत्ता च सा हर्तुं जपतो मे ऽक्षमालिकाम् ।
प्रावर्तत महामाया विकारान्कुर्वती मुखे ॥ ११७ ॥
अतिप्रवृत्ता च मया क्रुद्धेन जपनाशने ।
धर्षिता सा त्रिशूलेन मन्त्रप्रज्वलितार्चिषा ॥ ११८ ॥
हृता मुक्तावली चेयं तस्याः कण्ठान्मया तदा ।
सेयं च तापसानर्हा विक्रेया मम वर्तते ॥ ११९ ॥

एतच्छ्रुत्वा पुराध्यक्षो गत्वा भूपं व्यजिज्ञपत् ।
भूपो ऽप्याकर्ण्य तत्ता च बुद्ध्वा तन्मौक्तिकावलीम् ॥ १२० ॥
प्रेषणप्रेषितायातवृद्धाप्तवनितामुखात् ।
श्रुत्वा च दृष्टशूलाङ्का जघने सत्यमेव ताम् ॥ १२१ ॥
ग्रस्तः सुतो मे डाकिन्या तयेत्युत्पन्ननिश्चयः ।
स्वयं तस्यान्तिक गत्वा मन्त्रिपुत्रतपस्विनः ॥ १२२ ॥
पृष्ट्वा च निग्रहं तस्याः पद्मावत्याः स तद्गिरा ।
पितृभ्या शोच्यमानायाः पुरान्निर्वासन व्यधात् ॥ १२३ ॥
निर्वासिताटवीस्था सा तथापि न जहौ तनुम् ।
उपाय मन्त्रिपुत्रेण त सभाव्य तथा कृतम् ॥ १२४ ॥
दिनान्ते तां च शोचन्तीमश्वारूढावुपेयतुः ।
त्यक्ततापसवेषौ तौ मन्त्रिपुत्रनृपात्मजौ ॥ १२५ ॥
आश्वास्यारोप्य तुरगे स्वराष्ट्रं निन्यतुश्च ताम् ।
तत्र तस्थौ तया सार्धं राजपुत्रः स निर्वृतः ॥ १२६ ॥
दन्तघाटस्त्वरण्ये तां क्रव्याद्भिर्भक्षितां मृताम् ।
मत्वा व्यपादि शोकेन भार्या चानुजगाम तम् ॥ १२७ ॥
इत्याख्याय स भूयस्तं वेतालो नृपमब्रवीत् ।
तं मे ऽत्र सशयं छिन्धि दंपत्योरेतयोर्वधात् ॥ १२८ ॥
मन्त्रिपुत्रस्य किं पाप राजपुत्रस्य किं नु वा ।
पद्मावत्याः किमथ वा त्वं हि बुद्धिमतां वरः ॥ १२९ ॥
जानानश्च न चेद्राजन्मम तत्त्व वदिष्यसि ।
तदेष शतधा मूर्धा निश्चित ते स्फुटिष्यति ॥ १३० ॥
इत्युक्तवन्त वेताल विजानञ्छापभीतितः ।
स त्रिविक्रमसेनस्तमेव प्रत्यब्रवीन्नृपः ॥ १३१ ॥
योगेश्वर किमज्ञेयमेतन्नैषां हि पातकम् ।
त्रयाणामपि राज्ञस्तु पापं कर्णोत्पलस्य तत् ॥ १३२ ॥
वेतालो ऽप्याह राज्ञः किं ते हि तत्कारणास्त्रयः ।
काकाः किमपराध्यन्ति हंसैर्जग्धेषु शालिषु ॥ १३३ ॥
राजा ततो ऽब्रवीदेवं न दुष्यन्ति त्रयो ऽपि ते ।
मन्त्रिसूनोर्हि तत्तावत्प्रभुकार्यमपातकम् ॥ १३४ ॥
पद्मावतीराजपुत्रौ तौ हि कामशराग्निना ।
संतप्तावविचारत्वाददोषौ स्वार्थमुद्यतौ ॥ १३५ ॥

कर्णोत्पलस्तु राजा स नीतिशास्त्रेष्वशिक्षित ।
चारै प्रजास्वनन्विष्यतत्त्वशुद्धि निजास्वपि ॥ १३६ ॥
अजानन्धूर्तचरितानीङ्गिताद्यविचक्षण ।
तथा तन्निर्विचारं यच्चक्रे तेन स पापभाक ॥ १३७ ॥
इत्याकर्ण्य विमुक्तमौनमुदिते सम्यङ्नृपेणोत्तरे
स्कन्धात्तस्य स दार्ढ्यमाकलयितु मायाबलात्तत्क्षणम् ।
वेतालो नृकलेवरान्तरगत क्वाप्यप्रतर्क्यो ययौ
निष्क्रम्य स च भूपति पुनरमु प्राप्तुं व्यधान्निश्चयम् ॥ १३८ ॥

---

## 3 Zweite Erzahlung (76, 1—42)

ततो ऽत्र पुनरानेतु तं वेतालमगान्नृप ।
स त्रिविक्रमसेनस्तच्छिंशपापादपान्तिकम् ॥ १ ॥
प्राप्तो ऽत्र वीक्षते यावच्चितालोकवशान्निशि ।
तावद्ददर्श त भूमौ कूजन्त पतित शवम् ॥ २ ॥
अथ त मृतदेहस्थ वेताल स महीपति ।
आरोप्य स्कन्धमानेतु तूष्णी प्रववृते जवात् ॥ ३ ॥
तत स्कन्धात्स वेतालो भूयस्त नृपमब्रवीत् ।
राजन्महत्यनुचिते क्लेशे ऽस्मिन्पतितो भवान् ॥ ४ ॥
अतस्तव विनोदाय कथयामि कथा शृणु ।
अस्त्यग्रहार कालिन्दीतटे ब्रह्मस्थलाभिध ॥ ५ ॥
अग्निस्वामीति तत्रासीद्ब्राह्मणो वेदपारग ।
तस्यातिरूपा मन्दारवतीत्यजनि कन्यका ॥ ६ ॥
या निर्माय नवानर्घ्यलावण्यां नियत विधि ।
स्वर्गस्त्रीपूर्वनिर्माण निजमेवाजुगुप्सत ॥ ७ ॥
तस्या च यौवनस्थायामाययु कन्यकुब्जत ।
समसर्वगुणास्तत्र त्रयो ब्राह्मणपुत्रका ॥ ८ ॥
तेषा चात्मार्थमेकैकस्तत्पितुस्तामयाचत ।
अनिच्छन्दानमन्यस्मै तस्या प्राणव्ययादपि ॥ ९ ॥
तत्पिता स तु तन्मध्यान्नैकस्मायपि तां ददौ ।
भीतो ऽन्ययोर्वधात्तेन तस्थौ कन्यैव सा तत ॥ १० ॥
ते च त्रयो ऽपि तद्वक्त्रचन्द्रिकासक्तदृष्टय ।
चकोरव्रतमालम्ब्य तत्रैवासन्दिवानिशम् ॥ ११ ॥

अथाकस्मात्समुत्पन्नदाहज्वरवशेन सा ।
जगाम मन्दारवती कुमारी किल पञ्चताम् ॥ १२ ॥
ततस्तां विप्रपुत्रास्ते परासुं शोकविक्लवाः ।
कृतप्रसाधनां नीत्वा श्मशानं चक्रुरग्निसात् ॥ १३ ॥
एकश्च तेषां तत्रैव विधाय मठिकां ततः ।
कृततद्भस्मशय्यः सन्नास्त याचितभैक्षभुक् ॥ १४ ॥
द्वितीयोऽस्थीन्युपादाय तस्या भागीरथीं ययौ ।
तृतीयस्तापसो भूत्वा भ्रान्तुं देशान्तराण्यगात् ॥ १५ ॥
स भ्राम्यंस्तापसः प्राप्य ग्रामं वक्रोलकाभिधम् ।
तत्रातिथिः सन्कस्यापि विप्रस्य प्राविशद्गृहम् ॥ १६ ॥
तत्पूजितः स यावच्च भोक्तुं तत्र प्रचक्रमे ।
तावदेकः शिशुस्तत्र प्रवृत्तोऽभूत्प्ररोदितुम् ॥ १७ ॥
स सान्त्व्यमानोऽपि यदा न व्यरंसीत्तदा क्रुधा ।
बाहोरादाय गृहिणी ज्वलत्यग्नौ तमक्षिपत् ॥ १८ ॥
क्षिप्त एव स मृद्वङ्गो भस्मीभावमवाप्तवान् ।
तद्दृष्ट्वा जातरोमाञ्चः सोऽब्रवीत्तापसोऽतिथिः ॥ १९ ॥
हा धिक्कष्टं प्रविष्टोऽस्मि ब्रह्मराक्षसवेश्मनि ।
तन्मूर्तं किल्बिषमिदं न भोक्ष्येऽन्नमिहाधुना ॥ २० ॥
एवं वदन्तं तं सोऽत्र गृहस्थः प्राह पश्य मे ।
शक्तिं पठितसिद्धस्य मन्त्रस्य मृतजीवनीम् ॥ २१ ॥
इत्युक्त्वादाय तन्मन्त्रपुस्तिकामनुवाच्य च ।
तत्र भस्मनि चिक्षेप स धूलिमभिमन्त्रिताम् ॥ २२ ॥
तेनोदतिष्ठत्तद्रूप एव जीवन्स बालकः ।
ततः स निर्वृतस्तत्र भुक्तवान्विप्रतापसः ॥ २३ ॥
गृहस्थोऽपि स तां नागदन्तेऽवस्थाप्य पुस्तिकाम् ।
भुक्त्वा च शयनं भेजे रात्रौ तत्रैव तद्युतः ॥ २४ ॥
सुप्ते गृहपतौ तस्मिन्स्वैरमुत्थाय शङ्कितः ।
स प्रियाजीवनार्थी तां पुस्तिकां तापसोऽग्रहीत् ॥ २५ ॥
गृहीत्वैव च निर्गत्य ततो रात्रिंदिवं व्रजन् ।
क्रमाच्छ्मशानं संप्राप यत्र दग्धास्य सा प्रिया ॥ २६ ॥
ददर्श चात्र तत्कालं तं द्वितीयमुपागतम् ।
यः स गङ्गाम्भसि क्षेप्तुं तदस्थीनि गतोऽभवत् ॥ २७ ॥

तत्रस्थं समासाद्य च तस्या भस्मनि शायिनम् ।
निबद्धमठिकं तत्र द्वावप्येतावुवाच सः ॥ २८ ॥
मठिकापाल्यतामेषा यावदुत्थापयामि ताम् ।
जीवन्तीं भस्मतः कान्तां मन्त्रशक्त्या कयाप्यहम् ॥ २९ ॥
इति तौ प्रेर्य निर्बन्धान्निर्लोठ्य मठिकां च सः ।
उद्घाट्य तापसो विप्रः पुस्तिकां तामवाचयत् ॥ ३० ॥
अभिमन्त्र्य च मन्त्रेण धूलिं भस्मन्यवाक्षिपत् ।
उदतिष्ठच्च जीवन्ती सा मन्दारवती ततः ॥ ३१ ॥
वह्निं प्रविश्य निष्क्रान्तं वपुः पूर्वाधिकद्युति ।
तदा बभार सा कन्या काञ्चनेनेव निर्मितम् ॥ ३२ ॥
तादृशीं तां पुनर्जातां ते दृष्ट्वैव स्मरातुराः ।
प्राप्तुकामास्त्रयो ऽप्येवमन्योन्यं कलहं व्यधुः ॥ ३३ ॥
एको ऽब्रवीदियं भार्या मम मन्त्रबलार्जिता ।
तीर्थप्रभावजा भार्या ममेयमिति चापरः ॥ ३४ ॥
रक्षित्वा भस्म तपसा जीवितेयं मयेह यत् ।
तदेषा मम भार्येति तृतीयो ऽत्र जगाद सः ॥ ३५ ॥
विवादनिर्णये तेषां त्वं तावन्मे महीपते ।
निश्चयं ब्रूहि कस्यैषा कन्या भार्योपपद्यते ॥ ३६ ॥
विदलिष्यति मूर्धा ते यदि जानन्न वक्ष्यसि ।
इति वेतालतः श्रुत्वा तं स राजैवमभ्यधात् ॥ ३७ ॥
यः क्लेशमनुभूयापि मन्त्रेणैतामजीजिवत् ।
पिता स तस्यास्तत्कार्यकरणान्न पुनः पतिः ॥ ३८ ॥
यश्चास्थीनि निनायास्या गङ्गायां स सुतो मतः ।
यस्तु तद्भस्मशय्यस्तामाश्लिष्यासीत्तपश्चरन् ॥ ३९ ॥
श्मशान एव तत्प्रीत्या भर्ता तस्याः स उच्यते ।
कृतं तदनुरूपं हि तेन गाढानुरागिणा ॥ ४० ॥
एवं नृपात्त्रिविक्रमसेनाच्छ्रुत्वैव मुक्तमौनात्सः ।
तस्य स्कन्धादगमद्वेतालो ऽतर्कितं स्वपदम् ॥ ४१ ॥
राजाथ भिक्ष्वर्थसमुद्यतस्तं प्राप्तुं स भूयो ऽपि मनो बबन्ध ।
प्राणात्यये ऽपि प्रतिपन्नमर्थं तिष्ठन्त्यनिर्वाह्य न धीरसत्त्वाः ॥ ४२ ॥

---

## 4. Dritte Erzählung (77, 1—95).

अथ भूयो ऽपि वेतालमानेतुं नृपसत्तमः ।
स त्रिविक्रमसेनस्तमुपागाच्छिंशपातरुम् ॥ १ ॥
तत्रस्थमेतं सम्प्राप्य मृतदेहगतं पुनः ।
स्कन्धे गृहीत्वैव गन्तुं तूष्णीं प्रववृते ततः ॥ २ ॥
प्रयान्तं च तमाह स्म स वेतालो ऽस्य पृष्ठगः ।
चित्रं नोद्विजसे राजन्निशि कुर्वन्गमागमम् ॥ ३ ॥
तदखेदाय भूयस्ते वर्णयामि कथां शृणु ।
अस्ति पाटलिपुत्राख्यं ख्यातं भूमण्डले पुरम् ॥ ४ ॥
तत्रासीन्नृपतिः पूर्वं नाम्ना विक्रमकेसरी ।
गुणानामिव रत्नानामाश्रयं यं व्यधाद्विधिः ॥ ५ ॥
तस्य शापावतीर्णो ऽभूद्दिव्यविज्ञानवाङ्शुकः ।
विदग्धचूडामणिरित्याख्यया सर्वशास्त्रवित् ॥ ६ ॥
तेनोपदिष्टां सदृशीं राजपुत्रीं नृपात्मजः ।
मागधीमुपयेमे स भार्यां चन्द्रप्रभाभिधाम् ॥ ७ ॥
तस्या अपि तथाभूता ज्ञानविज्ञानशालिनी ।
शारिका सोमिका नाम राजपुत्र्याः किलाभवत् ॥ ८ ॥
ते चैकपञ्जरस्थे द्वे तत्रास्तां शुकशारिके ।
सेवमाने स्वविज्ञानैर्दंपती तौ निजप्रभू ॥ ९ ॥
एकदा साभिलाषस्तां शारिकां सो ऽब्रवीच्छुकः ।
एकशय्यासनाहारा सुभगे भज मामिति ॥ १० ॥
नाहं पुरुषसंसर्गमिच्छामि पुरुषा यतः ।
दुष्टाः कृतघ्ना इति सा शारिका प्रत्युवाच तम् ॥ ११ ॥
न दुष्टाः पुरुषा दुष्टा नृशंसहृदयाः स्त्रियः ।
इति भूयः शुकेनोक्ते विवादो ऽजायत तयोः ॥ १२ ॥
कृतदासत्वभार्यात्वपणौ तौ शकुनी मिथः ।
निर्णयायाथ सभ्यं तं राजपुत्रमुपेयतुः ॥ १३ ॥
स विवादपदं श्रुत्वा तयोरास्थानगः पितुः ।
कथं कृतघ्नाः पुरुषा ब्रूहीत्याह स्म शारिकाम् ॥ १४ ॥
ततः सा शृण्वित्युक्त्वा निजपक्षप्रसिद्धये ।
पुंदोषख्यापिनीमेतां शारिकाकथयत्कथाम् ॥ १५ ॥
अस्ति कामन्दकी नाम नगरी भुवि विश्रुता ।
अर्थदत्ताभिधानो ऽभूद्वणिक्तस्यां महाधनः ॥ १६ ॥

धनदत्ताभिधानश्च पुत्रस्तस्योदपद्यत ।
पितर्युपरते सो ऽपि बभूवोच्छृङ्खलो युवा ॥ १७ ॥
द्यूतादिसङ्गे धूर्ताश्च मिलितास्तमपातयन् ।
कामं व्यसनवृक्षस्य मूलं दुर्जनसंगतिः ॥ १८ ॥
अचिराद्व्यसनक्षीणधनो दौर्गत्यलज्जया ।
सो ऽथ त्यक्त्वा स्वदेशं तं भ्रान्तुं देशान्तराण्यगात् ॥ १९ ॥
गच्छंश्च चन्दनपुरं नाम स्थानमवाप्य सः ।
विवेश भोजनार्थी सन्नेकस्य वणिजो गृहम् ॥ २० ॥
स वणिक्सुकुमारं तं दृष्ट्वा पृष्ट्वान्वयादिकम् ।
ज्ञात्वा कुलीनं सत्कृत्य स्वीचक्रे दैवयोगतः ॥ २१ ॥
ददौ च सधनां तस्मै नाम्ना रत्नावलीं सुताम् ।
ततः स धनदत्तो ऽत्र तस्थौ श्वशुरवेश्मनि ॥ २२ ॥
दिनेष्वेव च यातेषु सुखविस्मृतदुर्गतिः ।
स्वदेशं गन्तुकामो ऽभूत्प्राप्तार्थो व्यसनोत्सुकः ॥ २३ ॥
ततो ऽनुमान्य कथमप्यवशं श्वशुरं शठः ।
तं दुहितैकसंतानं गृहीत्वा तामलंकृताम् ॥ २४ ॥
भार्यां रत्नावलीं युक्तामेकया वृद्धया स्त्रिया ।
स आत्मनातृतीयः सन्देशात्प्रस्थितवांस्ततः ॥ २५ ॥
क्रमात्प्राप्याटवीं दूरामुक्त्वा तस्करजां भियम् ।
गृहीत्वाभरणं तस्या भार्याया स्वीचकार सः ॥ २६ ॥
दृश्यतां द्यूतवेश्यादिकष्टव्यसनसङ्गिनाम् ।
हृदयं हा कृतघ्नानां पुंसां निस्त्रिंशकर्कशम् ॥ २७ ॥
सो ऽथ पापो ऽर्थहेतोस्तां भार्यां गुणवतीमपि ।
हन्तुं श्वभ्रे निचिक्षेप तया वृद्धस्त्रिया युताम् ॥ २८ ॥
क्षिप्त्वैव च गते तस्मिंस्तत्राथ वृद्धा व्यपद्यत ।
तद्भार्या तु लतागुल्मविलग्ना न व्यपादि सा ॥ २९ ॥
उत्तस्थौ च ततः श्वभ्रात्क्रोशन्ती करुणं शनैः ।
आलम्ब्य तृणगुल्मादि सशेषत्वात्किलायुषः ॥ ३० ॥
आययौ विक्षताङ्गी च पृष्ट्वा मार्गं पदे पदे ।
यथागतेनैव पथा कृच्छ्रात्तत्सदनं पितुः ॥ ३१ ॥
तथाकस्मात्तथाभूता मात्रा पृष्टा ससंभ्रमम् ।
मात्रा पित्रा च रुदिता साध्वी सैवमभाषत ॥ ३२ ॥

मुषिताः स्मः पथि स्तेनैर्नीतो बद्धा च मे पतिः ।
श्वभ्रे मृता निपत्यापि श्वभ्रे नाहं मृता पुनः ॥ ३३ ॥
अथागतेन केनापि पथिकेन कृपालुना ।
उद्धृताहं ततः श्वभ्रात्प्राप्तास्मीह च दैवतः ॥ ३४ ॥
एवमुक्तवती पित्रा मात्रा चाश्वासिता ततः ।
भर्तृचिन्तेव सा तस्थौ तत्र रत्नावली सती ॥ ३५ ॥
याते काले च तद्भर्ता स स्वदेशगतः पुनः ।
द्यूतक्षयिततद्वित्तो धनदत्तो व्यचिन्तयत् ॥ ३६ ॥
आनयामि पुनर्गत्वा मार्गित्वा श्वशुराद्धनम् ।
गृहे स्थिता मे त्वत्पुत्रीत्यभिधास्ये च तत्र तम् ॥ ३७ ॥
एवं स हृदये ध्यात्वा प्रायाच्छ्वशुरवेश्म तत् ।
प्राप्तं च तत्र तं दूरात्स्वभार्या पश्यति स्म सा ॥ ३८ ॥
धावित्वा चापतत्तस्य सा पापस्यापि पादयोः ।
दुष्टेऽपि पत्यौ साध्वीनां नान्यथावृत्ति मानसम् ॥ ३९ ॥
भीताय च ततस्तस्मै तदशेषं न्यवेदयत् ।
यन्मृषा चौरपातादि पित्रोः प्राग्वर्णितं तया ॥ ४० ॥
ततस्तया समं तत्र निर्भयः श्वाशुरे गृहे ।
प्रविष्टः श्वशुराभ्यां स हर्षाद्दृष्ट्वाभ्यनन्द्यत ॥ ४१ ॥
दिष्ट्या जीवन्नयं मुक्तश्चौरैरिति महोत्सवः ।
तेन तच्छ्वशुरेणाथ चक्रे मिलितबन्धुना ॥ ४२ ॥
ततः स धनदत्तोऽत्र भुञ्जानः श्वाशुरीं श्रियम् ।
रत्नावल्या तया साकमासीत्पत्न्या यथासुखम् ॥ ४३ ॥
एकदा तत्र रात्रौ च स नृशंसश्चकार यत् ।
कथोपरोधतः शान्तमवाच्यमपि कथ्यते ॥ ४४ ॥
हत्वाङ्कसुप्तां भार्यां तां तदाभरणसंचयम् ।
अपहृत्य ततः प्रायात्स स्वदेशमलक्षितः ॥ ४५ ॥
ईदृशाः पुरुषाः पापा इति शारिकयोदिते ।
त्वमिदानीं वदेत्याह राजपुत्रस्तदा शुकम् ॥ ४६ ॥
ततोऽजगाद स शुको देव दुःसहसाहसाः ।
स्त्रियो दुश्चरिताः पापास्तथा च श्रूयतां कथा ॥ ४७ ॥
अस्ति हर्षवती नाम नगरी तत्र चाभवत् ।
अग्रणीर्धर्मदत्ताख्यो वसुकोटीश्वरो वणिक् ॥ ४८ ॥

वसुदत्ताभिधाना च रूपे ऽनन्यसमा सुता ।
बभूव तस्य वणिजः प्राणेभ्यो ऽप्यधिकप्रिया ॥ ४९ ॥
सा च तेन समानाय धनयौवनशालिने ।
दत्ता वराङ्गनानेत्रचकोरामृतरश्मये ॥ ५० ॥
नाम्ना समुद्रदत्ताय वणिक्पुत्राय साधवे ।
नगर्यामार्यजुष्टायां ताम्रलिप्त्यां निवासिने ॥ ५१ ॥
कदा चित्सा स्वदेशस्थे पत्यौ स्वस्य पितुर्गृहे ।
स्थिता वणिक्सुता दूरात्क चित्पुरुषमैक्षत ॥ ५२ ॥
तं युवानं सुकान्तं सा चपला मारमोहिता ।
गुप्तं सखीमुखानीतं भेजे प्रच्छन्नकामुकम् ॥ ५३ ॥
ततः प्रभृति तेनैव सह तत्र तदा रहः ।
रात्रौ रात्रावरंस्तासौ तदेकासक्तमानसा ॥ ५४ ॥
एकदा च स कौमारः पतिस्तस्याः स्वदेशतः ।
आजगामात्र तत्पित्रोः प्रमोद इव मूर्तिमान् ॥ ५५ ॥
सोत्सवे च दिने तस्मिन्सा नक्तं कृतमण्डना ।
मात्रानुप्रेषिता भेजे शय्यास्थापि न तं पतिम् ॥ ५६ ॥
प्रार्थिता तेन चालीकसुप्तं चक्रे ऽन्यमानसा ।
पानमत्तो ऽध्वखिन्नश्च सो ऽपि जह्रे ऽथ निद्रया ॥ ५७ ॥
तावच्च सुप्ते सर्वस्मिन्भुक्तपीते जने शनैः ।
संधिं भित्त्वा विवेशात्र चौरो वासगृहान्तरे ॥ ५८ ॥
तत्कालं तमपश्यन्ती साप्युत्थाय वणिक्सुता ।
स्वजारकृतसंकेता निभृतं निरगात्ततः ॥ ५९ ॥
तदालोक्य स चौरो ऽत्र विघ्नितेच्छो व्यचिन्तयत् ।
येषामर्थे प्रविष्टो ऽहं तैरेवाभरणैर्वृता ॥ ६० ॥
निशीथे निर्गतैषा तद्वीक्षे ऽहं सा क्व गच्छति ।
इत्यालक्ष्य निर्गत्य स चौरस्तां वणिक्सुताम् ॥ ६१ ॥
वसुदत्तामनुययौ दत्तदृष्टिरलक्षितः ।
सापि पुष्पादिहस्तैकससंकेतसखीयुता ॥ ६२ ॥
गत्वा बाह्यं प्रविष्टाभूदुद्यानं नातिदूरगम् ।
तत्रापश्यच्च तं वृक्षे लम्बमानं स्वकामुकम् ॥ ६३ ॥
संकेतकागतं रात्रौ लब्ध्वा नगररक्षिभिः ।
उद्बन्धितं चौरबुद्ध्या पाशकण्ठं मृतं स्थितम् ॥ ६४ ॥

ततः सा विह्वलोद्भ्रान्ता हा हतास्मीति वादिनी ।
पपात भूमौ क्षपणं विलपन्ती रुरोद च ॥ ६५ ॥
अथ तार्याय वृत्तान्तं गतासुं निजकामुकम् ।
उपवेश्याङ्गरागेण पुष्पैश्चालंचकार सा ॥ ६६ ॥
समालिङ्ग्य च निःसञ्ज्ञं रागशोकान्धमानसा ।
उन्नमय्य मुखं यावत्तस्यार्ता परिचुम्बति ॥ ६७ ॥
तावच्च तस्याः सहसा निर्जीवं परपूरुषं ।
वेतालानुप्रविष्टः सन्दन्तैश्चिच्छेद नासिकाम् ॥ ६८ ॥
तेन सा विह्वला तस्मात्सव्यथापसृताप्यहो ।
किं स्विज्जीवेदिति हृता पुनरेत्य तमैक्षत ॥ ६९ ॥
दृष्ट्वा च वीतवेतालं निश्चेष्टं मृतमेव तम् ।
सा भीता परिभूता च चचाल रुदती शनैः ॥ ७० ॥
तावच्छन्नं स्थितः सो ऽथ चौरः सर्वं व्यलोकयत् ।
अचिन्तयच्च किमिदं पापया कृतमेतया ॥ ७१ ॥
अहो बताशयः स्त्रीणां भीषणो घनतामसः ।
अन्धकूप इवागाधः पाताय गहनः परम् ॥ ७२ ॥
तदिदानीमियं किं नु कुर्यादिति विचिन्त्य सः ।
कौतुकाद्दूरतश्चौरो भूयो ऽप्यनुससार ताम् ॥ ७३ ॥
सापि गत्वा प्रविश्यैव तत्सुप्तस्थितभर्तृकम् ।
गृहं तदा स्वकं प्रोच्चैः प्ररुदत्येवमब्रवीत् ॥ ७४ ॥
परित्रायध्वमेतेन मम दुष्टेन नासिका ।
छिन्ना निरपराधाया भर्तृरूपेण शत्रुणा ॥ ७५ ॥
श्रुत्वैतं मुहुराक्रन्दं तस्याः सर्वं ससम्भ्रमम् ।
उदतिष्ठन्प्रबुध्यास्य पतिः परिजनः पिता ॥ ७६ ॥
एत्याथ तत्पिता दृष्ट्वा तामार्द्रच्छिन्ननासिकाम् ।
क्रुद्धस्तं बन्धयामास भार्याद्रोहीति तत्पतिम् ॥ ७७ ॥
स तु नैवाब्रवीत्किंचिद्बध्यमानो ऽपि मूकवत् ।
विपर्यस्तेषु शृण्वत्सु सर्वेषु श्वशुरादिषु ॥ ७८ ॥
ततो ज्ञात्वैव तच्चौरे तस्मिन्नपसृते लघु ।
कोलाहलेन तस्यां च व्यतीतायां क्रमान्निशि ॥ ७९ ॥
स निन्ये वणिजा तेन श्वशुरेण वणिक्सुतः ।
राजान्तिकं तया साकं भार्यया छिन्ननासया ॥ ८० ॥

राजा च ज्ञातविज्ञप्तिः सदारद्रोह्यसाविति ।
तस्मादिभ्यद्वणिक्सूनोर्वधं व्यकृत तद्रुचा ॥ ८१ ॥
ततो वध्यभुवं तस्मिन्नीयमाने सडिण्डिमम् ।
उपागम्य स चौरो ऽत्र बभाषे राजपूरुषान् ॥ ८२ ॥
निष्कारणं न वध्यो ऽयं यथावृत्तं तु वेद्म्यहम् ।
मां प्रापयत राजाग्रं यावत्सर्वं वदाम्यदः ॥ ८३ ॥
इत्यूचिवान्स नीतस्तैर्नृपस्याग्रं कृताभयः ।
आ मूलाद्राज्ञि वृत्तान्तं चौरः सर्वं न्यवेदयत् ॥ ८४ ॥
अब्रवीच्च न चेद्देव मद्वाचि प्रत्ययस्तव ।
तत्सा नासा मुखे तस्य शवस्याद्यापि वीक्ष्यताम् ॥ ८५ ॥
तच्छ्रुत्वा वीक्षितुं भृत्यान्प्रेष्य सत्यमवेत्य तत् ।
स राजा तं वणिक्पुत्रं मुक्तवान्वधनिग्रहात् ॥ ८६ ॥
तां च कर्णावपि च्छित्त्वा दुष्टां देशान्निरस्तवान् ।
तद्भार्यां श्वशुरं चास्य तं सर्वस्वमदण्डयत् ॥ ८७ ॥
चौरं च तं पुराध्यक्षं तुष्टश्चक्रे स भूपतिः ।
एवं स्त्रियो भवन्त्येव निसर्गविषमाः शठाः ॥ ८८ ॥
इत्युक्तवानिव शुको भूत्वा चित्ररथाभिधः ।
क्षीणेन्द्रशापो गन्धर्वो दिव्यरूपो दिवं ययौ ॥ ८९ ॥
शारिका सापि तत्कालं भूत्वा स्वःस्त्री तिलोत्तमा ।
तथैव क्षीणतच्छापा जगाम सहसा दिवम् ॥ ९० ॥
विवादश्चाप्यनिर्णीतः सभायां सो ऽभवत्तयोः ।
इत्याख्याय कथां भूयस्तं वेतालो ऽब्रवीन्नृपम् ॥ ९१ ॥
तद्भवान्वक्तु किं पापाः पुरुषाः किमुत स्त्रियः ।
अजल्पतो जानतस्ते शिरो यास्यति खण्डशः ॥ ९२ ॥

एतन्निशम्य वचनं वेतालस्यांसवर्तिनस्तस्य ।
स जगाद भूपतिस्तं योगीश्वर योषितः पापाः ॥ ९३ ॥
पुरुषः को ऽपि हि तादृक्क्वापि कदाचिद्भवेद्दुराचारः ।
प्रायः सर्वत्र सदा स्त्रियस्तु तादृग्विधा एव ॥ ९४ ॥
इत्युक्तवतो नृपतेः प्राग्वत्स्कन्धात्स तस्य वेतालः ।
नष्टो ऽभूत्स च राजा जग्राह पुनस्तदानयनयत्नम् ॥ ९५ ॥

---

## 5. Neunte Erzählung (83, 1—39).

ततो गत्वा पुनस्तस्माच्छिंशपापादपान्नृपः ।
स त्रिविक्रमसेनस्तं स्कन्धे वेतालमग्रहीत् ॥ १ ॥
प्रस्थितश्च ततस्तेन वेतालेनाभ्यधायि सः ।
राजन्क्व राज्यं क्वैतस्मिन्श्मशाने भ्रमणं निशि ॥ २ ॥
किमेतन्नेक्षसे भूतसंकुलं रात्रिभीषणम् ।
चिताधूमैरिव ध्वान्तैर्निरुद्धं पितृकाननम् ॥ ३ ॥
कष्टं कीदृग्ग्रहो ऽयं ते भिक्षोस्तस्यानुरोधतः ।
तदिमं शृणु तावन्मे प्रश्नं मार्गविनोदनम् ॥ ४ ॥
अवन्तिष्वस्ति नगरी युगादौ देवनिर्मिता ।
शैवी तनुरिवोद्दामा भोगभूतिविभूषिता ॥ ५ ॥
पद्मावती भोगवती या हिरण्यवतीति च ।
कृतादिषु त्रिषु ख्याता कलावुज्जयिनीति च ॥ ६ ॥
तस्यां च वीरदेवाख्यो राजाभूद्भूभृतां वरः ।
तस्य पद्मरतिर्नाम महादेवी बभूव च ॥ ७ ॥
सो ऽथ राजा तया साकं गत्वा मन्दाकिनीतटे ।
हरमाराधयामास तपसा पुत्रकाम्यया ॥ ८ ॥
चिरं तपस्थितश्चात्र परितुष्टेश्वरोदिताम् ।
कृतस्नानार्चनविधिः शुश्राविमां गिरं दिवः ॥ ९ ॥
राजन्नुत्पत्स्यते पुत्रः शूरस्तव कुलोद्वहः ।
कन्या चानन्यसामान्यलावण्यन्यक्कृताप्सराः ॥ १० ॥
श्रुत्वैतां नाभसीं वाणीं सिद्धाभीष्टः स भूपतिः ।
वीरदेवः स्वनगरीमाययौ महिषीसखः ॥ ११ ॥
तत्रास्य शूरदेवाख्ये जाते प्रथममात्मजे ।
तस्यां पद्मरतौ देव्यां क्रमादजनि कन्यका ॥ १२ ॥
अनङ्गस्यापि रूपेण रतिमुत्पादयेदियम् ।
इत्यनङ्गरतिर्नाम्ना पित्रा तेन व्यधायि सा ॥ १३ ॥
वृद्धिं गतायास्तस्याश्च स पिता सदृशं वरम् ।
प्रेप्सुरानाययत्पृथ्व्याः पटेषु लिखितान्नृपान् ॥ १४ ॥
तेष्वेको ऽपि न यत्तस्य तत्तुल्यः प्रत्यभासत ।
तेन राजा स वात्सल्यात्तां सुतां प्रत्यभाषत ॥ १५ ॥
अहं तावन्न पश्यामि सदृशं पुत्रि ते वरम् ।
तत्कुरुष्व नृपान्सर्वान्मेलयित्वा स्वयंवरम् ॥ १६ ॥

एतत्पितृवचः श्रुत्वा राजपुत्री जगाद सा ।
तात स्वयंवरं कर्तुं ह्रेपणान्नाहमुत्सहे ॥ १७ ॥
किं त्वेकं वेत्ति यः पूर्णं विज्ञानं स्वाकृतिर्युवा ।
तस्मै त्वयाहं दातव्या नार्यो ऽन्येनाधिकेन मे ॥ १८ ॥
इत्यनङ्गरतिस्तस्याः श्रुत्वा स्वदुहितुर्वचः ।
तादृशं तद्वरं यावदन्विष्यति स भूपतिः ॥ १९ ॥
तावत्तल्लोकतो बुद्ध्वा चत्वारस्तमुपाययुः ।
वीरा विज्ञानिनो भव्याः पुरुषा दक्षिणापथात् ॥ २० ॥
ते राज्ञा पूजितास्तस्मै स्वं स्वं विज्ञानमेकशः ।
शशंसुः संनिधौ तस्या राजपुत्र्यास्तदर्थिनः ॥ २१ ॥
एको जगाद शूद्रो ऽहमाख्यया पञ्चपुट्टिकः ।
पञ्चाग्र्यवस्त्रयुग्मानि करोम्येको ऽहमन्वहम् ॥ २२ ॥
तेभ्य एकं प्रयच्छामि देवायैकं द्विजन्मने ।
एकं च परिगृह्णामि वाससो ऽऽत्मनः कृते ॥ २३ ॥
एकं ददामि भार्यायै यदि सा भवतीह मे ।
एकं विक्रीय चाहारपानादि विदधाम्यहम् ॥ २४ ॥
एवंविज्ञानिने ऽनङ्गरतिर्मे दीयतामिति ।
इत्येकेनोदिते तेन द्वितीयः पुरुषो ऽब्रवीत् ॥ २५ ॥
भाषाज्ञो नाम वैश्यो ऽहं सर्वेषां मृगपक्षिणाम् ।
रुतं वेद्मि तदेषा मे राजपुत्री प्रदीयताम् ॥ २६ ॥
एवमुक्ते द्वितीयेन तृतीयः प्रोक्तवांस्ततः ।
अहं खड्गधरो नाम दोःशाली क्षत्रियो नृप ॥ २७ ॥
न खड्गविद्याविज्ञाने प्रतिमल्लो ऽस्ति मे क्षितौ ।
तदेषा तनया राजंस्त्वया मह्यं वितीर्यताम् ॥ २८ ॥
इत्युक्ते तु तृतीयेन चतुर्थ इदमभ्यधात् ।
विप्रो ऽहं जीवदत्ताख्यो विज्ञानं च ममेदृशम् ॥ २९ ॥
जन्तून्मृतानप्यानीय दर्शयाम्याशु जीवतः ।
तद्वीरचर्यासिद्धं मां पतिमेषा प्रपद्यताम् ॥ ३० ॥
एवंवदत्सु तान्पश्यन्दिव्यवेषाकृतीन्नृपः ।
वीरदेवः सुतायुक्तो दोलारूढ इवाभवत् ॥ ३१ ॥
इत्याख्याय कथामेतां वेतालः पृष्टवान्नृपम् ।
स त्रिविक्रमसेनं तं दत्तपूर्वोक्तशापभीः ॥ ३२ ॥

तद्भवान्वक्तु तावन्मे कस्मै देया विशां पते ।
तेषां चतुर्णां मध्यात्सा कन्यानङ्गरतिर्भवेत् ॥ ३३ ॥
एतच्छ्रुत्वा स राजा तं वेतालं प्रत्यभाषत ।
मौनं त्याजयति प्रायः कालक्षेपाय मां भवान् ॥ ३४ ॥
अन्यथा गहनः को ऽयं प्रश्नो योगेश्वरोच्यताम् ।
शूद्राय हि कुविन्दाय क्षत्रिया दीयते कथम् ॥ ३५ ॥
वैश्यायापि कथं देया क्षत्रिया यच्च तद्गतम् ।
मृगादिभाषाविज्ञानं कार्ये तत्कोपयुज्यते ॥ ३६ ॥
यो ऽपि विप्रस्तृतीयो ऽत्र तेनापि पतितेन किम् ।
स्वकर्मप्रच्युतेनेन्द्रजालिना वीरमानिना ॥ ३७ ॥
तस्मात्तस्मै चतुर्थाय क्षत्रियाय समाय सा ।
देया खड्गधरायैव स्वविद्यावीर्यशालिने ॥ ३८ ॥
एतत्तस्य वचो निशम्य नृपतेरसस्थलात्पूर्वव-
द्वेतालः स जगाम योगवलतः स्वस्थानमेवाशु तत् ।
भूपालो ऽपि स तं तथैव पुनरप्यानेतुमन्वग्ययाः-
दुत्साहैकघने हि वीरहृदये नाप्नोति खेदो ऽन्तरम् ॥ ३९ ॥

---

## 6 Vierundzwanzigste Erzahlung (98, 1—75)

ततस्तां तिमिरश्यामां चिताग्निज्वलितेक्षणाम् ।
श्मशाने भीषणे तस्मिन्वीरो रजनिराक्षसीम् ॥ १ ॥
घोरामगणयन्राजा गत्वा तां शिंशपां पुनः ।
स त्रिविक्रमसेनस्तु तस्या वेतालमाददे ॥ २ ॥
स्कन्धे कृत्वा च तं यावत्प्रक्रामति स पूर्ववत् ।
तावच्छ्रूय स वेतालो नरदेवमुवाच तम् ॥ ३ ॥
भो राजन्नहमुद्विग्नो न पुनस्त्वं गतागतैः ।
तदेकं मे महाप्रश्नमिमं कथयतः शृणु ॥ ४ ॥
आसीन्माण्डलिकः को ऽपि नृपतिर्दक्षिणापथे ।
धर्माभिधानो धौरेयः साधूनां वङ्गगोत्रजः ॥ ५ ॥
तस्य चन्द्रवती नाम भार्या मालवदेशजा ।
अभून्महाकुलोत्पन्ना वरस्त्रीमौलिमालिका ॥ ६ ॥
तस्यां च तस्य भार्यायां भूपतेरुदपद्यत ।
एकैव लावण्यवती नामान्वर्थाभिधा सुता ॥ ७ ॥

प्रदेयाया च तस्या स सुताया धर्मभूपति ।
उन्मूलितो ऽभून्मिलितैर्दायादै राष्ट्रभेदिभि ॥ ८ ॥
तत पलाय्य निरगात्स देशाद्भार्यया सह ।
दुहित्रा च तया रात्रावात्तसद्रत्नसचय ॥ ९ ॥
मालव प्रति च स्वैर प्रस्थित श्वशुरास्पदम् ।
विन्ध्याटवी तया रात्र्या प्राप भार्यासुतासख ॥ १० ॥
तस्या प्रविष्टस्योदश्रुरिवावश्यायशीकरै ।
निशानुयाता दत्त्वेव ययौ तस्य महीक्षित ॥ ११ ॥
आरुरोहाथ पूर्वाद्रिमुत्क्षिप्ताग्रकरो रवि ।
मा गाश्चौराटवीमेतामिति त वारयन्निव ॥ १२ ॥
ततो ऽत्र ससुताजानि चताङ्घ्रि कुशकण्टकै ।
पदाति स नृपो गच्छन्भिल्लाना प्राप पल्लिकाम् ॥ १३ ॥
परेषा प्राणसर्वस्वहारिभि पुम्भिरावृताम् ।
वर्जिता धार्मिकैर्दुर्गा कृतान्तनगरीमिव ॥ १४ ॥
तत्र दृष्ट्वैव त दूरात्सवस्त्राभरण नृपम् ।
मोषितु बहवो ऽधावञ्छबरा विविधायुधा ॥ १५ ॥
तान्विलोक्य सुताभार्ये राजा धर्मो जगाद स ।
पुरा स्पृशन्ति वा म्लेच्छास्तदितो विशत वनम् ॥ १६ ॥
इति राज्ञोदिता राज्ञी वनमध्य विवेश सा ।
लावण्यवत्या सुतया साक चन्द्रवती भयात् ॥ १७ ॥
राजाप्यभिमुखायातान्खड्गचर्मधरो ऽत्र स ।
अवधीत्तान्बहूञ्छूर शबराञ्छरवर्षिण ॥ १८ ॥
ततस्तेनाखिला पल्ली पत्याज्ञप्ता निपत्य तम् ।
प्रहारचतचर्माणमवधीन्नृपमेककम् ॥ १९ ॥
गृहीताभरणे याते दस्युसैन्ये विलोक्य तम् ।
भर्तार निहत दूराद्वनगुल्मान्तरस्थिता ॥ २० ॥
राज्ञी चन्द्रवती सात्र दुहित्रा सह विह्वला ।
पलायमाना गहन दूरमन्यद्गाद्वनम् ॥ २१ ॥
तत्र मध्याह्नतापार्तास्विव मूलानि शाखिनाम् ।
छायास्वपि प्रविष्टासु शिशिराणि सहाध्वगै ॥ २२ ॥
एकदेशे ऽब्जसरसस्तीरे ऽशोकतरोस्तले ।
शोकार्ता रुदती श्रान्ता ससुता समुपाविशत् ॥ २३ ॥

तावत्तद्वनमभ्यर्णनिवासी मृगयाकृते ।
महामनुष्यः को ऽप्यागादश्वारूढः सपुत्रकः ॥ २४ ॥
स चण्डसिंहनामा तं पुत्रं सिंहपराक्रमम् ।
उवाच दृष्ट्वा तयोः पांसूत्थे पादपद्धती ॥ २५ ॥
एते सुरेखे सुभगे अनुसृत्याप्नुवो यदि ।
स्त्रियौ ते तत्तयोरेकां स्वीकुरुष्व यथारुचि ॥ २६ ॥
इत्युक्तवन्तं तं स्माह पुत्रः सिंहपराक्रमः ।
यस्याः सूक्ष्माविमौ पादौ सा भार्या प्रतिभाति मे ॥ २७ ॥
सा हि स्वल्पवया नूनं जाने समुचिता मम ।
बृहत्पादा तु योग्येयमेतज्ज्येष्ठवयास्तव ॥ २८ ॥
इति सूनोर्वचः श्रुत्वा चण्डसिंहो जगाद तम् ।
कैषा कथा भवन्माता प्रत्यग्रं हि गता दिवम् ॥ २९ ॥
तादृशे सुकलत्रे च गते कान्यत्र वासना ।
तच्छ्रुत्वा सो ऽपि पुत्रस्तं चण्डसिंहमभाषत ॥ ३० ॥
तात नैवमभार्यं हि शून्यं गृहपतेर्गृहम् ।
अन्यच्च मूलदेवोक्ता गाथा किं न श्रुता त्वया ॥ ३१ ॥
यत्र घनस्तनजघना नास्ते मार्गावलोकिनी कान्ता ।
अजडः कस्तद्निगडं प्रविशति गृहसंज्ञकं दुर्गम् ॥ ३२ ॥
तज्जीवितेन मे तात शापितो ऽसि न तां यदि ।
द्वितीयां मदभीष्टायां भार्यार्थे स्वीकरिष्यसि ॥ ३३ ।
एतत्पुत्रवचः श्रुत्वा प्रतिपद्य च तत्सखः ।
स चण्डसिंहो ऽनुसरन्पदपङ्क्तिं शनैर्ययौ ॥ ३४ ॥
प्राप्य तच्च सरःस्थानं मुक्ताहारौघमण्डिताम् ।
श्यामां चन्द्रवतीं राज्ञीं तां ददर्शावभासिताम् ॥ ३५ ॥
लावण्यवत्या सुतया ज्योत्स्नयेवावदातया ।
नैशीं द्यामिव मध्याह्ने तरुच्छायामुपाश्रिताम् ॥ ३६ ॥
उपाययौ स पुत्रेण साकं तां च सकौतुकम् ।
सापि दृष्ट्वा तमुत्तस्थौ वित्रस्ता चौरशङ्किनी ॥ ३७ ॥
अलं त्रासेन नाम्वेतौ चौरौ सौम्याकृती इमौ ।
सुवेषौ कौ चिदाखेटकृते नूनमिहागतौ ॥ ३८ ॥
इत्युक्ता सुतया राज्ञी यावद्दोलायते ऽत्र सा ।
तावदश्वावतीर्णस्तं चण्डसिंहो ऽब्रवीदुभे ॥ ३९ ॥

किं संभ्रमेण वामावां प्रणयाद्द्रष्टुमागतौ ।
तद्विश्रम्य निराशङ्के वदतं के युवामिह ॥ ४० ॥
हरनेत्रानलज्वालादग्धमन्मथदुःखिते ।
रतिप्रीती इवारण्यमिदमेवमुपागते ॥ ४१ ॥
प्रविष्टे स्थः कथं चेह बत निर्मानुषे वने ।
रत्नप्रासादवासार्हमिदं हि युवयोर्वपुः ॥ ४२ ॥
कथं वराङ्गनोत्सङ्गयोग्यौ कण्टकितामिमाम् ।
भुवं वां चरणौ भ्रान्ताविति नौ मनसि व्यथा ॥ ४३ ॥
एषा च चित्र युवयो पतन्ती धूलिरानने ।
वातोद्धूता हतच्छायमावयो कुरुते मुखम् ॥ ४४ ॥
भवत्योरेष चाङ्गे ऽस्मिन्विलसन्पुष्पपेशले ।
किरणोष्मा दहत्यस्मानुच्चण्डचण्डदीधितेः ॥ ४५ ॥
तद्ब्रूतमात्मवृत्तान्तं दूयते हृदयं हि नौ ।
द्रष्टुं न शक्नुवो ऽरण्ये स्थितिं व श्वापदावृते ॥ ४६ ॥
इत्युक्ते चण्डसिंहेन राज्ञी निश्वस्य सा शनै ।
लज्जाशोकाकुला तस्मै स्ववृत्तान्तमवर्णयत् ॥ ४७ ॥
ततो नि स्वामिका मत्वा तामाश्वास्य च सात्मजाम् ।
स्वीचक्रे मधुरैर्वाक्यैश्चण्डसिंहो ऽनुरञ्जयन् ॥ ४८ ॥
आरोप्य चाश्वयो पृष्ठं सपुत्रस्तां सपुत्रिकाम् ।
निनाय वित्तपपुरीं समृद्धां वसतिं निजाम् ॥ ४९ ॥
सापि जन्मान्तरगतेवावशाङ्गीचकार तम् ।
अनाथा कृच्छ्रपतिता विदेशे स्त्री करोति किम् ॥ ५० ॥
ततस्तां सूक्ष्मपादत्वाद्राज्ञीं सिंहपराक्रम ।
चण्डसिंहसुतश्चक्रे भार्यां चन्द्रवती व्यधात् ॥ ५१ ॥
तत्सुतां तां च लावण्यवतीं नृपतिकन्यकाम् ।
बृहत्त्वात्पादयोर्भार्यां चण्डसिंहश्चकार स ॥ ५२ ॥
प्राग्घि सूक्ष्मबृहत्पादमुद्रापङ्क्तिद्वयेक्षणात् ।
प्रतिपन्नं तथा ताभ्यां सत्यं कथातिवर्तते ॥ ५३ ॥
एवं पादविपर्यासात्ते पितापुत्रयोस्तयो ।
दुहितामातरौ भार्ये जाते श्वश्रूस्नुषे तदा ॥ ५४ ॥
कालेन च तयोस्ताभ्यां भर्तृभ्यां जज्ञिरे द्वयो ।
पुत्रा दुहितरश्चैव तेषां चान्ये ऽप्यथ क्रमात् ॥ ५५ ॥

इत्थं संभाष्य तौ चण्डसिंहसिंहपराक्रमौ ।
तस्थतुस्तच लावण्यवती चन्द्रवती च ते ॥ ५६ ॥
इति व्यावर्ण्य वेतालस्तदा पथि कथां निशि ।
स त्रिविक्रमसेनं तं पप्रच्छ नृपतिं पुनः ॥ ५७ ॥
तयोर्मातादुहित्रोर्ये पुत्रपित्रोस्तयोर्नृप ।
सकाशाज्जनवो जाता क्रमादुभयपत्नयो ॥ ५८ ॥
जातेद् ब्रूहि मे तेषामन्योऽन्यं के भवन्ति ते ।
पूर्वोक्तः सो ऽत्र शापस्ते जानानश्चेन्न वक्ष्यसि ॥ ५९ ॥
एतद्वेतालत श्रुत्वा विमृशन्बहुधापि स ।
नाज्ञासीत्तयदा राजा तूष्णीकः प्रययौ तदा ॥ ६० ॥
ततस्तदंसकूटस्थो वेतालो विहसन्हृदि ।
मृतपूरुषदेहान्तर्निविष्टः समचिन्तयत् ॥ ६१ ॥
नायं राजा महाप्रश्ने वेत्त्यस्मिन्दातुमुत्तरम् ।
तेन तूष्णीं व्रजत्येव हृष्टो ऽतिचतुरैः पदैः ॥ ६२ ॥
न च वञ्चयितुं शक्यः सत्त्वराशिरयं परः ।,
क्रीडन्भिक्षुः स चास्माभिरियतैव न शाम्यति ॥ ६३ ॥
तदयं वञ्चयित्वा तं दुरात्मानमुपायतः ।
तत्सिद्धिं भाविकल्याणे राजन्यस्मिन्निवेशये ॥ ६४ ॥
इत्यालोच्य स वेतालो नृपं तमवदत्तदा ।
राजन्कृष्णनिशाघोरे श्मशाने ऽस्मिन्गतागतैः ॥ ६५ ॥
एतैः क्लिष्टः सुखीव त्वं न विकल्पश्च को ऽपि ते ।
तदाश्चर्येण धैर्येण तुष्टो ऽहममुना तव ॥ ६६ ॥
शवमेतं नयेदानीं निर्गच्छाम्यमुतो ह्यहम् ।
इदं च शृणु यद्वच्मि हितं तव कुरुष्व च ॥ ६७ ॥
आनीतमेतद्भवता यस्यार्थे नृकलेवरम् ।
कुभिक्षुः सो ऽद्य मामस्मिन्समाहूयार्चयिष्यति ॥ ६८ ॥
उपहारीचिकीर्षुश्च त्वामेव स शठस्ततः ।
भूमौ प्रणाममष्टाभिरङ्गैः कुर्विति वक्ष्यति ॥ ६९ ॥
त्वं प्रागदर्शय तावन्मे करिष्ये ऽहं तथैव तत् ।
इति सो ऽपि महाराज वक्तव्यः श्रमणस्त्वया ॥ ७० ॥
ततो निपत्य भूमौ स प्रणामं यावदेव ते ।
दर्शयिष्यति तावत्त्वं छिन्द्यास्तस्यासिना शिरः ॥ ७१ ॥

ततो विद्याधरैश्वर्यसिद्धिर्या तस्य वाञ्छिता ।
ता त्व प्राप्स्यसि भुक्त्वेमा भुव तदुपहारत ॥ ७२ ॥
अन्यथा तु स भिक्षुस्त्वामुपहार विधास्यति ।
एतदर्थं कृतो विघ्नस्तवायेयच्चिर मया ॥ ७३ ॥
तत्सिद्धिरस्तु ते गच्छेत्युक्त्वा तस्यांसपृष्ठगात् ।
निर्गत्य स ययौ तस्माद्वेताल प्रेतकायत ॥ ७४ ॥

अथ स नरपतिस्त प्रीतवेतालवाक्याक्क्रमणमहितमेव क्षान्तिशील विचिन्त्य ।
वटविटपितल तत्तस्य पार्श्व प्रतस्थे मृतपुरुषशरीर तद्गृहीत्वा प्रहृष्ट ॥ ७५ ॥

---

## 7 Schluß (99, 1—41)

ततस्तस्यान्तिक भिक्षो क्षान्तिशीलस्य भूपति ।
स त्रिविक्रमसेनो ऽत्र प्राप स्कन्धे शव वहन् ॥ १ ॥
ददर्श त च श्रमण मार्गाभिमुखमेककम् ।
कृष्णपक्षक्षपारौद्रे श्मशाने तरुमूलगम् ॥ २ ॥
असृग्लिप्तस्थले गौरेणास्थिचूर्णेन निर्मिते ।
मण्डले दिक्षु विन्यस्तपूर्णशोणितकुम्भके ॥ ३ ॥
महातैलप्रदीपाढ्ये कृतपार्श्वस्थवह्निनि ।
सभृतोचितसभारे स्वेष्टदेवतपूजने ॥ ४ ॥
उपागाच्च स त राजा सो ऽपि भिक्षुर्विलोक्य तम् ।
आनीतमटक हर्षादुत्थायोवाच सस्तुवन् ॥ ५ ॥
दुष्करो मे महाराज विहितो ऽनुग्रहस्त्वया ।
त्वादृश क्व क्व चेष्टेय देशकालौ क्व चेदृशौ ॥ ६ ॥
निष्कम्पसत्यमेवाहुर्मुख्य त्वां कुलभूभृताम् ।
एवमात्मानपेक्षेण परार्थो येन साध्यते ॥ ७ ॥
एतदेव महत्त्व च महतामुच्यते बुधै ।
प्रतिपन्नादचलन प्राणानामत्यये ऽपि यत् ॥ ८ ॥
इति ब्रुवन्स सिद्धार्थमानो भिक्षुर्महीपते ।
तस्यावतारयामास स्कन्धात्तन्मृतक तदा ॥ ९ ॥
स्नपयित्वा समालभ्य बद्धमाल्य विधाय च ।
मृतक मण्डलस्यान्त स्थापयामास तस्य तत् ॥ १० ॥
भस्मोद्धूलितगात्रश्च केशयज्ञोपवीतभृत् ।
प्रावृतप्रेतवसनो भूत्वा ध्यानस्थित क्षणम् ॥ ११ ॥

तस्मिन्मन्त्रबलाहूत प्रवेश्य नृकलेवरे ।
तं वेतालवरं भिक्षुः पूजयामास स क्रमात् ॥ १२ ॥
ददौ तस्मै कपालार्घपात्रेणार्घं सुनिर्मलैः ।
नरदन्तैस्ततः पुष्पं सुगन्धि च विलेपनम् ॥ १३ ॥
दत्त्वा मानुषनेत्रैश्च धूपं मांसैर्बलिं तथा ।
समाप्य पूजां राजानं तमुवाच स पार्श्वगम् ॥ १४ ॥
राजन्निहास्य मन्त्राधिराजस्य कृतसंनिधेः ।
प्रणाममङ्गैरष्टाभिर्निपत्य कुरु भूतले ॥ १५ ॥
येनाभिप्रेतसिद्धिं ते दास्यत्येष वरप्रदः ।
श्रुत्वैतत्स्मृतवेतालवचा राजाब्रवीत्स तम् ॥ १६ ॥
नाहं जानामि तत्पूर्वं प्रदर्शयतु मे भवान् ।
ततस्तथैव तदहं करिष्ये भगवन्निति ॥ १७ ॥
ततो दर्शयितुं यावत्स भिक्षुः पतितो भुवि ।
तावत्खड्गप्रहारेण स राजास्य शिरो ऽच्छिनत् ॥ १८ ॥
आचकर्ष च हृत्पद्ममुदरादस्य पाटितात् ।
वेतालाय च तस्मै ते शिरोहृत्कमले ददौ ॥ १९ ॥
साधुवादे ऽभितो दत्ते हृष्टैर्भूतगणैस्ततः ।
तुष्टो ऽब्रवीत्स वेतालो नृपं तं नृकलेवरात् ॥ २० ॥
राजन्विद्याधरेन्द्रत्वं भिक्षोरासीद्यदीप्सितम् ।
तत्तावद्भूमिसाम्राज्यभोगान्ते ते भविष्यति ॥ २१ ॥
क्लेशितो ऽसि मया यत्तदभीष्टं वरं वृणु ।
इत्युक्तवन्तं वेतालं स राजा तमभाषत ॥ २२ ॥
त्वं चेत्प्रसन्नः को नाम न सिद्धो ऽभिमतो वरः ।
तथाप्यमोघवचनादिदं त्वत्तो ऽहमर्थये ॥ २३ ॥
आद्याः प्रश्नकथा एता नानाख्यानमनोरमाः ।
चतुर्विंशतिरेषा च पञ्चविंशी समाप्तिका ॥ २४ ॥
सर्वाः ख्याता भवन्त्वेताः पूजनीयाश्च भूतले ।
इति तेनार्थितो राज्ञा वेतालो निजगाद सः ॥ २५ ॥
एवमस्तु विशेषं च शृणु वक्ष्म्यत्र भूपते ।
याश्चतुर्विंशतिः पूर्वा या चैषैका समापिनी ॥ २६ ॥
कथावलीयं वेतालपञ्चविंशतिकाख्यया ।
ख्याता जगति पूज्या च शिवायैव भविष्यति ॥ २७ ॥

य श्लोकमाचमय्यस्त्रा पाठयिष्यति सादर ।
यो वा श्रोष्यति तौ सद्यो मुक्तपापौ भविष्यत ॥ २८ ॥
यक्षवेतालकुष्माण्डडाकिनीराक्षसादय ।
न तत्र प्रभविष्यन्ति यत्रैषा कीर्तयिष्यते ॥ २९ ॥
इत्युक्त्वा स ययौ तस्मान्निर्गत्य नृकलेवरात् ।
यथाभिरुचितं धाम वेतालो योगमायया ॥ ३० ॥
ततस्तत्र सुरै सार्धं राज्ञस्तस्य महेश्वर ।
साक्षादाविरभूत्तुष्ट प्रणतं चादिदेश तम् ॥ ३१ ॥
साधु वत्स हतो ऽद्यायं यत्त्वया कूटतापस ।
विद्याधरमहाचक्रवर्तिताहठकामुक ॥ ३२ ॥
त्वमादौ विक्रमादित्य सृष्टो ऽभू स्वांशतो मया ।
म्लेच्छरूपावतीर्णानामसुराणां प्रशान्तये ॥ ३३ ॥
अद्य चोद्दामदुर्वृत्तदमनाय मया पुन ।
त्वं त्रिविक्रमसेनाख्यो वीर सृष्टो ऽय भूपति ॥ ३४ ॥
अत सद्वीपपातालां स्थापयित्वा वशे महीम् ।
विद्याधराणामचिरादधिराजो भविष्यसि ॥ ३५ ॥
भुक्त्वा दिव्यांश्चिराद्भोगानुद्विग्न स्वेच्छयैव तान् ।
त्यक्त्वा मय्येव सायुज्यमन्ते यास्यस्यसंशयम् ॥ ३६ ॥
अपराजितनामानं खड्गं चैतं गृहाण मे ।
यस्य प्रसादात्सर्वं त्वं प्राप्स्यसे तद्यथोदितम् ॥ ३७ ॥
इत्युक्त्वा खड्गरत्नं तद्दत्त्वा तस्मै महीभृते ।
वाक्पुष्पाभ्यर्चितस्तेन देव शंभुस्तिरो दधे ॥ ३८ ॥
अथ दृष्ट्वैव समाप्तं कार्यमशेषं निशि प्रयातायाम् ।
प्रविवेश स त्रिविक्रमसेन स्वपुरं नृप प्रतिष्ठानम् ॥ ३९ ॥
तत्र क्रमादवगततरात्रिवृत्तचेष्टिताभिरभ्यर्चित प्रकृतिभिर्विततोत्सवाभि ।
स्नानप्रदानगिरिशार्चननृत्यगीतवाद्यादिभिस्तदखिलं स दिनं निनाय ॥ ४० ॥
अल्पैरेव च वासरै स नृपति शार्वस्य वीर्यादसे
सद्वीपां सरसातलां च बुभुजे निष्कण्टकां मेदिनीम् ।
संप्राप्याथ हराज्ञया सुमहतीं विद्याधराधीशतां
भुक्त्वा तां च चिरं जगाम भगवत्सायुज्यमन्ते कृती ॥ ४१ ॥

---

# XIII. Hitopadeśa.

## 1. Einleitung und Anfang des ersten Buches.

सिद्धिः साध्ये सतामस्तु प्रसादात्तस्य धूर्जटेः ।
जाह्नवीफेनलेखेव यन्मूर्ध्नि शशिनः कला ॥ १ ॥
श्रुतो हितोपदेशोऽयं पाटवं संस्कृतोक्तिषु ।
वाचां सर्वत्र वैचित्र्यं नीतिविद्यां ददाति च ॥ २ ॥
अजरामरवत्प्राज्ञो विद्यामर्थं च चिन्तयेत् ।
गृहीत इव केशेषु मृत्युना धर्ममाचरेत् ॥ ३ ॥
सर्वद्रव्येषु विद्यैव द्रव्यमाहुरनुत्तमम् ।
अहार्यत्वादनर्घ्यत्वादक्षयत्वाच्च सर्वदा ॥ ४ ॥
संगमयति विद्यैव नीचगापि नरं सरित् ।
समुद्रमिव दुर्धर्षं नृपं भाग्यमतः परम् ॥ ५ ॥
विद्या ददाति विनयं विनयाद्याति पात्रताम् ।
पात्रत्वाद्धनमाप्नोति धनाद्धर्मं ततः सुखम् ॥ ६ ॥
विद्या शस्त्रस्य शास्त्रस्य द्वे विद्ये प्रतिपत्तये ।
आद्या हास्याय वृद्धत्वे द्वितीयाद्रियते सदा ॥ ७ ॥
यन्नवे भाजने लग्नः संस्कारो नान्यथा भवेत् ।
कथाछलेन बालानां नीतिस्तदिह कथ्यते ॥ ८ ॥
मित्रलाभः सुहृद्भेदो विग्रहः संधिरेव च ।
पञ्चतन्त्रात्तथान्यस्माद्ग्रन्थादाकृष्य लिख्यते ॥ ९ ॥

अस्ति भागीरथीतीरे पाटलिपुत्रनामधेयं नगरम् । तत्र सर्वस्वामिगुणोपेतः सुदर्शनो नाम नरपतिरासीत् । स भूपतिरेकदा केनापि पठ्यमानं श्लोकद्वयं शुश्राव ।

अनेकसंशयोच्छेदि परोक्षार्थस्य दर्शकम् ।
सर्वस्य लोचनं शास्त्रं यस्य नास्त्यन्ध एव सः ॥ १० ॥
यौवनं धनसंपत्तिः प्रभुत्वमविवेकता ।
एकैकमप्यनर्थाय किमु यत्र चतुष्टयम् ॥ ११ ॥

इत्याकर्ण्यात्मनः पुत्राणामनधिगतशास्त्राणां नित्यमुन्मार्गगामिनां शास्त्राननुष्ठानेनोद्विग्नमनाः स राजा चिन्तयामास ।

कोऽर्थः पुत्रेण जातेन यो न विद्वान्न धार्मिकः ।
काणेन चक्षुषा किं वा चक्षुःपीडैव केवलम् ॥ १२ ॥

अजातमृतमूर्खाणां वरमाद्यौ न चान्तिमः ।
सकृद्दुःखकरावाद्यावन्तिमस्तु पदे पदे ॥ १३ ॥

किं च । स जातो येन जातेन याति वंशः समुन्नतिम् ।
परिवर्तिनि संसारे मृतः को वा न जायते ॥ १४ ॥

अन्यच्च । गुणिगणगणनारम्भे न पतति कठिनी सुसंभ्रमाद्यस्य ।
तेनाम्बा यदि सुतिनी वद वन्ध्या कीदृशी भवति ॥ १५ ॥

अपि च । दाने तपसि शौर्ये च यस्य न प्रथितं मनः ।
विद्यायामर्थलाभे च मातुरुच्चार एव सः ॥ १६ ॥

अपरं च । वरमेको गुणी पुत्रो न च मूर्खशतैरपि ।
एकश्चन्द्रस्तमो हन्ति न च तारागणैरपि ॥ १७ ॥

पुण्यतीर्थे कृतं येन तपः क्वाप्यतिदुष्करम् ।
तस्य पुत्रो भवेद्वश्यः समृद्धो धार्मिकः सुधीः ॥ १८ ॥

तथा चोक्तम् ।

अर्थागमो नित्यमरोगिता च प्रियश्च भार्या प्रियवादिनी च ।
वश्यश्च पुत्रोऽर्थकरी च विद्या षड्जीवलोकेषु सुखानि राजन् ॥ १९ ॥

को धन्यो बहुभिः पुत्रैः कुशूलापूरणाढकैः ।
वरमेकः कुलालम्बी यत्र विश्रूयते पिता ॥ २० ॥

ऋणकर्ता पिता शत्रुर्माता च व्यभिचारिणी ।
भार्या रूपवती शत्रुः पुत्रः शत्रुरपण्डितः ॥ २१ ॥

अनभ्यासे विषं विद्या अजीर्णे भोजनं विषम् ।
विषं सभा दरिद्रस्य वृद्धस्य तरुणी विषम् ॥ २२ ॥

यस्य तस्य प्रसूतोऽपि गुणवान्पूज्यते नरः ।
धनुर्वंशविशुद्धोऽपि निर्गुणः किं करिष्यति ॥ २३ ॥

हाहा पुत्रक नाधीतं सुगतैतासु रात्रिषु ।
तेन त्वं विदुषां मध्ये पङ्के गौरिव सीदसि ॥ २४ ॥

तत्कथमिदानीमेते मम पुत्रा गुणवन्तः क्रियन्ताम् ।

आहारनिद्राभयमैथुनं च सामान्यमेतत्पशुभिर्नराणाम् ।
धर्मो हि तेषामधिको विशेषो धर्मेण हीनाः पशुभिः समानाः ॥ २५ ॥

यतः । धर्मार्थकाममोक्षाणां यस्यैकोऽपि न विद्यते ।
अजागलस्तनस्येव तस्य जन्म निरर्थकम् ॥ २६ ॥

यच्चोच्यते । आयुः कर्म च वित्तं च विद्या निधनमेव च ।
पञ्चैतान्यपि सृज्यन्ते गर्भस्थस्यैव देहिनः ॥ २७ ॥

किं च । अवश्यंभाविनो भावा भवन्ति महतामपि ।
नग्नत्वं नीलकण्ठस्य महाहिशयनं हरेः ॥ २८ ॥

अपि च । यदभावि न तद्भावि भावि चेन्न तदन्यथा ।
इति चिन्ताविषघ्नो ऽयमगदः किं न पीयते ॥ २९ ॥

एतत्कार्याक्षमाणां केषां चिदालस्यवचनम् ।

न दैवमपि संचिन्त्य त्यजेदुद्योगमात्मनः ।
अनुद्योगेन तैलानि तिलेभ्यो नाप्तुमर्हति ॥ ३० ॥

अन्यच्च । उद्योगिनं पुरुषसिंहमुपैति लक्ष्मी-
र्दैवेन देयमिति कापुरुषा वदन्ति ।
दैवं निहत्य कुरु पौरुषमात्मशक्त्या
यत्ने कृते यदि न सिध्यति को ऽत्र दोषः ॥ ३१ ॥

यथा ह्येकेन चक्रेण न रथस्य गतिर्भवेत् ।
एवं पुरुषकारेण विना दैवं न सिध्यति ॥ ३२ ॥

तथा च । पूर्वजन्मकृतं कर्म तद्दैवमिति कथ्यते ।
तस्मात्पुरुषकारेण यत्नं कुर्यादतन्द्रितः ॥ ३३ ॥

यथा मृत्पिण्डतः कर्ता कुरुते यद्यदिच्छति ।
एवमात्मकृतं कर्म मानवः प्रतिपद्यते ॥ ३४ ॥

अपरं च । काकतालीयवत्प्राप्तं दृष्ट्वापि निधिमग्रतः ।
न स्वयं दैवमादत्ते पुरुषार्थमपेक्षते ॥ ३५ ॥

उद्यमेन हि सिध्यन्ति कार्याणि न मनोरथैः ।
न हि सुप्तस्य सिंहस्य प्रविशन्ति मुखे मृगाः ॥ ३६ ॥

मातृपितृकृताभ्यासो गुणितामेति बालकः ।
न गर्भच्युतिमात्रेण पुत्रो भवति पण्डितः ॥ ३७ ॥

तथा च । माता शत्रुः पिता वैरी येन बालो न पाठितः ।
न शोभते सभामध्ये हंसमध्ये बको यथा ॥ ३८ ॥

रूपयौवनसंपन्ना विशालकुलसंभवाः ।
विद्याहीना न शोभन्ते निर्गन्धा इव किंशुकाः ॥ ३९ ॥

मूर्खो ऽपि शोभते तावत्सभायां वस्त्रवेष्टितः ।
तावच्च शोभते मूर्खो यावत्किंचिन्न भाषते ॥ ४० ॥

एतच्चिन्तयित्वा स राजा पण्डितसभां कारितवान् । राजोवाच । भो भोः पण्डिताः श्रूयताम् । अस्ति कश्चिदेवंभूतो विद्वान्यो मम पुत्राणां नित्यमुन्मार्गगामिनामनधिगतशास्त्राणामिदानीं नीतिशास्त्रोपदेशेन पुनर्जन्म कारयितुं समर्थः ।

अथ कदा चिदवसन्नायां रात्रावस्ताचलचूडावलम्बिनि भगवति कुमुदिनीनायके चन्द्रमसि लघुपतनकनामा वायसः प्रबुद्धः कृतान्तमिव द्वितीयमायान्तं व्याधमपश्यत् । तमवलोक्याचिन्तयत् । अद्य प्रातरेवानिष्टदर्शनं जातम् । न जाने किमनभिमतं दर्शयिष्यति । इत्युक्त्वा तदनुसरणक्रमेण व्याकुलश्चलितः ।

शोकस्थानसहस्राणि भयस्थानशतानि च ।
दिवसे दिवसे मूढमाविशन्ति न पण्डितम् ॥ २ ॥

अन्यच्च । विषयिणामिदमवश्यं कर्तव्यम् ।

उत्थायोत्थाय बोद्धव्यं महद्भयमुपस्थितम् ।
मरणव्याधिशोकानां किमद्य निपतिष्यति ॥ ३ ॥

अथ तेन व्याधेन तण्डुलकणान्विकीर्य जालं विस्तीर्णम् । स च प्रच्छन्नो भूत्वा स्थितः । तस्मिन्नेव काले चित्रग्रीवनामा कपोतराजः सपरिवारो वियति विसर्पंस्तांस्तण्डुलकणानवलोकयामास । ततः कपोतराजस्तण्डुलकणलुब्धान्कपोतान्प्रत्याह । कुतो ऽत्र निर्जने वने तण्डुलकणानां संभवः । तन्निरूप्यतां तावत् । भद्रमिदं न पश्यामि । प्रायेणानेन तण्डुलकणलोभेनास्माभिरपि तथा भवितव्यम् ।

कङ्कणस्य तु लोभेन मग्नः पङ्के सुदुस्तरे ।
वृद्धव्याघ्रेण संप्राप्तः पथिकः स मृतो यथा ॥ ४ ॥

कपोता ऊचुः । कथमेतत् । सो ऽब्रवीत् । अहमेकदा दक्षिणारण्ये चरन्नपश्यम् । एको वृद्धव्याघ्रः स्नातः कुशहस्तः सरस्तीरे ब्रूते । भो भोः पान्थाः । इदं सुवर्णकङ्कणं गृह्यताम् । तद्वचनमाकर्ण्य भयात्को ऽपि तत्पार्श्वं न भजते । ततो लोभाकृष्टेन केन चित्पान्थेनालोचितम् । भाग्येनैतत्संभवति । किं त्वस्मिन्नात्मसंदेहे प्रवृत्तिर्न विधेया ।

यतः । अनिष्टादिष्टलाभे ऽपि न गतिर्जायते शुभा ।
यत्रास्ति विषसंसर्गो ऽमृतं तदपि मृत्यवे ॥ ५ ॥

किं तु सर्वत्रार्थार्जने प्रवृत्तिः संदेह एव । तथा चोक्तम् ।

न संशयमनारुह्य नरो भद्राणि पश्यति ।
संशयं पुनरारुह्य यदि जीवति पश्यति ॥ ६ ॥

तन्निरूपयामि तावत् । प्रकाशं ब्रूते । कुत्र तव कङ्कणम् । व्याघ्रो हस्तं प्रसार्य दर्शयति । पान्थो ऽवदत् । कथं मारात्मके त्वयि विश्वासः । व्याघ्र उवाच । शृणु रे पान्थ । प्रागेव यौवनदशायामतिदुर्वृत्तो ऽस्मि । अनेकगोमानुषाणां वधान्मे पुत्रा मृता दाराश्च वंशहीनश्चाहम् । ततः केन चिद्धार्मिकेणाहमादिष्टः । दानधर्मादिकं चरतु भवान् । तदुपदेशादिदानीमहं स्नानशीलो दाता वृद्धो गलितनखदन्तो न कथं विश्वासभूमिः ।

यतः । इज्याध्ययनदानानि तपः सत्यं धृतिः क्षमा ।
अलोभ इति मार्गोऽयं धर्मस्याष्टविधः स्मृतः ॥ ७ ॥
तत्र पूर्वश्चतुर्वर्गो दम्भार्थमपि सेव्यते ।
उत्तरस्तु चतुर्वर्गो महात्मन्येव तिष्ठति ॥ ८ ॥

मम चैतावाँल्लोभविरहो येन स्वहस्तस्थमपि सुवर्णकङ्कणं यस्मै कस्मैचिद्दातुमिच्छामि । तथापि व्याघ्रो मानुषं खादतीति लोकप्रवादो दुर्निवारः ।

यतः । गतानुगतिको लोकः कुट्टनीमुपदेशिनीम् ।
प्रमाणयति नो धर्मे यथा गोघ्नमपि द्विजम् ॥ ९ ॥

मयापि धर्मशास्त्राण्यधीतानि । शृणु ।

मरुस्थल्यां यथा वृष्टिः क्षुधार्ते भोजनं तथा ।
दरिद्रे दीयते दानं सफलं पाण्डुनन्दन ॥ १० ॥
प्राणा यथात्मनोऽभीष्टा भूतानामपि ते तथा ।
आत्मौपम्येन भूतेषु दयां कुर्वन्ति साधवः ॥ ११ ॥

अपरं च । प्रत्याख्याने च दाने च सुखदुःखे प्रियाप्रिये ।
आत्मौपम्येन पुरुषः प्रमाणमधिगच्छति ॥ १२ ॥

अन्यच्च । मातृवत्परदारेषु परद्रव्येषु लोष्टवत् ।
आत्मवत्सर्वभूतेषु यः पश्यति स पण्डितः ॥ १३ ॥

त्वं चातिदुर्गतः । तेन तत्तुभ्यं दातुं सयत्नोऽहम् ।

तथा चोक्तम् । दरिद्रान्भर कौन्तेय मा प्रयच्छेश्वरे धनम् ।
व्याधितस्यौषधं पथ्यं नीरुजस्य किमौषधैः ॥ १४ ॥

अन्यच्च । दातव्यमिति यद्दानं दीयतेऽनुपकारिणे ।
देशे काले च पात्रे च तद्दानं सात्त्विकं स्मृतम् ॥ १५ ॥

तदत्र सरसि स्नात्वा सुवर्णकङ्कणं गृहाण । ततो यावदसौ तद्वचःप्रतीतो लोभात्सरः स्नातुं प्रविशति तावन्महापङ्के निमग्नः पलायितुमक्षमः । पङ्के पतितं दृष्ट्वा व्याघ्रोऽवदत् । अहह महापङ्के पतितोऽसि । अतस्त्वामुत्थापयामि । इत्युक्त्वा शनैः शनैरुपगम्य तेन व्याघ्रेण धृतः स पान्थोऽचिन्तयत् ।

न धर्मशास्त्रं पठतीति कारणं न चापि वेदाध्ययनं दुरात्मनः ।
स्वभाव एवात्र तथातिरिच्यते यथा प्रकृत्या मधुरं गवां पयः ॥ १६ ॥

किं च । अवशेन्द्रियचित्तानां हस्तिस्नानमिव क्रिया ।
दुर्भगाभरणप्रायो ज्ञानं भारः क्रियां विना ॥ १७ ॥

तन्मया भद्रं न कृतं यदत्र मारात्मके विश्वासः कृतः ।

तथा चोक्तम् । नदीनां शस्त्रपाणीनां नखिनां शृङ्गिणां तथा ।
विश्वासो नैव कर्तव्यः स्त्रीषु राजकुलेषु च ॥ १८ ॥

अपरं च । सर्वस्य हि परीक्ष्यन्ते स्वभावा नेतरे गुणाः ।
अतीत्य हि गुणान्सर्वान्स्वभावो मूर्ध्नि वर्तते ॥ १९ ॥

अन्यच्च । स हि गगनविहारी कल्मषध्वंसकारी
दशशतकरधारी ज्योतिषां मध्यचारी ।
विधुरपि विधियोगाद्ग्रस्यते राहुणासौ
लिखितमपि ललाटे प्रोज्झितुं कः समर्थः ॥ २० ॥

इति चिन्तयन्नेवासौ व्याघ्रेण व्यापादितः खादितश्च । अतोऽहं ब्रवीमि कङ्कणस्य तु लोभेनेत्यादि । अतः सर्वथाविचारितं कर्म न कर्तव्यम् ।
यतः ।
सुजीर्णमन्नं सुविचक्षणः सुतः सुशासिता स्त्री नृपतिः सुसेवितः ।
सुचिन्त्य चोक्तं सुविचार्य यत्कृतं सुदीर्घकालेऽपि न याति विक्रियाम् ॥ २१ ॥

एतद्वचनं श्रुत्वा कश्चित्कपोतः सदर्पमाह । आः किमेवमुच्यते ।
वृद्धस्य वचनं ग्राह्यमापत्काले ह्युपस्थिते ।
सर्वत्रैव विचारेण भोजनेऽप्यप्रवर्तनम् ॥ २२ ॥

यतः । शङ्काभिः सर्वमाक्रान्तमन्नं पानं च भूतले ।
प्रवृत्तिः कुत्र कर्तव्या जीवितव्यं कथं नु वा ॥ २३ ॥

तथा चोक्तम् । ईर्ष्यी घृणी त्वसंतुष्टः क्रोधनो नित्यशङ्कितः ।
परभाग्योपजीवी च षडेते दुःखभागिनः ॥ २४ ॥

एतच्छ्रुत्वा सर्वे कपोतास्तत्रोपविष्टाः ।

यतः । सुमहान्त्यपि शास्त्राणि धारयन्तो बहुश्रुताः ।
छेत्तारः संशयानां च क्लिश्यन्ते लोभमोहिताः ॥ २५ ॥

अन्यच्च । लोभात्क्रोधः प्रभवति लोभात्कामः प्रजायते ।
लोभान्मोहश्च नाशश्च लोभः पापस्य कारणम् ॥ २६ ॥

अन्यच्च । असंभवं हेममृगस्य जन्म तथापि रामो लुलुभे मृगाय ।
प्रायः समापन्नविपत्तिकाले धियोऽपि पुंसां मलिना भवन्ति ॥ २७ ॥

अनन्तरं सर्वे जालबद्धा बभूवुः । ततो यस्य वचनात्तत्रावलम्बितास्तं सर्वे तिरस्कुर्वन्ति ।

यतः । न गणस्याग्रतो गच्छेत्सिद्धे कार्ये समं फलम् ।
यदि कार्यविपत्तिः स्यान्मुखरस्तत्र हन्यते ॥ २८ ॥

तस्य तिरस्कारं श्रुत्वा चित्रग्रीव उवाच । नायमस्य दोषः ।

यतः । आपदामापतन्तीनां हितोऽप्यायाति हेतुताम् ।
मातृजङ्घा हि वत्सस्य स्तम्भीभवति बन्धने ॥ २९ ॥

अन्यच्च । स बन्धुर्यो विपन्नानामापदुद्धरणक्षमः ।
न तु भीतपरित्राणवस्तूपालम्भपण्डितः ॥ ३० ॥

विपत्काले विस्मय एव कापुरुषलक्षणम् । तदत्र धैर्यमवलम्ब्य प्रतीकारश्चिन्त्यताम् ।

यतः । विपदि धैर्यमथाभ्युदये क्षमा सदसि वाक्पटुता युधि विक्रमः ।
यशसि चाभिरुचिर्व्यसनं श्रुतौ प्रकृतिसिद्धमिदं हि महात्मनाम् ॥ ३१ ॥
सम्पदि यस्य न हर्षो विपदि विषादो रणे च धीरत्वम् ।
तं भुवनत्रयतिलकं जनयति जननी सुतं विरलम् ॥ ३२ ॥

अन्यच्च । षड् दोषाः पुरुषेणेह हातव्या भूतिमिच्छता ।
निद्रा तन्द्रा भयं क्रोध आलस्यं दीर्घसूत्रता ॥ ३३ ॥

इदानीमप्येवं क्रियताम् । सर्वैरेकचित्तीभूय जालमादायोड्डीयताम् ।

यतः । अल्पानामपि वस्तूनां संहतिः कार्यसाधिका ।
तृणैर्गुणत्वमापन्नैर्बध्यन्ते मत्तदन्तिनः ॥ ३४ ॥
संहतिः श्रेयसी पुंसां स्वकुलैरल्पकैरपि ।
तुषेणापि परित्यक्ता न प्ररोहन्ति तण्डुलाः ॥ ३५ ॥

इति विचिन्त्य पक्षिणः सर्वे जालमादायोत्पतिताः । अनन्तरं स व्याधः सुदूराज्जालापहारकांस्तानवलोक्य पश्चाद्धावन्नचिन्तयत् ।

संहतास्तु हरन्तीमे मम जालं विहंगमाः ।
यदा तु निपतिष्यन्ति वशमेष्यन्ति मे तदा ॥ ३६ ॥

ततस्तेषु चक्षुर्विषयातिक्रान्तेषु पक्षिषु स व्याधो निवृत्तः । अथ लुब्धकं निवृत्तं दृष्ट्वा कपोता ऊचुः । किमिदानीं कर्तुमुचितम् । चित्रग्रीव उवाच ।

माता मित्रं पिता चेति स्वभावात्त्रितयं हितम् ।
कार्यकारणतश्चान्ये भवन्ति हितबुद्धयः ॥ ३७ ॥

तदस्माकं मित्रं हिरण्यको नाम मूषिकराजो गण्डकीतीरे चित्रवने निवसति । सो ऽस्माकं पाशांश्छेत्स्यति । इत्यालोच्य सर्वे हिरण्यकविवरसमीपं गताः । हिरण्यकश्च सर्वदापायशङ्कया शतद्वारं विवरं कृत्वा निवसति । ततो हिरण्यकः कपोतावपातभयाच्चकितस्तूष्णीं स्थितः । चित्रग्रीव उवाच । सखे हिरण्यक किमस्मान्न संभाषसे । ततो हिरण्यकस्तद्वचनं प्रत्यभिज्ञाय ससंभ्रमं बहिर्निःसृत्याब्रवीत् । आः पुण्यवानस्मि प्रियसुहृन्मे चित्रग्रीवः समायातः ।

यस्य मित्रेण संभाषो यस्य मित्रेण संस्थितिः ।
यस्य मित्रेण संलापस्ततो नास्तीह पुण्यवान् ॥ ३८ ॥

पाशबद्धाश्चैतान्दृष्ट्वा सविस्मयं चणं स्थित्वोवाच । सखे किमेतत् । चित्रग्रीव उवाच । सखे ऽस्माकं प्राक्तनजन्मकर्मणः फलमेतत् ।

यस्माच्च येन च यथा च यदा च यच्च
यावच्च यत्र च शुभाशुभमात्मकर्म ।
तस्माच्च तेन च तथा च तदा च तच्च
तावच्च तत्र च विधातृवशादुपैति ॥ ३९ ॥

रोगशोकपरीतापबन्धनव्यसनानि च ।
आत्मापराधवृक्षाणां फलान्येतानि देहिनाम् ॥ ४० ॥

एतच्छ्रुत्वा हिरण्यकश्चित्रग्रीवस्य बन्धनं छेत्तुं सत्वरमुपसर्पति । चित्रग्रीव उवाच । मित्र मा मैवम् । अस्मदाश्रितानामेषां तावत्पाशांश्छिन्द्धि तदा मम पाशं पश्चाच्छेत्स्यसि । हिरण्यको ऽप्याह । अहमल्पशक्तिर्दन्ताश्च मे कोमलास्तदेतेषां पाशांश्छेत्तुं कथं समर्थः । तद्यावन्मे दन्ता न त्रुट्यन्ति तावत्तव पाशं छिनद्मि । तदनन्तरमेतेषामपि बन्धनं यावच्छक्यं छेत्स्यामि । चित्रग्रीव उवाच । अस्त्वेवं तथापि यथाशक्ति बन्धनमेषां खण्डय । हिरण्यकेनोक्तम् । आत्मपरित्यागेन यदाश्रितानां परिरक्षणं तन्न नीतिवेदिनां संमतम् ।

यतः । आपदर्थे धनं रक्षेद्दारान्रक्षेद्धनैरपि ।
आत्मानं सततं रक्षेद्दारैरपि धनैरपि ॥ ४१ ॥

अन्यच्च । धर्मार्थकाममोक्षाणां प्राणाः संसिद्धिहेतवः ।
तान्निघ्नता किं न हतं रक्षता किं न रक्षितम् ॥ ४२ ॥

चित्रग्रीव उवाच । सखे नीतिस्तावदीदृश्येव किं त्वहमस्मदाश्रितानां दुःखं सोढुं सर्वथासमर्थस्तेनेदं ब्रवीमि ।

यतः । धनानि जीवितं चैव परार्थे प्राज्ञ उत्सृजेत् ।
सन्निमित्ते वरं त्यागो विनाशे नियते सति ॥ ४३ ॥

अयमपरश्चासाधारणो हेतुः ।

जातिद्रव्यबलानां च साम्यमेषां मया सह ।
मत्प्रभुत्वफलं ब्रूहि कदा किं तद्भविष्यति ॥ ४४ ॥

अन्यच्च । विना वर्तनमेवैते न त्यजन्ति ममान्तिकम् ।
तस्मे प्राणव्ययेनापि जीवयैतान्ममाश्रितान् ॥ ४५ ॥

किं च । मांसमूत्रपुरीषास्थिनिर्मिते च कलेवरे ।
विनश्वरे विहायास्थां यशः पालय मित्र मे ॥ ४६ ॥

अपरं च पश्य । यदि नित्यमनित्येन निर्मलं मलवाहिना ।
यशः कायेन लभ्येत तदा लब्धं भवेन्न किम् ॥ ४७ ॥

यत ।     शरीरस्य गुणाना च दूरमत्यन्तमन्तरम् ।
शरीर चणविध्वंसि कल्पान्तस्थायिनो गुणा ॥ ४८ ॥

इत्याकर्ण्य हिरण्यक प्रहृष्टमना पुलकित सन्नब्रवीत् । साधु मित्र साधु । अनेनाश्रितवात्सल्येन त्रैलोक्यस्यापि प्रभुत्व त्वयि युज्यते । एवमुक्त्वा तेन सर्वेषां बन्धनानि छिन्नानि । ततो हिरण्यक सर्वान्सादर संपूज्याह । सखे चित्रग्रीव सर्वथात्र जालबन्धनविधौ सति दोषमाशङ्क्यात्मन्यवज्ञा न कर्तव्या ।

यत ।     यो ऽधिकाद्योजनशतात्पश्यतीहामिष खग ।
स एव प्राप्तकालस्तु पाशबन्ध न पश्यति ॥ ४९ ॥

अपि च ।
शशिदिवाकरयोर्ग्रहपीडनं गजभुजगमयोरपि बन्धनम् ।
मतिमतां च विलोक्य दरिद्रतां विधिरहो बलवानिति मे मति ॥ ५० ॥

अन्यच्च ।     व्योमैकान्तविहारिणो ऽपि विहगा सम्प्राप्नुवन्त्यापद
बध्यन्ते निपुणैरगाधसलिलान्मत्स्या समुद्रादपि ।
दुर्नीत किमिहास्ति किं सुचरितं क स्थानलाभे गुण
कालो हि व्यसनप्रसारितकरो गृह्णाति दूरादपि ॥ ५१ ॥

इति प्रबोध्यातिथ्य कृत्वालिङ्ग्य च संप्रेषितश्चित्रग्रीव सपरिवारो यथेष्टदेशान्ययौ । हिरण्यको ऽपि स्वविवर प्रविष्ट ॥

यानि कानि च मित्राणि कर्तव्यानि शतानि च ।
पश्य मूषिकमित्रेण कपोता मुक्तबन्धना ॥ ५२ ॥

---

## 2 Die Gazelle, der Schakal und die Krähe (1, 3)

अस्ति मगधदेशे चम्पकवती नामारण्यानी । तस्यां चिरान्महता स्नेहेन मृगकाकौ निवसत । स च मृग स्वेच्छया भ्राम्यन्हृष्टाङ्ग केन चित्सृगालेनावलोकित । तं दृष्ट्वा सृगालो ऽचिन्तयत् । आ । कथमेतन्मांसं सुललित भक्षयामि । भवतु । विश्वास तावदुत्पादयामि । इत्यालोच्योपसृत्याब्रवीत् । मित्र । कुशल ते । मृगेणोक्तम् । कस्त्वम् । जम्बुको ब्रूते । क्षुद्रबुद्धिनामा जम्बुको ऽहम् । अत्रारण्ये मित्रबन्धुहीनो मृतवदेकाकी निवसामि । इदानीं भवन्त मित्रमासाद्य पुन सबन्धुर्जीवलोकं प्रविष्टो ऽस्मि । अधुना मया तवानुचरेण सर्वथा भवितव्यम् । मृगेणोक्तम् । एवमस्तु । ततो ऽस्तं गते सवितरि भगवति मरीचिमालिनि मृगस्य वासभूमिं प्रति मृगजम्बुकौ

गतौ । तत्र चम्पकवृक्षशाखायां सुबुद्धिनामा काको मृगस्य चिरमित्रं निवसति । तौ दृष्ट्वा काकोऽवदत् । सखे चित्राङ्ग । कोऽयं द्वितीयः । मृगो ब्रूते । जम्बुकोऽयमस्मत्सख्यमिच्छन्नागतः । काको ब्रूते । मित्र । अकस्मादागन्तुना सह विश्वासो नैव युक्तः । तन्न भद्रमाचरितम् । तथा चोक्तम् ।

अज्ञातकुलशीलस्य वासो देयो न कस्य चित् ।
मार्जारस्य हि दोषेण हतो गृध्रो जरद्गवः ॥

इत्याकर्ण्य स जम्बुकः सकोपमाह । मृगस्य प्रथमदर्शनदिने भवानप्यज्ञातकुलशील एवासीत् । तद्भवता सह कथमद्य यावदेतस्य स्नेहानुवृत्तिरुत्तरोत्तरं वर्धते ।

यत्र विद्वज्जनो नास्ति श्लाघ्यस्तत्राल्पधीरपि ।
निरस्तपादपे देशे एरण्डोऽपि द्रुमायते ॥

अन्यच्च । अयं निजः परो वेति गणना लघुचेतसाम् ।
उदारचरितानां तु वसुधैव कुटुम्बकम् ॥

यथा चायं मृगो मम बन्धुस्तथा भवानपि । मृगोऽब्रवीत् । किमनेनोत्तरोत्तरेण । सर्वैरेकत्र विश्रम्भालापैः सुखमनुभवद्भिः स्थीयताम् । यतः ।

न कश्चित्कस्य चिन्मित्रं न कश्चित्कस्य चिद्रिपुः ।
व्यवहारेण मित्राणि जायन्ते रिपवस्तथा ॥

काकेनोक्तम् । एवमस्तु । अथ प्रातः सर्वे यथाभिमतदेशं गताः । एकदा निभृतं शृगालो ब्रूते । सखे मृग । एतस्मिन्नेव वनैकदेशे सस्यपूर्णं क्षेत्रमस्ति । तदहं त्वां तत्र नीत्वा दर्शयामि । तथा कृते सति मृगः प्रत्यहं तत्र गत्वा सस्यं खादति । अथ क्षेत्रपतिना तद्दृष्ट्वा पाशास्तत्र नियोजिताः । अनन्तरं पुनरागतो मृगस्तत्र चरन्पाशैर्बद्धोऽचिन्तयत् । को मामितः कालपाशादिव व्याधपाशात्त्रातुं मित्रादन्यः समर्थः । अत्रान्तरे जम्बुकस्तत्रागत्योपस्थितोऽचिन्तयत् । फलितं तावदस्माकं कपटप्रबन्धेन । मनोरथसिद्धिरपि बाहुल्यान्मे भविष्यति । एतस्योत्कृत्यमानस्य मांसासृगनुलिप्तान्यस्थीनि मयावश्यं प्राप्तव्यानि । स च मृगस्तं दृष्ट्वोल्लसितो ब्रूते । सखे छिन्धि तावन्मम बन्धनम् । सत्वरं त्रायस्व माम् । यतः ।

आपत्सु मित्रं जानीयाद्युद्धे शूरमृणे शुचिम् ।
भार्यां क्षीणेषु वित्तेषु व्यसनेषु च बान्धवान् ॥

अपरं च । उत्सवे व्यसने चैव दुर्भिक्षे शत्रुसंकटे ।
राजद्वारे श्मशाने च यस्तिष्ठति स बान्धवः ॥

जम्बुकः पाशं मुहुर्मुहुर्विलोक्याचिन्तयत् । दृढबन्धनबद्धोऽस्ति तावदयं मृगः । ब्रूते च । स्नायुनिर्मिताः पाशाः । तदद्य भट्टारकवारे कथमेतान्दन्तैः स्पृशामि ।

मित्र यदि नान्यथा मन्यसे तदा प्रभाते यत्त्वयोच्यते तन्मया कर्तव्यम् । इत्युक्त्वा तत्समीप आत्मानमाच्छाद्य स्थित स । अनन्तर स काक प्रदोषकाले मृगमनागतमवलोक्येतस्ततो ऽन्विष्य तथाविध दृष्ट्वोवाच । सखे किमेतत् । मृगेणोक्तम् । अवधीरितसुहृद्वाक्यस्य फलमेतत् । तथा चोक्तम् ।

सुहृदा हितकामाना य शृणोति न भाषितम् ।
विपत्सनिहिता तस्य स नर शत्रुनन्दन ॥

काको ब्रूते । स शृगाल क्व । मृगेणोक्तम् । मन्मासार्थी तिष्ठत्यत्रैव । काको ब्रूते । मित्र । उक्तमेव मया पूर्वम् ।

अपराधो न मे ऽस्तीति नैतद्विश्वासकारणम् ।
विद्यते हि नृशसेभ्यो भय गुणवतामपि ॥
परोक्षे कार्यहन्तार प्रत्यक्षे प्रियवादिनम् ।
वर्जयेत्तादृश मित्र विषकुम्भ पयोमुखम् ॥

नि श्वस्य । अरे वञ्चक कि त्वया पापकर्मणा कृतम् । यत ।

सलापिताना मधुरैर्वचोभिर्मिथ्योपचारैश्च वशीकृतानाम् ।
आशावता श्रद्दधता च लोके किमर्थिना वञ्चयितव्यमस्ति ॥

अन्यच्च । उपकारिणि विश्रब्धे शुद्धमतौ य समाचरति पापम् ।
त जनमसत्यसध भगवति वसुधे कथ वहसि ॥
दुर्जनेन सम सख्य प्रीति चापि न कारयेत् ।
उष्णो दहति चाङ्गार शीत कृष्णायते करम् ॥

अथ वा स्थितिरिय दुर्जनानाम् ।

प्राक्पादयो पतति खादति पृष्ठमास कर्णे कल किमपि रौति शनैर्विचित्रम् ।
छिद्र निरूप्य सहसा प्रविशत्यशङ्क सर्व खलस्य चरित मशक करोति ॥

तथा च । दुर्जन प्रियवादी च नैतद्विश्वासकारणम् ।
मधु तिष्ठति जिह्वाग्रे हृदये तु हलाहलम् ॥

अथ प्रभाते स क्षेत्रपतिर्लगुडहस्तस्त प्रदेशमागच्छन्काकेनावलोकित । तमालोक्य काकेनोक्तम् । सखे मृग त्वमात्मान मृतवत्संदर्श्य वातेनोदर पूरयित्वा पादान्स्तब्धीकृत्य तिष्ठ । यदाह शब्द करोमि तदा त्व सत्वरमुत्थाय पलायिष्यसि । मृगस्तथैव काकवचनेन स्थित । तत क्षेत्रपतिना हर्षोत्फुल्ललोचनेनावलोकित । तथाविध मृगमवलोक्यासौ आ स्वयमृतो ऽयमित्युक्त्वा मृग बन्धनान्मोचयित्वा पाशान्सवरितु सयत्नो बभूव । तत किंचिद्दूरे ऽन्तरिते क्षेत्रपतौ स मृग काकस्य शब्द श्रुत्वा ससंभ्रम समुत्थाय पलायित । तमुद्दिश्य तेन क्षेत्रपतिना प्रकोपात्क्षिप्तलगुडेन शृगालो व्यापादित । तथा चोक्तम् ।

त्रिभिर्वर्षैस्त्रिभिर्मासैस्त्रिभिः पक्षैस्त्रिभिर्दिनैः ।
अत्युग्रपुण्यपापानामिहैव फलमश्नुते ॥

अतो ऽहं ब्रवीमि ।

भक्ष्यभक्षकयोः प्रीतिर्विपत्तेरेव कारणम् ।
शृगालात्पाशबद्धो ऽसौ मृगः काकेन रक्षितः ॥

---

### 3 Der blinde Geier, die Katze und die Vögel (1, 4)

अस्ति भागीरथीतीरे गृध्रकूटनाम्नि पर्वते महान्पर्कटीवृक्षः । तस्य कोटरे दैवदुर्विपाकाद्गलितनयनो जरद्गवो नाम गृध्रः प्रतिवसति । अथ कृपया तज्जीवनाय तद्वृक्षवासिनः पक्षिणः स्वाहारात्किंचित्किंचिद्ददति । तेनासौ जीवति । अथ कदाचिद्दीर्घकर्णनामा मार्जारः पक्षिशावकान्भक्षयितुं तत्रागतः । ततस्तमायान्तं दृष्ट्वा पक्षिशावकैर्भयार्तैः कोलाहलः कृतः । तच्छ्रुत्वा जरद्गवेनोक्तम् । को ऽयमायाति । दीर्घकर्णो गृध्रमवलोक्य सभयमाह । हा हतो ऽस्मि । अधुनातिसंनिधानेन पलायनमप्यशक्यम् । तद्यथा भवितव्यं तथा भवतु । एतत्समीपमुपगच्छामि । इत्यालोच्योपसृत्याब्रवीत् । आर्य त्वामभिवन्दे । गृध्रो ऽवदत् । कस्त्वम् । सो ऽब्रवीत् । मार्जारो ऽहम् । गृध्रो ब्रूते । दूरमपसर । नो चेद्धन्तव्यो ऽसि मया । मार्जारो ऽवदत् । श्रूयतां तावदस्मद्वचनम् । ततो यद्यहं वध्यस्तदा हन्तव्यः । यतः ।

जातिमात्रेण कश्चित्किं वध्यते पूज्यते क्व चित् ।
व्यवहारं परिज्ञाय वध्यः पूज्यो ऽथ वा भवेत् ॥

गृध्रो ब्रूते । ब्रूहि । कीदृग्व्यापारवान् । सो ऽवदत् । अहमत्र गङ्गातीरे नित्यस्नायी निरामिषाशी ब्रह्मचर्येण चान्द्रायणव्रतमाचरंस्तिष्ठामि । युष्मांश्च धर्मज्ञानरतान्विश्वासभूमयः पक्षिणः सर्वे सर्वदा ममाग्रे स्तुवन्ति । अतो भवद्भ्यो विद्यावयोवृद्धेभ्यो धर्मं श्रोतुमिहागतः । भवन्तश्चैतादृशा धर्मज्ञा यन्मामतिथिं हन्तुमुद्यताः । गृहस्थस्य धर्मश्चैष समुदीरितः ।

अरावप्युचितं कार्यमातिथ्यं गृहमागते ।
छेत्तुमप्यागते छायां नोपसंहरते द्रुमः ॥

किं च । यद्यन्नं नास्ति तदा प्रीतिवचसाप्यतिथिः पूज्यः । यतः ।

तृणानि भूमिरुदकं वाक्चतुर्थी च सूनृता ।
एतान्यपि सतां गेहे नोच्छिद्यन्ते कदा चन ॥

अन्यच्च । बालो वा यदि वा वृद्धो युवा वा गृहमागतः ।
तस्य पूजा विधातव्या सर्वत्राभ्यागतो गुरुः ॥

अन्यच्च । निर्गुणेष्वपि सत्त्वेषु दया कुर्वन्ति साधव ।
नहि संहरते ज्योत्स्ना चन्द्रश्चाण्डालवेश्मनि ॥

अन्यच्च । अतिथिर्यस्य भग्नाशो गृहात्प्रतिनिवर्तते ।
स दत्त्वा दुष्कृतं तस्मै पुण्यमादाय गच्छति ॥

अन्यच्च । उत्तमस्यापि वर्णस्य नीचो ऽपि गृहमागत ।
पूजनीयो यथायोग्य सर्वदेवमयो ऽतिथि ॥

गृध्रो ऽवदत् । मार्जारा हि मांसरुचयो भवन्ति पक्षिशावकाश्चात्र निवसन्ति । तेनैवं ब्रवीमि । मार्जारो ऽप्येवं श्रुत्वा भूमिं स्पृष्ट्वा कर्णौ स्पृशति ब्रूते च । मया धर्मशास्त्रं श्रुत्वा वीतरागेणेदं दुष्करं व्रतं चान्द्रायणमध्यवसायितम् । यत परस्परं विवदमानानामपि धर्मशास्त्राणामहिंसा परमो धर्म इत्यत्रैकमत्यम् । यत ।

सर्वहिंसानिवृत्ताश्च नरा सर्वसहाश्च ये ।
सर्वस्याश्रयभूताश्च ते नरा स्वर्गगामिन ॥

अन्यच्च । एक एव सुहृद्धर्मो निधने ऽप्यनुयाति य ।
शरीरेण समं नाशं सर्वमन्यद्धि गच्छति ॥

किं च । यो ऽत्ति यस्य यदा मांसमुभयो पश्यतान्तरम् ।
एकस्य क्षणिकी प्रीतिरन्य प्राणैर्विमुच्यते ॥

अपि च । मर्तव्यमिति यद्दुःखं पुरुषस्योपजायते ।
शक्यस्तेनानुमानेन परो ऽपि परिरक्षितुम् ॥

शृणु पुन । स्वच्छन्दवनजातेन शाकेनापि प्रपूर्यते ।
अस्य दग्धोदरस्यार्थे क कुर्यात्पातकं महत् ॥

एवं विश्वास्य स मार्जारस्तरुकोटरे स्थित । ततो दिनेषु गच्छत्सु पक्षिशावकानाक्रम्य कोटरमानीय प्रत्यहं खादति । अथ येषामपत्यानि खादितानि तै शोकार्तैर्विलपद्भिरितस्ततो जिज्ञासा समारब्धा । तत्परिज्ञाय मार्जार कोटरान्निःसृत्य पलायित । पश्चात्पक्षिभिरितस्ततो निरूपयद्भिस्तत्र तरुकोटरे शावकास्थीनि प्राप्तानि । अनन्तरं च अनेनैव शावका खादिता इति निश्चित्य मिलित्वा तै पक्षिभि स गृध्रो व्यापादित । अतो ऽहं ब्रवीमि ।

अज्ञातकुलशीलस्य वासो देयो न कस्य चित् ।
मार्जारस्य हि दोषेण हतो गृध्रो जरद्गव ॥

## 4. Der allzu sparsame Schakal (1, 7)

आसीत्कल्याणकटकवास्तव्यो भैरवो नाम व्याधः । स चैकदा मांसलुब्धः सन्धनुरादाय विन्ध्याटवीमध्यं गतः । तत्र तेन मृग एको व्यापादितः । मृगमादाय गच्छता तेन घोराकृतिः शूकरो दृष्टः । ततस्तेन मृगं भूमौ निधाय शूकरः शरेण हतः । शूकरेणाप्यागत्य प्रलयघनघोरगर्जनं कृत्वा स व्याधो मुष्कदेशे हतश्छिन्नद्रुम इव पपात । यतः ।

जलमग्निं विषं शस्त्रं क्षुद्व्याधी पतनं गिरेः ।
निमित्तं किंचिदासाद्य देही प्राणैर्विमुच्यते ।

अत्रान्तरे दीर्घरावो नाम जम्बुकः परिभ्रमन्नाहारार्थी तान्मृतान्मृगव्याधशूकरानपश्यत् । आलोक्याचिन्तयदसौ । अहो भाग्यम् । महद्भोज्यं समुपस्थितम् । अथ वा ।

अचिन्तितानि दुःखानि यथैवायान्ति देहिनाम् ।
सुखान्यपि तथा मन्ये दैवमत्रातिरिच्यते ॥

भवतु । एषां मासैर्मासत्रयं समधिकं भोजनं मे भविष्यति । ततः प्रथमबुभुक्षायां तावदिमानि स्वादूनि मांसानि विहाय कोदण्डाटनीलग्नं स्नायुबन्धं खादामीत्युक्त्वा तथाकरोत् । ततश्छिन्ने स्नायुबन्धे द्रुतमुत्पतितेन धनुषा हृदि भिन्नः स दीर्घरावः पञ्चत्वं गतः । अतो ऽहं ब्रवीमि ।

कर्तव्यः संचयो नित्यं कर्तव्यो नातिसंचयः ।
अतिसंचयदोषेण धनुषा जम्बुको हतः ॥

---

## 5. *Der Prinz und die Frau des Kaufmannssohnes* (1, 8)

अस्ति कान्यकुब्जविषये राजा वीरसेनो नाम । तेन वीरपुरनाम्नि नगरे तुङ्गबलो नाम राजपुत्रो भोगपतिः कृतः । स च महाधनस्तरुणः । एकदा स्वनगरे भ्राम्यन्नतिप्रौढयौवनां लावण्यवतीं नाम वणिक्पुत्रवधूमालोकयामास । ततः स्वहर्म्यं गत्वा स्मराकुलितमतिस्तस्याः कृते दूतीं प्रेषितवान् । यतः ।

सन्मार्गे तावदास्ते प्रभवति च नरस्तावदेवेन्द्रियाणां
लज्जां तावद्विधत्ते विनयमपि समालम्बते तावदेव ।
भ्रूचापाकृष्टमुक्ताः श्रवणपथगता नीलपक्ष्माण एते
यावल्लीलावतीनां न हृदि धृतिमुषो दृष्टिबाणाः पतन्ति ॥

सापि लावण्यवती तदवलोकनक्षणात्प्रभृति स्मरशरप्रहारजर्जरितहृदया तदेकचित्ताभवत् । तथा चोक्तम् ।

न स्त्रीणामप्रियः कश्चित्प्रियो वापि न विद्यते
गावस्तृणमिवारण्ये प्रार्थयन्ति नवं नवम् ॥

अथ दूतीवचनं श्रुत्वा लावण्यवत्युवाच । अहं पतिव्रता परपुरुषस्पर्शमात्रमपि न करोमि । यत ।

*सा भार्या या गृहे दक्षा सा भार्या या प्रजावती ।*
सा भार्या या पतिप्राणा सा भार्या या पतिव्रता ॥
कोकिलानां स्वरो रूपं नारीरूपं पतिव्रतम् ।
विद्या रूपं कुरूपाणां क्षमा रूपं तपस्विनाम् ॥

अन्यच्च । न सा स्त्री ह्यभिमन्तव्या यस्या भर्ता न तुष्यति ।
तुष्टे भर्तरि नारीणां तुष्टाः स्युः सर्वदेवताः ॥

ततो यद्यदादिशति मे प्राणेश्वरस्तत्तदेवाहमविचारितं करोमि । दूत्योक्तम् । सत्यमेतत् । लावण्यवत्युवाच । सत्यमेवैतत् । ततः सर्वमेव लावण्यवत्या यथाभिहितं दूत्या गत्वा तुङ्गबलस्याग्रे निवेदितम् । तच्छ्रुत्वा तुङ्गबलोऽवदत् । विषमेषुणा व्रणितहृदयस्तां विना कथमहं जीविष्यामि । कुट्टन्याह । स्वामिनानीय समर्पयितव्या । स प्राह । कथमेतच्छक्यम् । कुट्टन्याह । उपायः क्रियताम् । तथा चोक्तम् ।

उपायेन हि यच्छक्यं न तच्छक्यं पराक्रमैः ।
शृगालेन हतो हस्ती गच्छता पङ्कवर्त्मना ॥

ततः कुट्टन्युपदेशेन तं चारुदत्तनामानं वणिक्पुत्रं स राजपुत्रः सेवकं चकार । ततोऽसौ तेन सर्वविश्वासकार्येषु नियोजितः । एकदा कुट्टन्युपदेशेन तेन राजपुत्रेण स्नातानुलिप्तेन कनकालंकारधारिणोक्तम् । चारुदत्त मया मासमेकं यावद्गौरीव्रतं कर्तव्यम् । तदद्यारभ्य प्रतिरात्रमेकां कुलीनां युवतीमानीय समर्पय । सा मया यथोचितेन विधिना पूजयितव्या । ततः स चारुदत्तस्तथाविधां तरुणीमानीय समर्पयति । पश्चात्प्रच्छन्नः किमयं करोतीति निरूपयति । स च तुङ्गबलस्तां युवतीमस्पृशन्नेव दूराद्वस्त्रालंकारगन्धचन्दनैः संपूज्य रक्षकं दत्त्वा तत्क्षणमेव प्रस्थापयति । अथ तेन वणिक्पुत्रेण तद्दृष्टोपजातविश्वासेन लोभाकृष्टमनसा स्ववधूः समानीय समर्पिता । स च तुङ्गबलस्तां हृदयप्रियां लावण्यवतीं विज्ञाय ससंभ्रममुत्थाय निर्दयमालिङ्ग्यानन्दोन्मीलितलोचनः प्रहृष्टमना बहुविधामनङ्गक्रीडां विधाय पर्यङ्के तया सह सुष्वाप । तदालोक्य वणिक्पुत्रश्चित्रलिखित इवेतिकर्तव्यतामूढः परं विषादमुपागतः ।

---

## 6 Der Elefant und der Schakal (1, 9)

अस्ति ब्रह्मारण्ये कर्पूरतिलको नाम हस्ती । तमवलोक्य सर्वे शृगाला श्चिन्तयन्ति स्म । यद्ययं केनाप्युपायेन म्रियेत तदास्माकमेतद्देहेन मासचतुष्टयस्य स्वेच्छाभोजनं भवेत् । ततस्तन्मध्यादेकेन वृद्धशृगालेन प्रतिज्ञा कृता । मया बुद्धिप्रभावादस्य मरणं साधयितव्यम् । अनन्तर स वञ्चक कर्पूरतिलकसमीपं गत्वा साष्टाङ्गपातं प्रणम्योवाच । देव दृष्टिप्रसाद कुरु । हस्ती ब्रूते । कस्त्वम् । कुत समायात । सो ऽवदत् । जम्बुको ऽहम् । सर्ववनवासिभिर्मिलित्वा भवत्सकाशं प्रस्थापित । यद्विना राज्ञा स्थातु न युक्तं तदत्राटवीराज्ये ऽभिषेक्तुं भवान्सर्वस्वामिगुणोपेतो निरूपित । यत ।

य कुलाभिजनाचारैरतिशुद्ध प्रतापवान् ।
धार्मिको नीतिकुशल स स्वामी युज्यते भुवि ॥

अपर च पश्य ।

राजानं प्रथमं विन्देत्ततो भार्यां ततो धनम् ।
राजन्यसति लोके ऽस्मिन्कुतो भार्या कुतो धनम् ॥

अन्यच्च । पर्जन्य इव भूतानामाधार पृथिवीपति ।
विकले ऽपि हि पर्जन्ये जीव्यते न तु भूपतौ ॥

किं च । नियतविषयवर्ती प्रायशो दण्डयोगा-
ज्जगति परवशे ऽस्मिन्दुर्लभ साधुवृत्त ।
कृशमपि विकलं वा व्याधितं वाधनं वा
पतिमिव कुलनारी दण्डभीत्याभ्युपैति ॥

तद्यथा लग्नवेला न चलति तथा कृत्वा सत्वरमागम्यतां देवेन । इत्युक्त्वोत्थाय चलित । ततो ऽसौ राज्यलोभाकृष्ट कर्पूरतिलक शृगालदर्शितवर्त्मना धावन्महापङ्के निमग्न । हस्तिनोक्तम् । सखे शृगाल किमधुना विधेयम् । महापङ्के पतितो ऽहम् । शृगालेन विहस्योक्तम् । देव मम पुच्छाग्रे हस्तं दत्त्वोत्तिष्ठ । यस्य वचसि त्वया विश्वास कृतस्तस्य फलमेतत् । तथा चोक्तम् ।

यदा सत्सङ्गनिरतो भविष्यसि भविष्यसि ।
तदासज्जनगोष्ठीषु पतिष्यसि पतिष्यसि ॥

ततो महापङ्के निमग्नो हस्ती शृगालैर्भक्षित । अतो ऽहं ब्रवीमि ।

उपायेन हि यच्छक्यं न तच्छक्यं पराक्रमै ।
शृगालेन हतो हस्ती गच्छता पङ्कवर्त्मना ॥

---

## 7 Der Affe und der Keil (2, 2)

अस्ति मगधदेशे धर्मारण्यसंनिहितवसुधायां शुभदत्तनाम्ना कायस्थेन विहार कारयितुमारब्ध । तत्र करपत्रविदार्यमाणकाष्ठस्तम्भस्य कियद्दूर विदीर्णखण्डद्वयस्य मध्ये कीलक सूत्रधारेण निहित । तत्र च वनवासी महान्वानरयूथ क्रीडनार्थमायात । तेष्वेको वानर कालदण्डप्रेरित इव त कीलक हस्ताभ्यां धृत्वोपविष्ट । ततस्तस्य मुष्कद्वय लम्बमान काष्ठद्वयाभ्यन्तरे प्रविष्टम् । अनन्तर सहजचपलतया महता प्रयत्नेन कीलकमाकृष्टवान् । आकृष्टे सति काष्ठाभ्यां चूर्णिताण्डद्वय पञ्चत्व गत । अतो ऽह ब्रवीमि ।

अव्यापारेषु व्यापार यो नर कर्तुमिच्छति ।
स एव निधन याति कीलोत्पाटीव वानर ॥

---

## 8 Der Dieb, der Esel und der Hund (2, 3)

अस्ति वाराणस्यां कर्पूरपटो नाम रजक । स चैकदाभिनववयस्कया कान्तया सह चिरात्केलिं कृत्वा निर्भरं प्रसुप्त । तदनन्तरं द्रव्याणि हर्तुं तद्गृहं चौर प्रविष्ट । तस्य प्राङ्गणे गर्दभो बद्धस्तिष्ठति कुक्कुरश्चोपविष्ट । तं चौरमवलोक्य गर्दभ श्वानमाह । तव तावदय व्यापार । तत्किमिति त्वमुच्चै शब्द कृत्वा स्वामिन न जागरयसि । कुक्कुरो ब्रूते । मम नियोगस्यास्य चर्चा किं त्वया कर्तव्या । त्वमेव जानासि यथाहमेतस्याहर्निशं गृह रक्षा करोमि । यतो ऽय चिरान्निर्वृतो ममोपयोग न जानाति तेनाधुना ममाहारदाने ऽपि मन्दादर । विना विधुरदर्शनं स्वामिनो ऽनुजीविषु मन्दादरा भवन्ति । गर्दभो ब्रूते । शृणु रे बर्बर ।

याचते कार्यकाले य स किंभृत्य स किंसुहृत् ।

कुक्कुरो ब्रूते । भृत्यान्संभावयेद्यस्तु कार्यकाले स किंप्रभु ॥

किं च । आश्रितानां भृतौ स्वामिसेवायां धर्मसेवने ।
पुत्रस्योत्पादने चैव न सन्ति प्रतिहस्तका ॥

ततो गर्दभ सकोपमाह । आ पापीयांस्त्वं य स्वामिकार्योपेक्षां करोषि । भवतु । यथा स्वामी जागर्ति तथा मया कर्तव्यम् । यत ।

पृष्ठत सेवयेदर्क जठरेण हुताशनम् ।
स्वामिनं सर्वभावेन परलोकममायया ॥

इत्युक्त्वा स अतीव चीत्कारं कृतवान् । तत स रजकस्तेन चीत्कारेण प्रबुद्धो निद्राविमर्दकोपादुत्थाय गर्दभं लगुडेन ताडयामास । अतो ऽहं ब्रवीमि ।

पराधिकारचर्चां य कुर्यात्स्वामिहितेच्छया ।
स विषीदति चीत्कारात्ताडितो गर्दभो यथा ॥

---

## 9 Der Lowe, die Maus und die Katze (2, 4)

अस्त्युत्तरापथे ऽर्बुदशिखरनाम्नि पर्वते महाविक्रमो नाम सिंह । तस्य पर्वतकन्दरमधिशयानस्य केसराग्रं मूषिक कश्चिच्छिनत्ति । स सिंह केसराग्रं लूनं बुद्ध्वा कुपितो विवरान्तर्गतं मूषिकमलभमानो ऽचिन्तयत् । किं विधेयमत्र । भवतु । एवं श्रूयते ।

क्षुद्रशत्रुर्भवेद्यस्तु विक्रमान्न स लभ्यते ।
तं निहन्तुं पुरस्कार्य सदृशस्तस्य सैनिक ॥

इत्यालोच्य तेन ग्रामं गत्वा दधिकर्णनामा बिडालो मांसाद्याहारेण संतोष्य प्रयत्नादानीय स्वकन्दरे धृत । ततस्तद्भयान्मूषिको बहिर्न नि सरति । तेनासौ सिंहो ऽक्षतकेसर सुखं स्वपिति । मूषिकशब्दं यदा यदा शृणोति तदा तदा सविशेषं तं बिडालं मांसाहारदानेन संवर्धयति । अथैकदा स मूषिक क्षुधा पीडितो बहि संचरंस्तेन मार्जारेण प्राप्तो व्यापादित खादितश्च । अनन्तरं स सिंहो यदा कदा चिदपि मूषिकशब्दं न शुश्राव तदोपयोगाभावात्तस्य बिडालस्याहारदाने मन्दादरो बभूव । अतो ऽहं ब्रवीमि ।

निरपेक्षो न कर्तव्यो भृत्यै स्वामी कदा चन ।
निरपेक्ष प्रभुं कृत्वा भृत्य स्याद्दधिकर्णवत् ॥

---

## 10 Die kluge Kupplerin (2 6)

अस्ति श्रीपर्वतमध्ये ब्रह्मपुराख्यं नगरम् । तच्छैलशिखरे घण्टाकर्णो नाम राक्षस प्रतिवसतीति जनप्रवाद श्रूयते । एकदा घण्टामादाय पलायमान कश्चिच्चौरो व्याघ्रेण व्यापादित । तत्पाणिपतिता घण्टा वानरै प्राप्ता । ते वानरास्तां घण्टामनुक्षणं वादयन्ति । ततो नगरजनैर्मनुष्य खादितो दृष्ट प्रतिक्षणं घण्टारवश्च श्रूयते । अनन्तरं घण्टाकर्ण कुपितो मनुष्यान्खादति घण्टां च वादयतीत्युक्त्वा जना सर्वे नगरात्पलायिता । तत करालया नाम कुट्टन्या विमृश्य मर्कटा घण्टां वादयन्तीति स्वयं विज्ञाय राजा विज्ञापित । देव यदि कियद्धनोपक्षय क्रियते तदाहमेतं

घण्टाकर्णं साधयामि । ततो राज्ञा तुष्टेन तस्यै धनं दत्तम् । कुट्टन्या च मण्डलं कृत्वा तत्र गणेशादिगौरवं दर्शयित्वा स्वयं वानरप्रियफलान्यादाय वनं प्रविश्य फलान्याकीर्णानि । ततो घण्टां परित्यज्य वानराः फलासक्ता बभूवुः । कुट्टनी च घण्टां गृहीत्वा नगरमागता सकललोकपूज्याभवत् । अतो ऽहं ब्रवीमि ।

शब्दमात्रान्न भेतव्यमज्ञात्वा शब्दकारणम् ।
शब्दहेतुं परिज्ञाय कुट्टनी गौरवं गता ॥

---

## 11. Die Frau des Kuhhirten und ihre beiden Liebhaber (2, 9)

अस्ति द्वारावत्यां पुर्यां कस्य चिद्गोपस्य वधूर्बन्धकी । सा च ग्रामस्य दण्डनायकेन तत्पुत्रेण च सह रमते । तथा चोक्तम् ।

नाग्निस्तृप्यति काष्ठानां नापगानां महोदधिः ।
नान्तकः सर्वभूतानां न पुंसां वामलोचना ॥

अन्यच्च ।
न दानेन न मानेन नार्जवेन न सेवया ।
न शस्त्रेण न शास्त्रेण विषमाः सर्वथा स्त्रियः ॥

यतः । गुणाश्रयं कीर्तियुतं च कान्तं पतिं विधेयं सधनं रतिज्ञम् ।
विहाय शीघ्रं वनिता व्रजन्ति नरान्तरं शीलगुणादिहीनम् ॥

अथ सा कदा चिद्दण्डनायकसुतेन सह रममाणा तिष्ठति । अत्रान्तरे दण्डनायको ऽप्यागतः । तं दृष्ट्वा तत्पुत्रं कुसूले धृत्वा दण्डनायकेन समं तथैव क्रीडवती । अनन्तरं तस्या भर्ता गोपो गोष्ठात्समागतः । तमालोक्य गोप्योक्तम् । दण्डनायक त्वं लगुडं गृहीत्वा कोपं दर्शयन्सत्वरं याहि । तथानुष्ठिते सति स गोपालस्तत्रागत्य भार्यां पृष्टवान् । केन कारणेन दण्डनायकः समागतो ऽत्र । सा ब्रूते । अयं केनापि कारणेन पुत्रस्योपरि क्रुद्धः । स च पलायमानो ऽत्रागत्य प्रविष्टो मया कुसूले निक्षिप्य रक्षितस्तत्पित्रा चान्विष्यता गृहे न दृष्टः । अतो ऽयं कुपित एव गच्छति । ततः सा तत्पुत्रं कुसूलादवतार्य दर्शितवती । तथा चोक्तम् ।

आहारो द्विगुणः स्त्रीणां बुद्धिस्तासां चतुर्गुणा ।
षड्गुणो व्यवसायश्च कामश्चाष्टगुणः स्मृतः ॥

अतो ऽहं ब्रवीमि ।

उत्पन्नेषु च कार्येषु मतिर्यस्य न हीयते ।
स निस्तरति दुर्गाणि गोपी जारद्वयं यथा ॥

---

## 12 13 Die Krähe und die Schlange (2, 10)
## Das kluge Haslein (2, 11)

कस्मिंश्चित्तरौ वायसदंपती निवसत । तयोश्चापत्यानि तरुकोटरावस्थितकृष्णसर्पेण खादितानि । तत पुनर्गर्भवती वायसी ब्रूते । स्वामिन् । त्यज्यतामय तरु । अत्र यावत्कृष्णसर्पस्तावदावयो संतति कदा चिदपि न भविष्यति । यत ।

दुष्टा भार्या शठ मित्रं भृत्यश्चोत्तरदायक ।
ससर्पे च गृहे वासो मृत्युरेव न संशय ॥

वायसो ब्रूते । प्रिये न भेतव्यम् । वार वार मयैतस्य महापराध सोढः । इदानीं पुनर्न क्षन्तव्य । वायस्याह । कथमनेन बलवता कृष्णसर्पेण सार्धं भवान्विग्रहीतुं समर्थ । वायसो ब्रूते । अलमनया चिन्तया । यतः ।

यस्य बुद्धिर्बलं तस्य निर्बुद्धेस्तु कुतो बलम् ।
वने सिंहो बलोन्मत्त शशकेन निपातितः ॥

वायस्याह । कथमेतत् । वायस कथयति । अस्ति मन्दरनाम्नि पर्वते दुर्दान्तो नाम सिंह । स च सर्वदा पशूनां वधं विदधान एवास्ते । तत सर्वैं पशुभिर्मेलक कृत्वा स सिंहो विज्ञप्तः । देव किमर्थं सर्वपशुवध क्रियते । वयमेव भवदाहारार्थं प्रत्यहमेकैकं पशुमुपढौकयाम । सिंहेनोक्तम् । यद्येतदभिमतं भवतां तर्हि भवतु । तत प्रभृति प्रत्यहमेकैकं पशुमुपकल्पित भक्षयन्नास्ते । अथ कदा चित्कस्यापि वृद्धशशकस्य वासरः प्राप्त । तत सो ऽचिन्तयत् ।

त्रासहेतोर्विनीतिस्तु क्रियते जीविताशया ।
पञ्चत्वं चेद्गमिष्यामि किं सिंहानुनयेन मे ॥

तन्मन्दं मन्दमुपगच्छामि । तत सिंहो ऽपि क्षुधा पीडित कोपात्तमुवाच । कुतस्त्वं विलम्ब्यागतो ऽसि । शशको ऽब्रवीत् । नाहमपराद्धः । पथि सिंहान्तरेण बलाद्धृतस्तस्याग्रे पुनरागमनाय शपथं कृत्वा स्वामिनं निवेदयितुमत्रागतो ऽस्मि । सिंहः सकोपमाह । सत्वरं गत्वा मां दर्शय । क्वासौ दुरात्मा तिष्ठति । तत शशकस्तं गृहीत्वा गभीरकूपसमीपं गत । अत्रागत्य पश्यतु स्वामीत्युक्त्वा तस्मिन्कूपजले तस्यैव प्रतिबिम्बं दर्शितवान् । ततो ऽसौ दर्पाध्मातस्तस्योपर्यात्मानं निक्षिप्य पञ्चत्वं गत । अतो ऽहं ब्रवीमि । यस्य बुद्धिर्बलं तस्येत्यादि ।

वायसी ब्रूते । श्रुतं मया । कर्तव्यतां ब्रूहि । वायसो ऽवदत् । प्रिये । आसन्ने सरसि राजपुत्र सततमागत्य स्नाति । तस्मिन्नवसरे तदङ्गादवतारितं कनकसूत्रं चञ्च्वा धृत्वानीयास्मिन्कोटरे धरिष्यसि । अथ कनकसूत्रानुसरण-

प्रवृत्ते राजपुरुषे कोटरे निक्षिप्यमाणे कृष्णसर्पो द्रष्टव्यो व्यापादयितव्यश्च । अथ कदा चित्स्नातुं प्रविष्टे राजपुत्रे वायस्या तदनुष्ठितम् । तथानुष्ठिते तद्वृत्तम् । अतो ऽहं ब्रवीमि ।

उपायेन हि तत्कुर्याद्यन्न शक्यं पराक्रमै ।
काक्या कनकसूत्रेण कृष्णसर्पो निपातित ॥

---

## 14. Der Strandlaufer und das Meer (2, 12)

समुद्रतीरे टिट्टिभदंपती निवसत । अथ टिट्टिभ्यासन्नप्रसवा भर्तारमाह । नाथ प्रसवयोग्यस्थानमन्विष्यताम् । टिट्टिभो ऽवदत् । नन्विदमेव स्थानं प्रसूतियोग्यम् । सा ब्रूते । समुद्रवेलया व्याप्यते स्थानमेतत् । सो ऽब्रवीत् । किमहं निर्बल । मम गृहावस्थितान्यण्डानि समुद्रेणापहर्तव्यानि । टिट्टिभी विहस्याह । नाथ त्वया समुद्रेण च महदन्तरम् । तथा चोक्तम् ।

अनुचितकर्मारम्भ स्वजनविरोधो बलीयसा स्पर्धा ।
प्रमदाजनविश्वासो मृत्योर्द्वाराणि चत्वारि ॥

अथ वा । दु खमात्मा परिच्छेत्तुमेव योग्यो न वेति वा ।
अस्तीदृग्यस्य विज्ञानं स कृच्छ्रे ऽपि न सीदति ॥

तत स्वामिवचनात्तत्रैव प्रसूता सा । एतत्सर्वं श्रुत्वा समुद्रेणापि तच्छक्तिज्ञानार्थिना तदण्डान्यपहृतानि । ततस्तु टिट्टिभी शोकार्ता भर्तारमाह । नाथ कष्टमापतितम् । अण्डानि मे नष्टानि । टिट्टिभो ऽवदत् । प्रिये मा भैषी । इत्युक्त्वा पक्षिणा मेलक कृत्वा पक्षिस्वामिनो गरुडस्य समीप गत । निजाण्डानां विनाशकथां निवेदयति । ततस्तेन गरुत्मता तद्वचनमाकर्ण्य प्रभुर्भगवान्नारायण सृष्टिस्थितिप्रलयहेतुर्विज्ञप्त । ततो भगवदाज्ञां मौलौ निधाय समुद्रसमीप गत । ततस्तद्वचनमाकर्ण्य समुद्रस्तान्यण्डानि समर्पितवान् । अतो ऽह ब्रवीमि ।

अङ्गाङ्गिभावमज्ञात्वा कथ सामर्थ्यनिर्णय ।
पश्य टिट्टिभमात्रेण समुद्रो व्याकुलीकृत ॥

---

## 15 Die Vogel und die Affen (3, 2)

अस्ति नर्मदातीरे पर्वतोपत्यकायां विशाल शाल्मलीतरु । तत्र निर्मितनीडक्रोडे पक्षिण सुखेन वर्षास्वपि निवसन्ति । अथ नीलपटैरिव जलधरपटलैरावृते नभस्तले धारासारैर्महती वृष्टिर्बभूव । ततो वानरा-

स्तरुतले ऽवस्थिताञ्छीतार्तान्कम्पमानानवलोक्य पक्षिभिरुक्तम् । भो भो वानराः । श्रूयताम् ।

अस्माभिर्निर्मिता नीडाश्चञ्चुमात्राहृतैस्तृणैः ।
हस्तपादादिसंयुक्ता यूयं किमवसीदथ ॥

तच्छ्रुत्वा वानरैर्जातामर्षैरालोचितम् । अहो । निर्वातनीडगर्भावस्थिताः सुखिनः पक्षिणो ऽस्मान्निन्दन्ति । तद्भवतु तावद्वृष्टेरुपशमः । अनन्तरं शान्ते पानीयवर्षे तैर्वानरैर्वृक्षमारुह्य सर्वे नीडा भग्नाः । तेषां पक्षिणामण्डानि चाधः पतितानि । अतो ऽहं ब्रवीमि ।

विद्वानेवोपदेष्टव्यो नाविद्वांस्तु कदा चन ।
वानरानुपदिश्याज्ञान्स्थानभ्रष्टा ययुः खगाः ॥

---

## 16. Der Esel in der Tigerhaut (3, 3).

अस्ति हस्तिनापुरे कर्पूरविलासो नाम रजकः । तस्य गर्दभो ऽतिभारवाहनाद्दुर्बलो मुमूर्षुरिवाभवत् । ततस्तेन रजकेनासौ व्याघ्रचर्मणा प्रच्छाद्यारण्यसमीपे सस्यक्षेत्रे मोचितः । ततो दूरादवलोक्य व्याघ्रबुद्ध्या क्षेत्रपतयः सत्वरं पलायन्ते । स च सुखेन सस्यं चरति । अथैकदा केनापि सस्यरक्षकेण धूसरकम्बलकृततनुत्राणेन धनुष्काण्डं सज्जीकृत्यावनतकायेनैकान्ते स्थितम् । तं च दूरे दृष्ट्वा गर्दभः पुष्टाङ्गो गर्दभीयमिति मत्वा शब्दं कुर्वाणस्तदभिमुखं धावितः । ततस्तेन सस्यरक्षकेण गर्दभो ऽयमिति ज्ञात्वा लीलयैव व्यापादितः । अतो ऽहं ब्रवीमि ।

सुचिरं हि चरन्नीन श्रेयः पश्यत्यबुद्धिमान् ।
द्वीपिचर्मपरिच्छन्नो वाग्दोषाद्गर्दभो हतः ॥

---

## 17. Die Elefanten und die Hasen (3, 4).

कदा चिद्वर्षास्वपि वृष्टेरभावात्तृषार्तो गजयूथो यूथपतिमाह । नाथ को ऽभ्युपायो ऽस्माकं जीवनाय नास्ति । अस्त्यत्र क्षुद्रजन्तूनां निमज्जनस्थानम् । वयं च निमज्जनाभावादन्धा इव । क्व यामः किं वा कुर्मः । ततो हस्तिराजो नातिदूरं गत्वा निर्मलं ह्रदं दर्शितवान् । ततस्तत्तीरावस्थिताः शशका गजयूथपादाहतिभिर्बहवश्चूर्णिताः । अनन्तरं शिलीमुखो नाम शशकः सर्वानाहूय चिन्तयामास । अनेन गजयूथेन पिपासाकुलितेन प्रत्यहमेवात्रागन्तव्यम् । अतो विनङ्क्ष्यत्यस्मत्कुलम् । अथ विजयो नाम वृद्धशशको ऽवदत् ।

मा विषीदत । प्रतीकारो मया कर्तव्यः । इति प्रतिज्ञाय चलितः । गच्छता च तेनालोचितम् । कथं मया गजयूथपनिकटे गत्वा वक्तव्यम् । यतः ।

स्पृशन्नपि गजो हन्ति जिघ्रन्नपि भुजंगमः ।
हसन्नपि नृपो हन्ति मानयन्नपि दुर्जनः ॥

अतोऽहं पर्वतशिखरमारुह्य यूथनाथमभिवादयामि । तथानुष्ठिते सति यूथनाथ उवाच । कस्त्वम् । कुतः समायातः । स ब्रूते । दूतोऽहं भगवता चन्द्रेण प्रेषितः । यूथपतिराह । कार्यमुच्यताम् । विजयो वदति । शृणु गजेन्द्र ।

उद्यतेष्वपि शस्त्रेषु दूतो वदति नान्यथा ।
सदैवावध्यभावेन यथार्थस्य हि वाचकः ॥

तदहं तदाज्ञया ब्रवीमि । शृणु । यदेते शशकाश्चन्द्रसरोरक्षकास्त्वया निःसारितास्तन्न युक्तं कृतम् । यतो रक्षकास्ते शशका मदीया अत एव लोके मे शशाङ्क इति प्रसिद्धिः । एवमुक्तवति दूते स यूथपतिर्भयादिदमाह । इदमज्ञानतः कृतम् । पुनर्न गमिष्यामि । दूत उवाच । तदत्र सरसि भगवन्तं चन्द्रमसं प्रकोपात्कम्पमानं प्रणम्य प्रसाद्य च गच्छ । ततस्तेन रात्रौ नीत्वा तत्र जले चञ्चलं चन्द्रप्रतिविम्बं दर्शयित्वा स यूथपतिः प्रणामं कारितः । देव । अज्ञानादेवानेनापराधः कृतस्तत्क्षम्यतामित्युक्त्वा तेन शशकेन स यूथपतिः प्रस्थापितः । अतोऽहं ब्रवीमि ।

व्यपदेशेन महतां सिद्धिः संजायते परा ।
शशिनो व्यपदेशेन वसन्ति शशकाः सुखम् ॥

---

## 18. Die Gans und die Krahe (3, 5).

अस्त्युज्जयिनीवर्त्मनि प्रान्तरे महान्पिप्पलवृक्षः । तत्र हंसकाकौ निवसतः । कदा चिद्ग्रीष्मसमये परिश्रान्तः कश्चित्पथिकस्तत्र तरुतले धनुष्काण्डं निधाय सुप्तः । ततः क्षणान्तरे तन्मुखाद्वृक्षच्छायापगता । अनन्तरं सूर्यतेजसा तन्मुखं व्याप्तमवलोक्य कृपया पुण्यात्मना पापरहितेन तत्पिप्पलवृक्षस्थितेन हंसराजेन पक्षौ प्रसार्य पुनस्तन्मुखे छाया कृता । ततो निर्भरं निद्रासुखिना परिश्रान्तेन पान्थेन मुखव्यादानं कृतम् । अनन्तरं स्वभावदौर्जन्येन परसुखमसहिष्णुः स काकस्तस्य मुखे पुरीषोत्सर्गं कृत्वा पलायितः । ततो यावदसावुत्थायोर्ध्वं निरीक्षते तावत्तेनावलोकितो हंसः काण्डेन हतः । अतोऽहं ब्रवीमि ।

न स्थातव्यं न गन्तव्यं दुर्जनेन समं क्व चित् ।
काकसङ्गाद्धतो हंसस्तिष्ठन्गच्छंश्च वर्तकः ॥

---

## 19 Die Krahe und die Wachtel (3, 5)

एक काको वृक्षशाखाया स्वपिति । वर्तकश्चाधस्ताद्भूमौ निवसति । एकदा सर्वे पक्षिणो भगवतो गरुडस्य यात्राप्रसङ्गेन समुद्रतीर प्रचलिता । तत्र काकेन सह वर्तकश्चलित । अथ गच्छतो गोपालस्य मस्तकावस्थित-भाण्डाद्दधि वार वार तेन काकेन खाद्यते । ततो यावदसौ दधिभाण्ड भूमौ निधायोर्ध्वमवलोकते तावत्काकवर्तकौ दृष्टौ । ततस्तेन खेदित काक पलायित । वर्तको मन्दगतिस्तेन प्राप्तो व्यापादित । अतो ऽह ब्रवीमि । न स्थातव्य न गन्तव्यमित्यादि ।

---

## 20 Der Wagner und seine Frau (3, 6)

अस्ति श्रीनगरे मन्दमतिर्नाम रथकार । स च स्वभार्या बन्धकी जानाति । कि तु जारेण सममेकस्थाने स्वचक्षुषा न पश्यति । ततो ऽसौ रथकारो ऽहमन्य ग्राम गमिष्यामीत्युक्त्वा प्रचलित । स कियद्दूर गत्वा निभृत पुनरागत्य स्वगृहे खट्वातले पतित्वा स्थित । अथ मम भर्ता ग्रामान्तर गत इत्युपजातविश्वासया तद्वधूा जार सध्याकाल एवाहूत । पश्चात्तेन जारेण सम तस्या खट्वायां निभर क्रीडन्ती स्थिता । खट्वाध स्वामिना सहाङ्गुभूतकिंचिदङ्गस्पर्शात्स्वामिन विज्ञाय सा विषण्णाभवत् । ततो जारेणोक्तम् । किमिति मया सहाद्य निर्भर न रमसे । विस्मितेव प्रतिभासि । अथ तयोक्तम् । यो ऽसौ मे प्राणेश्वर सो ऽद्य ग्रामान्तर गत । तेन विना सकलजनपूर्णो ऽप्यय ग्रामो मा प्रत्यरण्यवत्प्रतिभाति । कि भावि तत्र परस्थाने । कि खादितवान् । कथं वा प्रसुप्त इत्यस्मद्धृदय विदीर्यते । जारेणोक्तम् । किमेवविधा स्नेहभूमि स ते भर्ता कलहकार । बन्धकी ब्रूते । रे बर्बर कि ब्रवीषि । शृणु ।

परुषाण्यपि या प्रोक्ता दृष्टा वा क्रोधचक्षुषा ।
सुप्रसन्नमुखी भर्तु सा नारी धर्मभागिणी ॥

अपरं च । नगरस्थो वनस्थो वा पापो वा यदि वा शुचि ।
यासां स्त्रीणां प्रियो भर्ता तासां लोका महोदया ॥

अन्यच्च । भर्ता नाम पर नार्या भूषणं भूषणैर्विना ।
एषा हि रहिता तेन शोभमाना न शोभते ॥

त्वं च जारो मनोलौल्यात्पुष्पताम्बूलसदृश कदा चित्सेव्यसे । स च मे स्वामी मां विक्रेतु देवेभ्यो ब्राह्मणेभ्यो वा दातु समर्थ । कि बहुना । तस्मिञ्जीवति जीवामि । तन्मरणे चानुमरणं करिष्यामीत्येष मे निश्चय । यत ।

तिस्र कोट्यो ऽर्धकोटी च यानि रोमाणि मानुषे ।
तावत्कालं वसेत्स्वर्गे भर्तारं यानुगच्छति ॥

अन्यच्च । व्यालग्राही यथा व्यालं बलादुद्धरते बिलात् ।
नरकस्थं पतिं तद्वत्पतिप्राणानुगा सती ॥

अपरं च ।

चितौ परिष्वज्य विचेतनं पतिं प्रिया हि या मुञ्चति देहमात्मन ।
कृत्वापि पापं शतसंख्यमप्यसौ पतिं गृहीत्वा सुरलोकमाप्नुयात् ॥

यत । यस्मै दद्यात्पिता त्वेनां भ्राता वानुमते पितु ।
तं शुश्रूषेत जीवन्तं संस्थितं च न लङ्घयेत् ॥

एतत्सर्वं श्रुत्वा स रथकारो धन्यो ऽहं यस्यैतादृशी भार्या स्नेहवती प्रियवादिनी चेति मनसि निधाय तां खट्वां स्त्रीपुरुषसहितां मूर्ध्नि धृत्वा स मन्दमतिर्नर्तितवान् । अतो ऽहं ब्रवीमि ।

प्रत्यक्षे ऽपि कृते पापे मूर्ख साम्ना प्रशाम्यति ।
रथकार स्वकां भार्यां सजारां शिरसावहत् ॥

---

## 21 Der blaue Schakal (3, 7)

अस्ति शृगाल कश्चित्स्वेच्छया नगरोपान्ते भ्राम्यन्नीलसंधानभाण्डे निपतित । पश्चात्तत उत्थातुमसमर्थ प्रातरात्मानं मृतवत्संदर्श्य स्थित । अथ नीलीभाण्डस्वामिनासावुत्थाप्य दूरे नीत्वा परित्यक्त । ततो ऽसौ वनं गत्वात्मानं नीलवर्णमवलोक्याचिन्तयत् । अहमिदानीमुत्तमवर्ण । तदात्मन किमुत्कर्षं न साधयामि । इत्यालोच्य शृगालानाहूय तेनोक्तम् । अहं भगवत्या वनदेवतया स्वहस्तेनारण्यराज्ये सर्वौषधिरसेनाभिषिक्त । पश्यत मम वर्णम् । तदद्यारभ्यास्मदाज्ञयास्मिन्नरण्ये व्यवहार कार्य । शृगालाश्च तं विशिष्टवर्णमवलोक्य साष्टाङ्गपातं प्रणम्योचु । यथाज्ञापयति देव । ततो ऽनेन क्रमेण सर्वेष्वरण्यवासिष्वाधिपत्यं तस्य बभूव । ततस्तेन सिंहव्याघ्रादीनुत्तमपरिजनान्प्राप्य शृगालानवलोक्य लज्जमानेनावज्ञया दूरीकृता स्वज्ञातय । ततो विषण्णान्शृगालानवलोक्य वृद्धशृगालेन केन चित्प्रतिज्ञातम् । मा विषीदतैव चेदनेनानीतिज्ञेन वयं मर्मज्ञा परिभूता । तद्यथायं नश्यति तन्मया विधेयम् । यतो ऽमी व्याघ्रादयो वर्णमात्रविप्रलब्धा शृगालमज्ञात्वा राजानममुं मन्यन्ते तद्यथायं परिचीयते तथा कुरुत । तत्र चैवमनुष्ठेयं यथा वदामि । यदा सर्वे संध्यासमये तत्संनिधाने महारावमेकदा करिष्यथ ततस्तं शब्दमाकर्ण्य स्वभावात्तेनापि शब्द कर्तव्य । यत ।

य स्वभावो हि यस्य स्यात्तस्यासौ दुरतिक्रम ।
श्वा यदि क्रियते भोगी तत्कि नाश्नात्युपानहम् ॥

तत शब्दादिज्ञाय व्याघ्रेण हन्तव्य । तथानुष्ठिते सति तद्वृत्तम् । तथा चोक्तम् ।

छिद्र मर्म च वीर्यं च विजानाति निजो रिपु ।
दहत्यन्तर्गतश्चैव शुष्कवृक्षमिवानल ॥

अतो ऽह ब्रवीमि ।

आत्मपक्ष परित्यज्य परपक्षे च यो रत ।
स परैर्हन्यते मूढो नीलीवर्णशृगालवत् ॥

---

## 22 Der Krieger, der seinen eigenen Sohn opfert (3,8)

अह पुरा शूद्रकस्य राज्ञ क्रीडासरसि कर्पूरकेलिनाम्नो राजहसस्य पुत्र्या कर्पूरमञ्जर्या सहानुरागवानभूव । तत्र वीरवरो नाम राजपुत्र कुतश्चिद्देशादागत्य राजद्वारि प्रतीहारमुपागम्योवाच । अह वर्तनार्थी राजपुत्र । मा राजदर्शन कारय । ततस्तेन राजदर्शन कारितो ब्रूते । देव यदि मया सेवकेन प्रयोजनमस्ति तदास्मद्वर्तन क्रियताम् । शूद्रक उवाच । किं ते वर्तनम् । वीरवरेणोक्तम् । प्रत्यह सुवर्णशतचतुष्टयम् । राजाह । का ते सामग्री । वीरवरो ब्रूते । द्वौ बाहू तृतीयश्च खड्ग । राजाह । नैतच्छक्यम् । तच्छ्रुत्वा वीरवरो प्रणम्य चलित । अथ मन्त्रिभिरुक्तम् । देव दिनचतुष्टयस्य वर्तन दत्त्वा ज्ञायतामस्य स्वरूपम् । किमुपयुक्तो ऽयमेतावद्वर्तनं गृह्णात्यनुपयुक्तो वेति । ततो मन्त्रिवचनादाहूय ताम्बूल दत्त्वा तद्वर्तनं दत्तवान् । वर्तनविनियोगश्च राज्ञा सुनिभृत निरूपित । तदर्ध वीरवरेण देवेभ्यो ब्राह्मणेभ्यो दत्तम् । स्थितस्यार्ध दु खितेभ्य । तदवशिष्ट च भोजनव्ययेन व्ययितम् । एतत्सर्वं नित्यकृत्य कृत्वा राजद्वारमहर्निश खड्गपाणि सेवते । यदा च राजा स्वय समादिशति तदा स्वगृहमुपयाति । अथ कृष्णचतुर्दश्या रात्रौ सकरुणक्रन्दनध्वनि स राजा शुश्राव । त श्रुत्वा राजा ब्रूते । क को ऽत्र द्वारि तिष्ठति । तदा तेनोक्तम् । देव । अह वीरवर । राजोवाच । क्रन्दनानुसरण क्रियताम् । वीरवरो ऽपि यथाज्ञापयति देव इत्युक्त्वा चलित । राज्ञा चिन्तितम् । अयमेकाकी राजपुत्रो मया सूचीभेद्ये तमसि प्रहित । तदनुचितम् । अहमपि गत्वा निरूपयामि । किमेतदिति । ततो राजापि खड्गमादाय तदनुसरणक्रमेण नगरद्वाराद्बहिर्निर्जगाम । ततो गत्वा वीरवरेण रुदती रूपयौवनसपन्ना सर्वालकारभूषिता का चित्स्त्री दृष्टा पृष्टा च । का त्व किमर्थं रोदिषि । स्त्रियोक्तम् ।

अहमेतस्य शूद्रकस्य राज्ञो लक्ष्मी । चिरादेतस्य भुजच्छायाया महता सुखेन विश्रान्ता । देव्या अपराधेन तृतीयदिवसे राजा पञ्चत्वं यास्यति । अहमनाथा भविष्यामि । इदानीं न स्थास्यामीति रोदिमि । वीरवरो ब्रूते । कथं पुनरिहावासो भगवत्याः सम्भवति । लक्ष्मीरुवाच । यदि त्वमात्मनः पुत्रस्य शक्तिधरस्य द्वात्रिंशल्लक्षणोपेतस्य मस्तकं स्वहस्तेन छित्त्वा भगवत्याः सर्वमङ्गलाया उपहारं करोषि तदा राजा शतायुर्भविष्यति । अहं पुनश्च सुचिरं सुखेन निवसामि । इत्युक्त्वादृश्याभवत् । ततो वीरवरेण स्वगृहं गत्वा निद्रालसा वधूः प्रबोधिता पुत्रश्च । तौ निद्रां परित्यज्योपविष्टौ । वीरवरस्तत्सर्वं लक्ष्मीवचनमुक्तवान् । तच्छ्रुत्वा शक्तिधरः सानन्दं ब्रूते । तात को ऽधुना विलम्बः । कदापि तावदेवंविधे कर्मण्येतस्य देहस्य विनियोगः श्लाघ्यः । यतः ।

धनानि जीवितं चैव परार्थे प्राज्ञ उत्सृजेत् ।
सन्निमित्ते वरं त्यागो विनाशे नियते सति ॥

शक्तिधरस्य माता ब्रूते । अस्मत्कुलोचितं यद्येव न कर्तव्यं तदा गृहीतराजवर्तनस्य निस्तारः कथं भविष्यति । इत्यालोच्य सर्वे सर्वमङ्गलायतनं गताः । तत्र सर्वमङ्गलां संपूज्य वीरवरो ब्रूते । देवि प्रसीद । विजयतां शूद्रको महाराजः । गृह्यतामयमुपहारः । इत्युक्त्वा पुत्रस्य शिरश्चिच्छेद । ततो वीरवरश्चिन्तयामास । गृहीतराजवर्तनस्य निस्तारः कृतः । अधुना निष्पुत्रजीवनं विडम्बनम् । इत्यालोच्यात्मनो ऽपि शिरश्चिच्छेद । ततः स्त्रियापि स्वामिनः पुत्रस्य च शोकार्तया तदनुष्ठितम् । एतत्सर्वं श्रुत्वा दृष्ट्वा च राजा साश्चर्यं चिन्तयामास ।

जीवन्ति च म्रियन्ते च मद्विधाः क्षुद्रजन्तवः ।
अनेन सदृशो लोके न भूतो न भविष्यति ॥

एतत्परित्यक्तेन राज्येनापि किं प्रयोजनम् । ततः स्वशिरश्छेत्तुमुल्लासितः खड्गः शूद्रकेणापि । अथ भगवत्या सर्वमङ्गलया प्रत्यक्षभूतया राजा करे धृत उक्तश्च । पुत्र । अलं साहसेन । इदानीं ते राज्यभङ्गो नास्ति । राजा साष्टाङ्गपातं प्रणम्योवाच । देवि न मे राज्येन जीवितेन श्रिया वा प्रयोजनमस्ति । यदि ममानुकम्पा क्रियते तदा ममायुःशेषेणाप्ययं सदारपुत्रो राजपुत्रो जीवतु । अन्यथाहं यथाप्राप्तां गतिं गच्छामि । भगवत्युवाच । अनेन ते सत्त्वोत्कर्षेण भृत्यवात्सल्येन च सर्वथा संतुष्टास्मि । गच्छ । विजयी भव । अयमपि सपरिवारो राजपुत्रो जीवतु । इत्युक्त्वा देव्यदृश्याभवत् । राजा तां प्रणम्यालक्षितश्चलितः । प्रासादगर्भं गत्वा सुप्तः । वीरवरो ऽपि सपुत्रदारः प्राप्तजीवनः स्वगृहं गतः । अथ पुनर्द्वारस्थो

वीरवरो भूपालेन पृष्ट सन्नुवाच । देव सा रुदती स्त्री मामवलोक्या दृश्याभवत् । न काप्यन्या वार्त्ता विद्यते । तद्वचनमाकर्ण्य सतुष्टो राजा साश्चर्य चिन्तयामास । कथमय श्लाघ्यता महासत्त्व । यत ।

प्रिय ब्रूयादकृपण शूर स्यादविकत्थन ।
दाता नापात्रवर्षी स्यात्प्रगल्भ स्यादनिष्ठुर ॥

एतन्महापुरुषलक्षणमेतस्मिन्सर्वमस्ति । तत स राजा प्रात शिष्टप्रभा कृत्वा सर्ववृत्तान्तं प्रस्तुत्य प्रसादात्तस्मै कर्णाटराज्य ददौ ।

---

## 23 24 Die beiden Gänse und die Schildkröte
## Die drei Fische (4, 2 3)

अस्ति मगधदेशे फुल्लोत्पलाभिधान सर । तत्र चिरात्सकटविकटनामानौ हसौ निवसत । तयोर्मित्र कम्बुग्रीवनामा कूर्म प्रतिवसति । अथैकदा धीवरैरागत्य तत्रोक्त यदत्रास्माभिरद्योषित्वा प्रात कूर्ममत्स्यादयो व्यापादयितव्या । तदाकर्ण्य कूर्मो हसावाह । सुहृदौ श्रुतोऽयं धीवरालाप । अधुना कि मया कर्तव्यम् । हसावाहतु । ज्ञायता तावत् । पश्चाद्यदुचितं तत्कर्तव्यम् । कूर्मो ब्रूते । मैव यतो दृष्टव्यतिकरोऽहमत्र । तथा चोक्तम् ।

अनागतविधाता च प्रत्युत्पन्नमतिश्च य ।
द्वावेतौ सुखमेधेते यद्भविष्यो विनश्यति ॥

तावाहतु । कथमेतत् । कूर्म कथयति । पुरैतस्मिन्नेव सरस्येवंविधेष्वेव धीवरेषूपस्थितेषु मत्स्यत्रयेणालोचितम् । तत्रानागतविधाता नामैको मत्स्य । तेनोक्तम् । अह तावज्जलाशयान्तरं गच्छामि । इत्युक्त्वा स ह्रदान्तर गत । अपरेण प्रत्युत्पन्नमतिनाम्ना मत्स्येनाभिहितम् । भाविन्यर्थे प्रमाणाभावात्कुत्र मया गन्तव्यम् । तदुत्पन्ने कार्ये यथाकार्यमनुष्ठेयम् । ततो यद्भविष्येणोक्तम् ।

यद्भावि न तद्भावि भावि चेन्न तदन्यथा ।
इति चिन्ताविषघ्नोऽयमगद किं न पीयते ॥

तत प्रातर्जालेन बद्ध प्रत्युत्पन्नमतिर्मृतवदात्मानं सदर्श्य स्थित । ततो जालादपसारित स्थलादुत्प्लुत्य गभीर नीरं प्रविष्ट । यद्भविष्यश्च धीवरै प्राप्तो व्यापादित । अतोऽहं ब्रवीमि । अनागतविधातेत्यादि ।

तद्यथाहमन्यह्रद प्राप्नोमि तदद्य विधीयताम् । हंसावाहतु । जलाशयान्तरे प्राप्ते तव कुशलम् । स्थले गच्छतस्ते को विधि । कूर्मो ब्रूते । यथाह भवद्भ्या सहाकाशवर्त्मना यामि स उपायो विधीयताम् । हसौ

ब्रूत । कथमुपाय संभवति । कच्छपो वदति । युवाभ्यां चञ्चुधृतं काष्ठमेकं मया मुखेनावलम्बितव्यम् । अतो भवतोः पक्षबलेन मयापि सुखं गन्तव्यम् । हंसौ ब्रूतः । संभवत्येष उपायः । किं त्वावाभ्यां नीयमानं त्वां दृष्ट्वा लोकैः किंचिद्वक्तव्यमेव । तदाकर्ण्य यदि त्वमुत्तरं ददासि तदा तव मरणं भविष्यति । तत्सर्वथात्रैव स्थीयताम् । कूर्मो वदति । किमहमज्ञः । न किमपि मया वक्तव्यम् । तत एवमनुष्ठिते सत्याकाशे नीयमानं तं कूर्ममालोक्य सर्वे गोरक्षकाः पश्चाद्धावन्ति वदन्ति च । अहो महदाश्चर्यम् । पक्षिभ्यां कूर्मः समुह्यते । तत्र कश्चिदाह । यद्ययं कूर्मः पतति तदात्रैव पक्त्वा खादितव्यः । कोऽपि निगदति । गृहं नेतव्यः । कश्चिद्वदति । सरसः समीपे पक्त्वा भक्षितव्यः । तत्परुषवचनमाकर्ण्य स कूर्मः क्रोधाद्विस्मृतसंस्कारोऽवदत् । युष्माभिर्भस्म भक्षितव्यम् । इति वदन्नेव काष्ठात्पतितो गोरक्षकैर्व्यापादितः । अतोऽहं ब्रवीमि ।

सुहृदां हितकामानां न करोतीह यो वचः ।
स कूर्म इव दुर्बुद्धिः काष्ठाद्भ्रष्टो विनश्यति ॥

---

## 25 Der Kaufmann und seine listige Frau (4, 4)

अस्ति विक्रमपुरे समुद्रदत्तो नाम वणिक् । तस्य रत्नप्रभा नाम वधूः केनापि स्वसेवकेन समं सर्वदा रमते । अथैकदा सा रत्नप्रभा तस्य सेवकस्य मुखे चुम्बनं ददती समुद्रदत्तेनालोकिता । ततः सा बन्धकी सत्वरं भर्तुः समीपमुपगम्याह । नाथ । एतस्य सेवकस्य महती निर्वृत्तिर्यतो युष्मदर्थं नीयमानं कर्पूरमश्नाति । कर्पूरगन्धः प्रत्यक्षोऽस्य मुखे मया घ्रातः । तदाकर्ण्य सेवकेनाप्युपक्रुश्योक्तम् । तत्र सेवकेन कथं स्थातव्यं यत्र प्रतिक्षणं गृहिणी सेवकस्य मुखं जिघ्रति । ततोऽसावुत्थाय चलितः । ततोऽसौ साधुना यत्नात्संबोध्य धृतः । अतोऽहं ब्रवीमि ।

उत्पन्नामापदं यस्तु समाधत्ते स बुद्धिमान् ।
वणिजो भार्यया जारः प्रत्यक्षे निह्नुतो यथा ॥

---

## 26 Die Reiher und die Ichneumone (4, 5)

अस्त्युत्तरापथे गृध्रकूटो नाम पर्वतः । तत्रैव रेवातीरे न्यग्रोधपादपे बका निवसन्ति । तस्य वटस्याधस्ताद्विवरे सर्पस्तिष्ठति । स च बकानां बालापत्यानि खादति । ततः शोकार्तानां बकानां प्रलापं श्रुत्वा केन चिद्वृद्धबकेनोक्तम् । भोः । एवं कुरुत यूयम् । मत्स्यानानीय नकुलविवरादारभ्य

सर्पविवरं यावत्पङ्क्तिक्रमेणैकैकशो मत्स्यान्धत्त । ततस्तदाहारवर्त्मना नकुलैरागत्य सर्पो द्रष्टव्यः स्वभावद्वेषाद्व्यापादयितव्यश्च । तथानुष्ठिते सति तद्वृत्तम् । अथ नकुलैर्वृक्षोपरि पक्षिशावकानां रावः श्रुतः । पश्चात्तैर्वृक्षमारुह्य शावकाः सर्व एव खादिताः । अत आवां ब्रूवः ।

उपायं चिन्तयेत्प्राज्ञस्तथापायं च चिन्तयेत् ।
पश्यतो बकमूर्खस्य नकुलैर्भक्षिता बकाः ॥

---

## 27. Der Einsiedler und die Maus (4, 6).

अस्ति गौतमारण्ये महातपा नाम मुनिः । तेनाश्रमसंनिधाने मूषिकशावकः काकमुखाद्भ्रष्टो दृष्टः । ततो दयालुना तेन मुनिना नीवारकणैः स संवर्धितः । तं च मूषिकं खादितुमनुधावन्बिडालो मुनिना दृष्टः । पश्चात्तपःप्रभावात्तेन मुनिना मूषिको बलिष्ठो बिडालः कृतः । स बिडालः कुक्कुराद्बिभेति । ततो ऽसौ कुक्कुरः कृतः । कुक्कुरस्य व्याघ्रान्महद्भयम् । तदनन्तरं स व्याघ्रः कृतः । अथ व्याघ्रमपि तं मूषिकनिर्विशेषं पश्यति मुनिः । अतः सर्वे तत्रस्था जनास्तं व्याघ्रं दृष्ट्वा वदन्ति । अनेन मुनिना मूषिको ऽयं व्याघ्रतां नीतः । एतच्छ्रुत्वा स व्याघ्रः सव्यथो ऽचिन्तयत् । यावदनेन मुनिना जीवितव्यं तावदिदं मम स्वरूपाख्यानमकीर्तिकरं न पलायिष्यते । इति समालोच्य मुनिं हन्तुं समुद्यतः । ततो मुनिना तस्य चिकीर्षितं ज्ञात्वा पुनर्मूषिको भवेत्युक्त्वा मूषिक एव कृतः । अतो ऽहं ब्रवीमि ।

नीचः श्लाघ्यपदं प्राप्य स्वामिनं हन्तुमिच्छति ।
मूषिको व्याघ्रतां प्राप्य मुनिं हन्तुं गतो यथा ॥

---

## 28. Der Reiher und der Krebs (4, 7).

अस्ति मालवविषये पद्मगर्भाभिधानं सरः । तत्रैको वृद्धबकः सामर्थ्यहीनस्तथोद्विग्नमिवात्मानं दर्शयित्वा स्थितः । स च केन चित्कुलीरेण दूरादेव पृष्टः । किमिति भवानाहारपरित्यागेन तिष्ठति । बकेनोक्तम् । मत्स्या मम जीवनहेतवः । ते चावावश्यमेव कैवर्तैर्व्यापादयितव्या इति नगरोपान्ते पर्यालोचना मयाकर्णिता । तदितो वर्तनाभावादस्मन्मरणमुपस्थितम् । इति ज्ञात्वाहमाहारे ऽपि मन्दादरः कृतः । तच्छ्रुत्वा सर्वैर्मत्स्यैरालोचितम् । इह समये तावदुपकारक एवायमुपलक्ष्यते ऽस्माकम् । तदयमेव यथाकर्तव्यं पृच्छ्यताम् । तथा चोक्तम् ।

उपकर्त्रारिणा सधिर्न मित्रेणापकारिणा ।
उपकारापकारौ हि लक्ष्य लक्षणमेतयो ॥

मत्स्या ऊचु । भो बक । अस्माक कुत्र रक्षणोपाय । बको ब्रूते । अस्ति रक्षणहेतुर्जलाशयान्तरम् । तत्राहमेकैकशो युष्मान्नयामि । मत्स्यैरपि भयादुक्तम् । एवमस्तु । ततो ऽसौ दुष्टबकस्तान्मत्स्यानेकैकान्नीत्वा कस्मिंश्चिद्देशे खादित्वा पुनरागत्य वदति । ते मया जलाशयान्तरे स्थापिता । अनन्तर कुलीरस्तमुवाच । भो बक मामपि तत्र नय । ततो बको ऽप्यपूर्वकुलीरमांसार्थी सादर त नीत्वा स्थले धृतवान् । कुलीरो ऽपि मत्स्यकङ्कालाकीर्णा भूमि दृष्ट्वाचिन्तयत् । हा हतो ऽस्मि मन्दभाग्य । भवतु । इदानी समयोचित व्यवहरामि । यत ।

तावद्भयात्तु भेतव्य यावद्भयमनागतम् ।
आगत तु भय दृष्ट्वा प्रहर्तव्यमभीतवत् ॥

अपर च । अयुद्धे हि यदा पश्येन्न कि चिद्धितमात्मन ।
युध्यमानस्तदा प्राज्ञो म्रियते रिपुणा सह ॥

इत्यालोच्य स कुलीरस्तस्य बकस्य ग्रीवा चिच्छेद । स बक पञ्चत्व गत । अतो ऽह ब्रवीमि ।

भक्षयित्वा बहून्मत्स्यानुत्तमाधममध्यमान् ।
अतिलौल्याद्बक कश्चिन्मृत कर्कटकग्रहात् ॥

---

## XIV. Spruche

अकाण्डपातजातानामार्द्राणा मर्मभेदिनाम् ।
गाढशोकप्रहाराणामचिन्तैव महौषधम् ॥ १ ॥
अकिंचन परिपतन्सुखमास्वादयिष्यसि ।
अकिंचन सुख शेते समुत्तिष्ठति चैव ह ॥ २ ॥
अकुलाना कुले भाव कुलीनाना कुलक्षयम् ।
संयोग विप्रयोग च पश्यन्ति चिरजीविन ॥ ३ ॥
अकृतेष्वेव कार्येषु मृत्युर्वै संप्रकर्षति ।
युवैव धर्मशील स्यादनिमित्त हि जीवितम् ॥ ४ ॥

अर्थो प्राप्तं तु पुरुष कर्मान्वेति स्वयंकृतम् ।
तस्मात्तु पुरुषो यत्नाद्धर्मं सचिनुयाच्छनैः ॥ ५ ॥

अचोद्यमानानि यथा पुष्पाणि च फलानि च ।
स्व काल नातिवर्तन्ते तथा कर्म पुराकृतम् ॥ ६ ॥

अज्ञः सुखमाराध्यः सुखतरमाराध्यते विशेषज्ञः ।
ज्ञानलवदुर्विदग्धं ब्रह्मापि नरं न रञ्जयति ॥ ७ ॥

अणुभ्यश्च महद्भ्यश्च शास्त्रेभ्यः कुशलो नरः ।
सर्वतः सारमादद्यात्पुष्पेभ्य इव षट्पदः ॥ ८ ॥

अतिकुपिता अपि सुजना योगेन मृदूभवन्ति न तु नीचाः ।
हेम्नः कठिनस्यापि द्रवणोपायो ऽस्ति न तृणानाम् ॥ ९ ॥

अतिथिर्बालकश्चैव राजा भार्या तथैव च ।
अस्ति नास्ति न जानन्ति देहि देहि पुनः पुनः ॥ १० ॥

अतिमलिने कर्तव्ये भवति खलानामतीव निपुणा धीः ।
तिमिरे हि कौशिकाना रूपं प्रतिपद्यते चक्षुः ॥ ११ ॥

अतिवाद न प्रवदेन्न वादयेद्यो नाहतः प्रतिहन्यान्न घातयेत् ।
हन्तुं च यो नेच्छति पापक वै तस्मै देवाः स्पृहयन्त्यागताय ॥ १२ ॥

अतिसाहसमतिदुष्करमत्याश्चर्यं च दानमर्थानाम् ।
यो ऽपि ददाति शरीर न ददाति स वित्तलेशमपि ॥ १३ ॥

अत्यन्तचञ्चलस्येह पारतन्त्र्य निबन्धने ।
काम विज्ञायते युक्तिर्न स्त्रीचित्तस्य का चन ॥ १४ ॥

अत्यादरो भवेद्यत्र कार्यकारणवर्जितः ।
तत्र शङ्का प्रकर्तव्या परिणामे सुखावहा ॥ १५ ॥

अत्युदात्तगुणेष्वेषा कृतपुण्यैः प्ररोपिता ।
शतशाखी भवत्येव यावन्मात्रापि सत्क्रिया ॥ १६ ॥

अत्येति रजनी या तु सा न प्रतिनिवर्तते ।
यात्येव यमुना पूर्णा समुद्रमुदकार्णवम् ॥ १७ ॥

अथ प्रसन्नेन्दुमुखी सिताम्बरा समाययावुत्पलनीललोचना ।
सपङ्कजा श्रीरिव गां निषेवितुं सहसवालव्यजना शरद्वधूः ॥ १८ ॥

अदर्शने दर्शनमात्रकामा दृष्टौ परिष्वङ्गरसैकलोलाः ।
आलिङ्गितायां पुनरायताक्ष्यामाशास्महे विग्रहयोरभेदम् ॥ १९ ॥

अदृष्टे दर्शनोत्कण्ठा दृष्टे विच्छेदभीरुता ।
नादृष्टेन न दृष्टेन भवता लभ्यते सुखम् ॥ २० ॥

अद्यापि नोज्झति हर किल कालकूट कूर्मो बिभर्ति धरणी खलु पृष्ठभागे ।
अम्भोनिधि सहति दु सहवाडवाग्निमङ्गीकृतं सुकृतिन परिपालयन्ति ॥ २१ ॥

अद्यैव कुरु यच्छ्रेयो मा त्वा कालो ऽत्यगादयम् ।
अकृतेष्वेव कार्येषु मृत्युर्वै संप्रकर्षति ॥ २२ ॥

अध करोति यद्रत्न मूर्ध्ना धारयते तृणम् ।
दोषस्तस्यैव जलधे रत्न रत्न तृणं तृणम् ॥ २३ ॥

अधमं बाधते भूयो दु खवेगो न तूत्तमम् ।
पादद्वय व्रजत्याशु शीतस्पर्शो न चक्षुषी ॥ २४ ॥

अधमा धनमिच्छन्ति धनमानौ च मध्यमा ।
उत्तमा मानमिच्छन्ति मानो हि महता धनम् ॥ २५ ॥

अधर्मेणैधते तावत्ततो भद्राणि पश्यति ।
तत सपत्नाञ्जयति समूलस्तु विनश्यति ॥ २६ ॥

अनधिगतमनोरथस्य पूर्वं शतगुणितेव गता मम त्रियामा ।
यदि तु तव समागमे तथैव प्रसरति सुभ्रु तत कृती भवेयम् ॥ २७ ॥

अनर्थाश्चार्थरूपेण अर्थाश्चानर्थरूपिण ।
अर्थायैव हि केषां चिद्धननाशो भवत्युत ॥ २८ ॥

अनवाप्य च शोकेन शरीर चोपतप्यते ।
अमित्राश्च प्रहृष्यन्ति मा स्म शोके मन कृथा ॥ २९ ॥

अनित्ये प्रियसवासे संसारे चक्रवद्गतौ ।
पथि सगतमेवैतद्भ्राता माता पिता सखा ॥ ३० ॥

अनुकुरुत खलसुजनावग्रिमपाश्चात्यभागयो सूच्या ।
विदधाति रन्ध्रमेको गुणवानन्यस्त्वपिदधाति ॥ ३१ ॥

अनुगन्तु सता वर्त्म कृत्स्नं यदि न शक्यते ।
स्वल्पमप्यनुगन्तव्यं मार्गस्थो नावसीदति ॥ ३२ ॥

अनुबन्धानपेक्षेत सानुबन्धेषु कर्मसु ।
संप्रधार्य च कुर्वीत न वेगेन समाचरेत् ॥ ३३ ॥

अन्यथा चिन्तिता ह्यर्था नरैस्तात मनस्विभि ।
अन्यथैव प्रपद्यन्ते दैवादिति मतिर्मम ॥ ३४ ॥

अन्यथा परिदृष्टानि मुनिभिस्तत्त्वदर्शिभि ।
अन्यथा परिवर्तन्ते वेगा इव नभस्वत ॥ ३५ ॥

अन्यदुप्तं जातमन्यदित्येतन्नोपपद्यते ।
उप्यते यद्धि यद्बीजं तत्तदेव प्ररोहति ॥ ३६ ॥
अन्यान्परिवदन्साधुर्यथा हि परितप्यते ।
तथा परिवदन्नन्यांस्तुष्टो भवति दुर्जनः ॥ ३७ ॥
अन्यो धनं प्रेतगतस्य भुङ्क्ते वयांसि चाग्निश्च शरीरधातून् ।
द्वाभ्यामयं सह गच्छत्यमुत्र पुण्येन पापेन च वेष्ट्यमानः ॥ ३८ ॥
अपकारिषु मा पापं चिन्तयस्व कदा चन ।
स्वयमेव पतिष्यन्ति कूलजाता इव द्रुमाः ॥ ३९ ॥
अपकृत्य बुद्धिमतो दूरस्थो ऽस्मीति नाश्वसेत् ।
दीर्घौ बुद्धिमतो बाहू याभ्यां हिंसति हिंसितः ॥ ४० ॥
अपमानं पुरस्कृत्य मानं कृत्वा तु पृष्ठतः ।
स्वकार्यमुद्धरेत्प्राज्ञः कार्यध्वंसो हि मूर्खता ॥ ४१ ॥
अपूर्वः को ऽपि कोपाग्निः सज्जनस्य खलस्य च ।
एकस्य शाम्यति स्नेहाद्वर्धते ऽन्यस्य वारितः ॥ ४२ ॥
अपूर्वं चौर्यमभ्यस्तं त्वया चञ्चललोचने ।
दिवापि जाग्रतां पुंसां चेतो हरसि दूरतः ॥ ४३ ॥
अप्युन्मत्तात्प्रलपतो बालाच्च परिजल्पतः ।
सर्वतः सारमादद्यादश्मभ्य इव काञ्चनम् ॥ ४४ ॥
अभिशस्तं प्रपश्यन्ति दरिद्रं पार्श्वतः स्थितम् ।
दारिद्र्यं पातकं लोके न तच्छंसितुमर्हति ॥ ४५ ॥
अभ्यावहति कल्याणं विविधं वाक्सुभाषिता ।
सैव दुर्भाषिता राजन्ननर्थायोपपद्यते ॥ ४६ ॥
अभ्रच्छाया तृणादग्निः खलप्रीतिः स्थले जलम् ।
वेश्यारागः कुमित्रं च षडेते बुद्बुदोपमाः ॥ ४७ ॥
अमित्रानपि कुर्वीत मित्राण्युपचयावहान् ।
अहिते वर्तमानानि मित्राण्यपि परित्यजेत् ॥ ४८ ॥
अमीषां प्राणानां तुलितबिसिनीपत्त्रपयसां
कृते किं नास्माभिर्विगलितविवेकैर्व्यवसितम् ।
यदाढ्यानामग्रे द्रविणमदनिःसंज्ञमनसां
कृतं वीतव्रीडैर्निजगुणकथापातकमपि ॥ ४९ ॥

अमृतममृत क सदेहो मधुन्यपि नान्यथा
मधुरमधिक चूतस्यापि प्रसन्नरस फलम् ।
सकृदपि पुनर्मध्यस्थ सन्रसान्तरविज्जनो
वदतु यदिहान्यत्स्वादु स्यात्प्रियारदनच्छदात् ॥ ५० ॥

अमृतस्येव सतृप्येदवमानस्य पण्डित ।
सुख ह्यवमत शेते यो ऽवमन्ता स नश्यति ॥ ५१ ॥

अय पिण्ड इवोत्तप्ते खलाना हृदये बलात् ।
पतिता एव नश्यन्ते गुणास्तोयकणा इव ॥ ५२ ॥

अर्थप्राणविनाशसंशयकरी प्राप्यापद दुस्तरां
प्रत्यासन्नभयो न वेत्ति विभव स्व जीवितं काङ्क्षति ।
उत्तीर्णस्तु ततो धनार्थमपरा भूयो विशत्यापद
प्राणाना च धनस्य चाधमधियामन्योऽन्यहेतु पण ॥ ५३ ॥

अर्थिनस्त्वरितदानेन तृप्तिर्भवति यादृशी ।
बहुदान विलम्बेन न तादृक्तृप्तिकारकम् ॥ ५४ ॥

अर्थिनां मित्रवर्गस्य विद्विषां च पराङ्मुख ।
यो न याति पिता तेन पुत्री माता च वीरसू ॥ ५५ ॥

अलब्धे रागिणो लोका अहो लब्धे विरागिण ।
हेमन्ते तापमीहन्ते हन्त ग्रीष्मे हिमं पुन ॥ ५६ ॥

अलमलमघृणस्य तस्य नाम्ना पुनरपि सैव कथा गत स काल ।
कथय कथय वा तथापि दूति प्रतिवचनं द्विषतो ऽपि माननीयम् ॥ ५७ ॥

अवश्य यातारश्चिरतरमुषित्वापि विषया
वियोगे को भेदस्त्यजति न जनो यत्स्वयममून् ।
व्रजन्त स्वातन्त्र्यादतुलपरितापाय मनस
स्वयंत्यक्तास्त्वेते शमसुखमनन्त विदधति ॥ ५८ ॥

अवश्य निधन सर्वैर्गन्तव्यमिह मानवै ।
अवश्यभाविन्यर्थे वै संतापो नेह विद्यते ॥ ५९ ॥

अव्यये व्ययमायाति व्यये याति सुविस्तरम् ।
अपूर्व को ऽपि भाण्डारस्तव भारति दृश्यते ॥ ६० ॥

अव्याहृतं व्याहृताच्छ्रेय आहु सत्य वदेद्व्याहृत तद्द्वितीयम् ।
धर्मं वदेद्व्याहृतं तत्तृतीयं प्रियं वदेद्व्याहृतं तच्चतुर्थम् ॥ ६१ ॥

अश्नीमहि वयं भिक्षामाशावासो वसीमहि ।
शयीमहि महीपृष्ठे कुर्वीमहि किमीश्वरैः ॥ ६२ ॥
असत्याः परदोषज्ञा गुणज्ञा अपि केचन ।
स्वयमेव स्वदोषज्ञा विद्यन्ते यदि पञ्चषाः ॥ ६३ ॥
असन्तो ऽभ्यर्थिताः सद्भिः क्व चित्कार्ये कदा चन ।
मन्यन्ते सन्तमात्मानमसन्तमपि विश्रुतम् ॥ ६४ ॥
असाराः सन्त्वेते विरतिविरसायासविषयाः
जुगुप्स्यन्तां यद्वा ननु सकलदोषास्पदमिति ।
तथाप्यन्तस्तत्त्वे प्रणिहितधियामप्यतिबल
स्तदीयो ऽनाख्येयः स्फुरति हृदये को ऽपि महिमा ॥ ६५ ॥
अस्माकं सखि वाससी न रुचिरे ग्रैवेयकं नोज्ज्वलं
नो वक्रा गतिरुद्धतं न हसितं नैवास्ति कश्चिन्मदः ।
किं त्वन्ये ऽपि जना वदन्ति सुभगो ऽप्यस्याः प्रियो नान्यतो
दृष्टिं निक्षिपतीति विश्वमियता मन्यामहे दुःस्थितम् ॥ ६६ ॥
अस्या मनोहराकारकबरीभारवर्जिताः ।
लज्जयेव वने वासं चक्रुश्चमरबर्हिणः ॥ ६७ ॥
अहमेव गुरुः सुदारुणानामिति हालाहल मा स्म तात दृप्य ।
ननु सन्ति भवादृशानि भूयो भुवने ऽस्मिन्वचनानि दुर्जनानाम् ॥ ६८ ॥
अहान्यस्तमयान्तानि उदयान्ता च शर्वरी ।
सुखस्यान्तं सदा दुःखं दुःखस्यान्तं सदा सुखम् ॥ ६९ ॥
अहो धार्ष्ट्यमसाधूनां निन्दतामनघाः स्त्रियः ।
मुष्णतामिव चौराणां तिष्ठ चौरेति जल्पताम् ॥ ७० ॥
आकारमात्रविज्ञातसंपादितमनोरथाः ।
धन्यास्ते ये न शृण्वन्ति दीनाः प्रणयिनां गिरः ॥ ७१ ॥
आकिंचन्यं सुखं लोके पथ्यं शिवमनामयम् ।
अनमित्रलाभो ह्येष दुर्लभः सुलभो मतः ॥ ७२ ॥
आकिंचन्ये च राज्ये च विशेषः सुमहानयम् ।
नित्योद्विग्नो हि धनवान्मृत्योरास्यगतो यथा ॥ ७३ ॥
आगच्छन्सूचितो येन येनानीतो गृहं प्रति ।
प्रथमं सखि कः पूज्यः किं काकः किं क्रमेलकः ॥ ७४ ॥

उपाध्यायान्दशाचार्य आचार्याणां शतं पिता ।
सहस्रं तु पितॄन्माता गौरवेणातिरिच्यते ॥ १०२ ॥

उपोढरागेण विलोलतारकं तथा गृहीतं शशिना निशामुखम् ।
यथा समस्तं तिमिरांशुकं तया पुरो ऽपि रागाद्गलितं न लक्षितम् ॥ १०३ ॥

एक एव पदार्थस्तु त्रिधा भवति वीक्षितः ।
कुणपं कामिनी मांसं योगिभिः कामिभिः श्वभिः ॥ १०४ ॥

एकं हन्यान्न वा हन्यादिषुर्मुक्तो धनुष्मता ।
बुद्धिर्बुद्धिमतोत्सृष्टा हन्याद्राष्ट्रं सराजकम् ॥ १०५ ॥

एकः पापानि कुरुते फलं भुङ्क्ते महाजनः ।
भोक्तारो विप्रमुच्यन्ते कर्ता दोषेण लिप्यते ॥ १०६ ॥

एकमपि सतां सुकृतं विकसति तैलं यथा जले न्यस्तम् ।
असतामुपकारशतं संकुचति सुशीतले घृतवत् ॥ १०७ ॥

*एकेन तिष्ठताधस्तादन्येनोपरि तिष्ठता ।*
दातृयाचकयोर्भेदः कराभ्यामेव सूचितः ॥ १०८ ॥

एको ऽहमसहायो ऽहं कृशो ऽहमपरिच्छदः ।
स्वप्ने ऽप्येवंविधा चिन्ता मृगेन्द्रस्य न जायते ॥ १०९ ॥

एको ऽहमस्मीति च मन्यसे त्वं न हृच्छयं वेत्सि मुनिं पुराणम् ।
यो वेदिता कर्मणः पापकस्य तस्यान्तिके त्वं वृजिनं करोषि ॥ ११० ॥

एतत्कामफलं लोके यद्द्वयोरेकचित्तता ।
अन्यचित्तकृते कामे शवयोरिव संगमः ॥ १११ ॥

एते सत्पुरुषाः परार्थघटकाः स्वार्थं परित्यज्य ये
सामान्यास्तु परार्थमुद्यमभृतः स्वार्थाविरोधेन ये ।
ते ऽमी मानुषराक्षसाः परहितं स्वार्थाय विघ्नन्ति ये
ये तु घ्नन्ति निरर्थकं परहितं ते के न जानीमहे ॥ ११२ ॥

और्वा इवातिलुब्धा भवन्ति धनलवणवारिवङ्कतृष्णाः ।
तृणलवमिव निजदेहं त्यजन्ति लेशं न वित्तस्य ॥ ११३ ॥

*कन्या वरयते रूपं माता वित्तं पिता श्रुतम् ।*
बान्धवाः कुलमिच्छन्ति मिष्टान्नमितरे जनाः ॥ ११४ ॥

कं पृच्छामः सुराः स्वर्गे निवसामो वयं भुवि ।
किं वा काव्यरसः स्वादुः किं वा स्वादीयसी सुधा ॥ ११५ ॥

करोति निर्मलाधारस्तुच्छस्याऽपि महार्घताम् ।
अम्बुनो बिन्दुरल्पो ऽपि शुक्तौ मुक्ताफलं भवेत् ॥ ११६ ॥

कवय परितुष्यन्ति नेतरे कविसूक्तिभि ।
नह्यकूपारवत्कूपा वर्धन्ते विधुकान्तिभि ॥ ११७ ॥
कश्चित्पुमान्दिपति मा प्रति रूचवाच सो ऽह चमाभवनमेत्य मुद प्रयामि ।
शोक व्रजामि पुनरेव यतस्तपस्वी चारित्त स्खलितवानिति मन्निमित्तम् ॥ ११८ ॥
काक कृष्ण पिक कृष्ण को भेद पिककाकयो ।
वसन्तसमये प्राप्ते काक काक पिक पिक ॥ ११९ ॥
कान्ते सागसि शायिते प्रियसखीवेष विधायागते
भ्रान्त्यालिङ्ग्य मया रहस्यमुदित तत्सगमाकाङ्क्षया ।
मुग्धे दुष्करमेतदित्यतितरामुक्त्वा सहास बला-
दालिङ्ग्य च्छलितास्मि तेन कितवेनाद्य प्रदोषागमे ॥ १२० ॥
काम वनेषु हरिणास्तृणेन जीवन्त्ययत्नसुलभेन ।
विदधति धनिषु न दैन्य ते किल पशवो वय सुधिय ॥ १२१ ॥
काम कामयमानस्य यदा काम समृध्यते ।
अथैनमपर कामस्तृष्णा विध्यति बाणवत् ॥ १२२ ॥
कारणोत्पन्नकोपो ऽपि साम्प्रत प्रमदाजन ।
निशि शीतापदेशेन गाढमालिङ्गति प्रियम् ॥ १२३ ॥
कालेन कृष्णाश्च सिताश्च रात्र्य कालेन चन्द्र प्रतिपूर्णबिम्ब ।
नाकालत पुष्पफल द्रुमाणा नाकालवेगा सरितो वहन्ति ॥ १२४ ॥
कि करिष्यन्ति वक्तार श्रोता यत्र न विद्यते ।
नग्नक्षपणके देशे रजक कि करिष्यति ॥ १२५ ॥
कि कुलेनोपदिष्टेन शीलमेवात्र कारणम् ।
भवन्ति सुतरा स्फीता सुक्षेत्रे कण्टकिद्रुमा ॥ १२६ ॥
कि नु मे स्यादिद कृत्वा कि नु मे स्यादकुर्वत ।
इति कर्माणि सचिन्त्य कुर्याद्वा पुरुषो न वा ॥ १२७ ॥
कुलीनस्य च या निन्दा वधो वामित्रकर्षण ।
महागुणो वधो राजन्न तु निन्दा कुजीविका ॥ १२८ ॥
कृतोपकार प्रियबन्धुमर्क मा द्राक्ष्म हीनाशुमध पतन्तम् ।
इतीव मत्वा नलिनीवधूभिर्निमीलितान्यम्बुरुहेक्षणानि ॥ १२९ ॥
कृत्वा पाप हि सतप्य तस्मात्पापात्प्रमुच्यते ।
नैव कुर्या पुनरिति निवृत्त्या पूयते तु स ॥ १३० ॥
कृत्वा मानुष्यक कर्म सृत्वाजि यावदुत्तमम् ।
धर्मस्यानृण्यमाप्नोति न चात्मान विगर्हते ॥ १३१ ॥

कृपणेन समो दाता न कश्चिद्भुवि विद्यते ।
अस्पृशन्नेव वित्तानि यः परेभ्यः प्रयच्छति ॥ १३२ ॥
के चिद्वस्तुनि नो वाचि के चिद्वाचि न वस्तुनि ।
वाचि वस्तुनि चाप्यन्ये नान्ये वाचि न वस्तुनि ॥ १३३ ॥
के वा भुवि चिकित्सन्ते रोगार्तान्मृगपक्षिणः ।
श्वापदानि दरिद्रांश्च प्रायो नार्ता भवन्ति ते ॥ १३४ ॥
कैवर्तकर्कशकरग्रहणाच्च्युतो ऽपि जाले पुनर्निपतितः शफरो वराकः ।
जालात्पुनर्विगलितो गिलितो बकेन वामे विधौ बत कुतो व्यसनान्निवृत्तिः ॥ १३५ ॥
कोकिलेन कृतं मौन प्रावृट्काले स्वलज्जया ।
यत्र भेकीपतिर्वक्ता तत्रास्माकं कुतो वचः ॥ १३६ ॥
कोकिलो ऽहं भवान्काकः समानः कालिमावयोः ।
अन्तरं कथयिष्यन्ति काकलीकोविदाः पुनः ॥ १३७ ॥
कोपो यत्र भ्रुकुटिरचना निग्रहो यत्र मौनं
यत्रान्योऽन्यस्मितमनुनयो दृष्टिपातः प्रसादः ।
तस्य प्रेम्णस्तदिदमधुना वैशसं पश्य जातं
त्वं पादान्ते लुठसि न च मे मन्युमोक्षः खलायाः ॥ १३८ ॥
क्रीतान्यतो ऽपि मूल्येन मार्जारः पोष्यते हितः ।
अहितो हन्यते यत्नाद्गृहजातो ऽपि मूषकः ॥ १३९ ॥
क्लीबा हि दैवमेवैकं प्रशंसन्ति न पौरुषम् ।
दैवं पुरुषकारेण घ्नन्ति शूराः सदोद्यमाः ॥ १४० ॥
क्व गन्तासि भ्रातः कृतवसतयो यत्र धनिनः
किमर्थं प्राणानां स्थितिमनुविधातुं कथमपि ।
धनैर्याच्ञालब्धैर्ननु परिभवो ऽभ्यर्थनफलं
निकारो ऽग्रे पश्चाद्धनमहह भोस्तद्धि निधनम् ॥ १४१ ॥
क्व चिद्वीणावादः क्व चिदपि च हा हेति रुदितं
क्व चिद्विद्वद्गोष्ठी क्व चिदपि सुरामत्तकलहः ।
क्व चिद्रम्या रामा क्व चिदपि जराजर्जरतनु-
र्न जाने संसारः किममृतमयः किं विषमयः ॥ १४२ ॥
क्व प्रस्थितासि करभोरु घने निशीथे
प्राणाधिको वसति यत्र जनः प्रियो मे ।
एकाकिनी वद कथं न बिभेषि बाले
नन्वस्ति पुङ्खितशरो मदनः सहायः ॥ १४३ ॥

क्षणं बालो भूत्वा क्षणमपि युवा कामरसिकः
क्षणं वित्तैर्हीनः क्षणमपि च संपूर्णविभवः ।
जराजीर्णैरङ्गैर्नट इव वलीमण्डिततनु-
र्नरः संसारान्ते विशति यमधानीजवनिकाम् ॥ १४४ ॥
क्षपां क्षामीकृत्य प्रसभमपहृत्याम्बु सरितां
प्रताप्योर्वीं कृत्स्नां तरुगहनमुच्छोष्य सकलम् ।
क्व संप्रत्युष्णांशुर्गत इति तदन्वेषणपरा-
स्तडिद्दीपालोका दिशि दिशि चरन्तीव जलदाः ॥ १४५ ॥
क्षान्तिश्चेत्कवचेन किं किमरिभिः क्रोधोऽस्ति चेद्देहिनां
ज्ञातिश्चेदनलेन किं यदि सुहृद्दिव्यौषधैः किं फलम् ।
किं सर्पैर्यदि दुर्जनाः किमु धनैर्विद्यानवद्या यदि
व्रीडा चेत्किमु भूषणैः सुकविता यद्यस्ति राज्येन किम् ॥ १४६ ॥
क्षीरेणात्मगतोदकाय हि गुणा दत्ताः पुरा तेऽखिलाः
क्षीरे तापमवेक्ष्य तेन पयसा स्वात्मा कृशानौ हुतः ।
गन्तुं पावकमुन्मनस्तदभवद्दृष्ट्वा तु मित्रापदं
युक्तं तेन जलेन शाम्यति सतां मैत्री पुनस्त्वीदृशी ॥ १४७ ॥
खलः सर्षपमात्राणि परच्छिद्राणि पश्यति ।
आत्मनो बिल्वमात्राणि पश्यन्नपि न पश्यति ॥ १४८ ॥
खल्वाटो दिवसेश्वरस्य किरणैः संतापितो मस्तके
वाञ्छन्देशमनातपं विधिवशात्तालस्य मूलं गतः ।
तत्राप्यस्य महाफलेन पतता भग्नं सशब्दं शिरः
प्रायो गच्छति यत्र भाग्यरहितस्तत्रैव यान्त्यापदः ॥ १४९ ॥
गच्छेति वक्तुमिच्छामि त्वत्प्रिय मत्प्रियैषिणी ।
निर्गच्छति मुखाद्वाणी मा गा इति करोमि किम् ॥ १५० ॥
गतसारे हि संसारे सुखभ्रान्तिः शरीरिणाम् ।
लालापानमिवाङ्गुष्ठे बालानां स्तन्यविभ्रमः ॥ १५१ ॥
गते हि दुर्दशां लोके क्षुद्रो ऽप्यहितमाचरेत् ।
पङ्के निमग्ने करिणि भेको भवति मूर्धगः ॥ १५२ ।
गरो ऽपि गवि दुग्धं स्याद्दुग्धमप्युरगे विषम् ।
पात्रापात्रविशेषेण तत्पात्रे दानमुत्तमम् ॥ १५३ ॥
गिरयो येन भिद्यन्ते धरा येन विदार्यते ।
सहते पश्य माहात्म्यं तृणैर्वारि निवार्यते ॥ १५४ ॥

गिरौ कलापी गगने पयोदा लक्षान्तरे ऽर्कश्च जलेषु पद्मा ।
इन्दुर्द्विलक्षे कुमुदस्य बन्धुर्यो यस्य मित्रं नहि तस्य दूरम् ॥ १५५ ॥
गुणदोषाववाप्येते पुंसा संशीलनाद्बुधे ।
लेभे पीयूषगरलं मन्थमादम्बुधे सुरै ॥ १५६ ॥
गुणवन्त क्लिश्यन्ते प्रायेण भवन्ति निर्गुणा सुखिन ।
बन्धनमायान्ति शुका यथेष्टसंचारिण काका ॥ १५७ ॥
गुणा कुर्वन्ति दूतत्वं दूरे ऽपि वसतां सताम् ।
केतकीगन्धमाघ्राय स्वयं गच्छन्ति षट्पदा ॥ १५८ ॥
गुणा गुणज्ञेषु गुणा भवन्ति ते निर्गुणं प्राप्य भवन्ति दोषा ।
सुस्वादुतोया प्रभवन्ति नद्य समुद्रमासाद्य भवन्त्यपेया ॥ १५९ ॥
गुणायन्ते दोषा सुजनवदने दुर्जनमुखे
गुणा दोषायन्ते किमिति जगतां विस्मयपदम् ।
यथा जीमूतो ऽयं लवणजलधेर्वारि मधुरं
फणी पीत्वा क्षीरं वमति गरलं दु सहतरम् ॥ १६० ॥
गुणेष्वनादरं भ्रात पूर्णत्वेऽपि मा कृथा ।
*संपूर्णो ऽपि घट कूपे गुणच्छेदात्पतत्यध ॥ १६१ ॥*
गुरोर्यत्र परीवादो निन्दा वापि प्रवर्तते ।
कर्णौ तत्र पिधातव्यौ गन्तव्यं वा ततो ऽन्यत ॥ १६२ ॥
गृहमध्यनिखातेन धनेन धनिनो यदि ।
भवाम किं न तेनैव धनेन धनिनो वयम् ॥ १६३ ॥
गृहे पर्यन्तस्थे द्रविणकणमोषं श्रुतवता
स्ववेश्मन्यारक्षा क्रियत इति मार्गो ऽयमुचित ।
नराम्भेहाद्देहात्प्रतिदिवसमाकृष्य नयत
कृतान्तात्किं शङ्का नहि भवति रे जागृत जना ॥ १६४ ॥
गोशतादपि गोक्षीरं प्रस्थं धान्यशतादपि ।
प्रासादादपि खट्वार्धं शेषा परविभूतय ॥ १६५ ॥
गौरवं प्राप्यते दानान्न तु द्रव्यस्य संग्रहात् ।
स्थितिरुच्चै पयोदानां पयोधीनामध पुन ॥ १६६ ॥
घनोदये शुष्यति यद्यवासको दिनोदये पश्यति यन्न कौशिक ।
महाजने तुष्यति यन्न दुर्जनो वयं न विद्म खलु तत्र कारणम् ॥ १६७ ॥
चतुर सृजता पूर्वमुपायांस्तेन वेधसा ।
न सृष्ट पञ्चम को ऽपि गृह्यन्ते येन योषित ॥ १६८ ॥

चन्दनादपि सभूतो दहत्येव हुताशन ।
विशिष्टकुलजातो ऽपि य खल खल एव स ॥ १६९ ॥

चन्द्र स्वैर विहर गगने प्रेयसी नम्रवक्त्रा
उच्चैर्योक्ति कुरु पिक वने मौनवृत्तिर्यदेया ।
नीलाक्षोज प्रसर सहसा मुद्रिताचीयमस्ति
युष्मद्भाग्य फलितमधुना यद्गृहीतो ऽद्य मान ॥ १७० ॥

चलत्येकेन पादेन तिष्ठत्येकेन बुद्धिमान् ।
नासमीक्ष्य पर स्थानं पूर्वमायतन त्यजेत् ॥ १७१ ॥

चिता चिन्ता द्वयोर्मध्ये चिन्ता नाम गरीयसी ।
चिता दहति निर्जीवं चिन्ता प्राणयुत वपु ॥ १७२ ॥

चित्र नृपद्विपा पूतमूर्तय कीर्तिनिर्झरे ।
भवन्ति व्यसनासक्तिपासुस्नानमलीमसा ॥ १७३ ॥

चिर जीवन्ति नि स्नेहा पृथिव्या वालुकादय ।
सस्नेहा अत्र पीड्यन्ते केवल तिलसर्षपा ॥ १७४ ॥

छिन्नो ऽपि रोहति तरु क्षीणो ऽप्युपचीयते पुनश्चन्द्र ।
इति विमृशन्त सन्त सतप्यन्ते न विधुरेषु ॥ १७५ ॥

ज्ये धरित्र्या पुरमेव सार पुरे गृहं सद्मनि चैकदेश ।
तत्रापि शय्या शयने वरस्त्री रत्नोज्ज्वला राज्यसुखस्य सारम् ॥ १७६ ॥

जरामृत्यू हि भूताना खादितारौ वृकाविव ।
बलिनां दुर्बलाना च ह्रस्वाना महतामपि ॥ १७७ ॥

जलधर निर्लज्जस्त्व यन्मा दयितस्य वेश्म गच्छन्तीम् ।
स्तनितेन भीषयित्वा धाराहस्तै परामृशसि ॥ १७८ ॥

जाड्य ह्रीमति गण्यते व्रतरुचौ दम्भ शुचौ कैतव
शूरे निर्घृणता मुनौ विमतिता दैन्यं प्रियालापिनि ।
तेजस्विन्यवलिप्तता मुखरता वक्तर्यशक्ति स्थिरे
तत्को नाम गुणो भवेत्सुगुणिना यो दुर्जनैर्नाङ्कित ॥ १७९ ॥

जातिस्मराणि नेत्राणि जानन्ति प्रियमप्रियम् ।
प्रिय दृष्ट्वा विकसन्ति सकुचन्त्यप्रिये जने ॥ १८० ॥

जीर्णमन्न प्रशसन्ति भार्यां च गतयौवनाम् ।
शूर विजितसग्रामं गतपारं तपस्विनम् ॥ १८१ ॥

जीर्यन्ति जीर्यत केशा दन्ता जीर्यन्ति जीर्यत ।
चक्षु श्रोत्रे च जीर्यते तृष्णैका न तु जीर्यते ॥ १८२ ॥

जीवन्तो ऽपि मृताः पञ्च श्रूयन्ते किल भारते ।
दरिद्रो व्याधितो मूर्खः प्रवासी नित्यसेवकः ॥ १८३ ॥

ज्ञातिभिर्लुण्ट्यते नैव चौरेणापि न नीयते ।
दाने नैव क्षयं याति विद्यारत्नं महाधनम् ॥ १८४ ॥

ज्ञानं मददर्पहरं माद्यति यस्तेन तस्य को वैद्यः ।
अमृतं यस्य विषायति तस्य चिकित्सा कथं क्रियते ॥ १८५ ॥

टङ्कच्छेदे न मे दुःखं न च दाहे न घर्षणे ।
एतदेव महादुःखं गुञ्जया सह तोलनम् ॥ १८६ ॥

तवैतद्वाचि माधुर्यं जाने कोकिल कृत्रिमम् ।
यैः पोषितो ऽसि तानेव जातपक्षो जहासि यत् ॥ १८७ ॥

तावत्प्रीतिर्भवेल्लोके यावद्दानं प्रदीयते ।
वत्सः क्षीरक्षयं दृष्ट्वा परित्यजति मातरम् ॥ १८८ ॥

तावत्सर्वगुणालयः पटुमतिः साधुः सतां वल्लभः
शूरः सच्चरितः कलङ्कविकलः प्राज्ञः कलाज्ञः कविः ।
दक्षो धर्मरतः कृती कुशलवाक्प्राप्तप्रभावः प्रभु-
र्यावन्निष्ठुरवज्रपातसदृशं देहीति नो भाषते ॥ १८९ ॥

तावदेवामृतमयी यावल्लोचनगोचरा ।
चक्षुःपथादपगता विषादप्यतिरिच्यते ॥ १९० ॥

तीक्ष्णादुद्विजते मृदौ परिभवत्रासान्न संतिष्ठते
मूर्खान्द्वेष्टि न गच्छति प्रणयितामत्यन्तविद्वत्स्वपि ।
शूरेभ्यो ऽप्यधिकं बिभेत्युपहसत्येकान्तभीरूनहो
श्रीर्लब्धप्रसरेव वेशवनिता दुःखोपचर्या भृशम् ॥ १९१ ॥

त्यज्यन्ते दुःखमर्था हि पालने न च ते सुखाः ।
दुःखेन चाधिगम्यन्ते नाशमेषां न चिन्तयेत् ॥ १९२ ॥

त्वं प्रिया चेच्चकोराक्षि स्वर्गलोकसुखेन किम् ।
त्वं प्रिया यदि न स्या मे स्वर्गलोकसुखेन किम् ॥ १९३ ॥

त्वामुदर साधु मन्ये शाकैरपि यदसि लब्धपरितोषम् ।
हतहृदयं ह्यधिकाधिकवाञ्छाशतदुर्भरं न पुनः ॥ १९४ ॥

दम्पत्योर्निशि जल्पतोर्गृहशुकेनाकर्णितं यद्वच-
स्तत्प्रातर्गुरुसंनिधौ निगदतस्तस्यातिमात्रं वधूः ।
कर्णालंकृतिपद्मरागशकलं विन्यस्य चञ्च्वाः पुटे
व्रीडार्ता प्रकरोति दाडिमफलव्याजेन वाग्बन्धनम् ॥ १९५ ॥

दयिताबाहुपाशस्य कुतो ऽयमपरो विधिः ।
जीवयत्यर्पितः कण्ठे मारयत्यपवर्जितः ॥ १९६ ॥
दर्शने स्पर्शने वापि श्रवणे भाषणे ऽपि वा ।
यत्र द्रवत्यन्तरङ्गं स स्नेह इति कथ्यते ॥ १९७ ॥
दातारं कृपणं मन्ये मृतो ऽप्यर्थं न मुञ्चति ।
अदाता पुरुषस्त्यागी स्वधनं त्यक्त्वा गच्छति ॥ १९८ ॥
दानावसरे जलदः श्याममुखो भवति सर्वजनविदितः ।
दत्त्वा नीरं निखिलं भुवने विमलाननो भवति ॥ १९९ ॥
दारिद्र्यमस्य भवता जगतीतलस्य दूरीकृतं विविधदानसमुच्चयेन ।
तन्नः कुटीरमधितिष्ठति दुर्विनीतमात्मीयदोषहरणाय निवेदयामि ॥ २०० ॥
दारिद्र्य शोचामि भवन्तमेवमस्मच्छरीरे सुहृदित्युषित्वा ।
विपन्नदेहे मयि मन्दभाग्ये ममेति चिन्ता क्व गमिष्यसि त्वम् ॥ २०१ ॥
दिनमेकं शशी पूर्णः क्षीणस्तु बहुवासरान् ।
सुखाद्दुःखं सुराणामप्यधिकं का कथा नृणाम् ॥ २०२ ॥
दिवा पश्यति नोलूकः काको नक्तं न पश्यति ।
अपूर्वः को ऽपि कामान्धो दिवानक्तं न पश्यति ॥ २०३ ॥
दुःखाङ्गारकतीव्रः संसारो ऽयं महानसो गहनः ।
इह विषयामिषलालस मानसमार्जार मा निपत ॥ २०४ ॥
दुर्जनः प्रथमं पूज्यः सज्जनस्तदनन्तरम् ।
पादप्रक्षालनं पूर्वं मुखप्रक्षालनं परम् ॥ २०५ ॥
दुर्जनस्य च सर्पस्य वरं सर्पो न दुर्जनः ।
सर्पो दशति कालेन दुर्जनस्तु पदे पदे ॥ २०६ ॥
दुर्जनहुताशतप्तं काव्यसुवर्णं विशुद्धिमायाति ।
श्रावयितव्यं तस्माद्दुष्टजनस्य प्रयत्नेन ॥ २०७ ॥
दूरादेव कृतो ऽञ्जलिर्न तु पुनः पानीयपानोचितो
रूपालोकनकौतुकात्प्रचलितो मूर्धा न शान्त्यै तृषः ।
रोमाञ्चो ऽपि निरन्तरं प्रकटितः प्रीत्या न शैत्यादपा-
मचुक्षो विधिरध्वगेन विहितो वीक्ष्य प्रपापालिकाम् ॥ २०८ ॥
देहीति वक्तुकामस्य यद्दुःखमुपजायते ।
दाता चेत्तद्विजानीयाद्दद्यात्स्वपिशितान्यपि ॥ २०९ ॥
दौर्जन्यमात्मनि परं प्रथितं विधात्रा भूर्जद्रुमस्य विफलत्वसमर्पणेन ।
किं चर्मभिर्निशितशस्त्रशतावकृत्तैराशां न पूरयति सो ऽर्थिपरम्पराणाम् ॥२१०॥

द्वात्रिंशद्दशनद्वेषिमध्ये भ्रमसि नित्यश ।
तदिदं शिक्षिता केन जिह्वे संचारकौशलम् ॥ २११ ॥
धनं तावल्लब्धं कथमपि तथाप्यस्य नियतं
विनाशे नाशे मा तव सति वियोगो ऽस्त्युभयथा ।
अनुत्पाद श्रेयान्किमु कथय पथ्यो ऽथ विलयो
विनाशो लब्धस्य व्यथयतितरां न त्वनुदय ॥ २१२ ॥
धीरं वारिधरस्य वारि किरत श्रुत्वा निशीथे ध्वनिं
दीर्घोच्छ्वाससमुदश्रुणा विरहिणीं बालां चिरं ध्यायता ।
अध्वन्येन विमुक्तकण्ठमखिलां रात्रिं तथा क्रन्दितं
ग्रामीणैर्व्रजतो जनस्य वसतिर्ग्रामे निषिद्धा यथा ॥ २१३ ॥
अचिरं मम तापाय तव यात्रा भविष्यति ।
यदि यास्यसि याहि त्वमलमाशङ्कयात्र ते ॥ २१४ ॥
न टिट्टिभो गच्छति हंसलीलया न वायसो गर्जति कोकिलस्वरम् ।
यथा प्रकीर्णा न भवन्ति शालयस्तथैव नीच प्रकृतिं न मुञ्चति ॥ २१५ ॥
न देवा दण्डमादाय रक्षन्ति पशुपालवत् ।
यं तु रक्षितुमिच्छन्ति बुद्ध्या संविभजन्ति तम् ॥ २१६ ॥
न देवा शस्त्रमादाय निघ्नन्ति रिपुवत्क्रुधा ।
यं तु हिंसितुमिच्छन्ति बुद्ध्या विश्लेषयन्ति तम् ॥ २१७ ॥
नपुंसकमिति ज्ञात्वा प्रियायै प्रेषितं मन ।
तत्तु तत्रैव रमते हता पाणिनिना वयम् ॥ २१८ ॥
नलिनीदलगतजलवत्तरलं तद्वज्जीवनमतिशयचपलम् ।
क्षणमिह सज्जनसंगतिरेका भवति भवार्णवतरणे नौका ॥ २१९ ॥
नाकारणरुषां सख्या सख्याता कारणक्रुध ।
कारणे ऽपि न क्रुध्यन्ति ये ते जगति पञ्चषा ॥ २२० ॥
निवृत्ता भोगेच्छा पुरुषबहुमानो विगलित
समाना स्वर्याता सपदि सुहृदो जीवितसमा ।
शनैर्यष्ट्युत्थानं घनतिमिररुद्धे च नयने
अहो धृष्ट कायस्तदपि मरणापातचकित ॥ २२१ ॥
पङ्गो वन्द्यस्त्वमसि न गृहं यासि यो ऽर्थी परेषां
धन्यो ऽन्ध त्वं धनमदवतां नेक्षसे यन्मुखानि ।
श्लाघ्यो मूक त्वमसि कृपणं स्तौषि नार्थाशया य
श्रोतव्यस्त्वं बधिर न वचो य खलानां शृणोषि ॥ २२२ ॥

पत्त्रं नैव यदा करीरविटपे दोषो वसन्तस्य किं
नोलूको ऽप्यवलोकते यदि दिवा सूर्यस्य किं दूषणम् ।
धारा नैव पतन्ति चातकमुखे मेघस्य किं दूषणं
यत्पूर्वं विधिना ललाटलिखितं तन्मार्जितुं कः क्षमः ॥ २२३ ॥
पत्नीयत्यपि मातरं मदवशात्पत्नीं च माक्षीयति
श्वभ्रीयत्यपि मन्दिरं श्वभ्रबिलं कूपं च गेहीयति ।
स्वल्पं वार्युदधीयतीश्वरमपां मोहात्स्थलीयत्यपि
भिक्षीयत्यपि पार्थिवं किमपरं कुर्यान्न यन्मद्यपः ॥ २२४ ॥
पयोमुचः परीतापं हरन्त्येव शरीरिणाम् ।
नन्वात्मलाभो महतां परदुःखोपशान्तये ॥ २२५ ॥
परलोकहितं तात प्रातरुत्थाय चिन्तय ।
इह ते कर्मणामेव विपाकश्चिन्तयिष्यति ॥ २२६ ॥
परीक्ष्य सत्कुलं विद्यां शीलं शौर्यं सुरूपताम् ।
विधिर्ददाति निपुणः कन्यामिव दरिद्रताम् ॥ २२७ ॥
परीवादस्तथ्यो भवति वितथो वापि महतां
तथाप्युच्चैर्धाम्नां हरति महिमानं जनरवः ।
तुलोत्तीर्णस्यापि प्रकटनिहताशेषतमसो
रवेस्तादृक्तेजो नहि भवति कन्यां गतवतः ॥ २२८ ॥
पद्मन्हतो मन्मथबाणपातैः शक्तो विधातुं न निमील्य चक्षुः ।
ऊरू विधाता हि कृतौ कथं ताविल्यास तस्या सुमतेर्वितर्कः ॥ २२९ ॥
पादौ धूपय मे पत्नी स्वयं भर्त्रा नियोजिता ।
न तया (नतया) धूपितौ पादौ भर्तुराज्ञा न खण्डिता ॥ २३० ॥
पापान्निवारयति योजयते हिताय गुह्यानि गूहति गुणान्प्रकटीकरोति ।
आपद्गतं च न जहाति ददाति काले सन्मित्रलक्षणमिदं प्रवदन्ति सन्तः ॥ २३१ ॥
पुनर्नरो म्रियते जायते च पुनर्नरो हीयते वर्धते च ।
पुनर्नरो याचति याच्यते च पुनर्नरो शोचति शोच्यते च ॥ २३२ ॥
पुरस्तन्व्या गोत्रस्खलनचकितो ऽहं नतमुखः
प्रवृत्तो वैलक्ष्यात्किमपि लिखितुं दैवहतकः ।
स्फुटो रेखान्यासः कथमपि स तादृक्परिणतो
गता येन व्यक्तिं पुनरवयवैः सैव तरुणी ॥ २३३ ॥
पूजनीया महाभागाः पुण्याश्च गृहदीप्तयः ।
स्त्रियः श्रियो गृहस्योक्तास्तस्माद्रक्ष्या विशेषतः ॥ २३४ ॥

पूर्वे वयसि तत्कुर्याद्येन वृद्ध सुखं वसेत् ।
यावज्जीवेन तत्कुर्याद्येन प्रेत्य सुखं वसेत् ॥ २३५ ॥

प्रकटान्यपि नैपुणं महत्परवाच्यानि चिराय गोपितुम् ।
विवरीतुमथात्मनो गुणान्भृशमाकौशलमार्यचेतसाम् ॥ २३६ ॥

प्रत्यक्षे गुरव स्तुत्या परोक्षे मित्रबान्धवा ।
कर्मान्ते दासभृत्याश्च पुत्रा नैव मृता स्त्रिय ॥ २३७ ॥

प्रत्युपकुर्वन्बह्वपि न भाति पूर्वोपकारिणा तुल्य ।
एक करोति हि कृते निष्कारणमेव कुरुते ऽन्य ॥ २३८ ॥

प्रथमवयसि तोयं पीतमल्पं स्मरन्त
शिरसि निहितभारा नारिकेरा नराणाम् ।
उदकममृतकल्पं दद्युराजीवितान्तं
नहि कृतमुपकार साधवो विस्मरन्ति ॥ २३९ ॥

प्रदानं प्रच्छन्नं गृहमुपगते संभ्रमविधि
प्रियं कृत्वा मौनं सदसि कथनं चाप्युपकृते ।
अनुत्सेको लक्ष्म्यामनभिभवगन्धा परकथा
सतां केनोद्दिष्टं विषममसिधाराव्रतमिदम् ॥ २४० ॥

प्राय कन्दुकपातेनोत्पतत्यार्य पतन्नपि ।
तथा त्वनार्य पतति मृत्पिण्डपतनं यथा ॥ २४१ ॥

प्रारभ्यते न खलु विघ्नभयेन नीचै प्रारभ्य विघ्नविहता विरमन्ति मध्या ।
विघ्नै पुन पुनरपि प्रतिहन्यमाना प्रारब्धमुत्तमजना न परित्यजन्ति ॥ २४२ ॥

प्रावरणैरङ्गारैर्गर्भगृहे स्तनतटैश्च दयितानाम् ।
सतर्जितमाघानां निपतति शीत दरिद्रेषु ॥ २४३ ॥

प्रिय प्रजानां दातैव न पुनर्द्रविणेश्वर ।
आगच्छन्वाञ्छितो लोकैर्वारिदो न तु वारिधि ॥ १४४ ॥

प्रियाविरहितस्यास्य हृदि चिन्ता समागता ।
इति मत्वा गता निद्रा के कृतघ्नमुपासते ॥ २४५ ॥

प्रेयान्सो ऽह त्वमपि च मम प्रेयसीति प्रवाद-
स्त्वं मे प्राणा अहमपि तवास्मीति हन्त प्रलाप ।
त्वं मे ते स्यामहमपि च यत्तच्च नो साधु राधे
व्याहारे नौ नहि समुचितो युष्मदस्मत्प्रयोग ॥ २४६ ॥

बन्धनस्थो ऽपि मातङ्ग सहस्रभरणे क्षम ।
अपि स्वच्छन्दचारी श्वा स्वोदरापूरणे ऽक्षम ॥ २४७ ॥

वलीयसा हीनवलो विरोधं न भूतिकामो मनसापि वाञ्छेत् ।
न वध्यते वेतसवृत्तिरत्र व्यक्तं प्रणाशो हि पतङ्गवृत्तेः ॥ २४८ ॥
बाले नाथ विमुञ्च मानिनि रुषं रोषान्मया किं कृतं
खेदो ऽस्मासु न मे ऽपराध्यति भवान्सर्वे ऽपराधा मयि ।
तत्किं रोदिषि गद्गदेन वचसा कस्याग्रतो रुद्यते
नन्वेतन्मम का तवास्मि दयिता नास्मीत्यतो रुद्यते ॥ २४९ ॥
बुद्धिश्रेष्ठानि कर्माणि बाहुमध्यानि भारत ।
तानि जङ्घाजघन्यानि भारप्रत्यवराणि च ॥ २५० ॥
बोधयन्ति न याचन्ते भिक्षाहारा गृहे गृहे ।
याचकस्य प्रदातव्यमदत्तफलमीदृशम् ॥ २५१ ॥
ब्रूते ऽन्यस्याश्रितो ऽप्यार्यो गुणान्दोषांस्तु दुर्जनः ।
तुल्ये ऽप्यमत्ये किं लेखो गच्छत्यूर्ध्वमधो ऽपरः ॥ २५२ ॥
भग्नाशस्य करण्डपीडिततनोर्म्लानेन्द्रियस्य क्षुधा
कृत्वाखुर्विवरं स्वयं निपतितो नक्तं मुखे भोगिनः ।
तृप्तस्तत्पिशितेन सत्वरमसौ तेनैव यातः पथा
स्वस्थास्तिष्ठत दैवमेव हि नृणां वृद्धौ क्षये कारणम् ॥ २५३ ॥
भद्रं कृतं कृतं मौनं कोकिलैर्जलदागमे ।
दर्दुरा यत्र वक्तारस्तत्र मौनं हि शोभनम् ॥ २५४ ॥
भर्ता नाम परं नार्या भूषणं भूषणैर्विना ।
एषा हि रहिता तेन शोभमाना न शोभते ॥ २५५ ॥
भवति हृदयहारी को ऽपि कस्यापि हेतु-
र्न खलु गुणविशेषः प्रेमबन्धप्रयोगे ।
किसलयितवनान्ते कोकिलालापरम्ये
विकसति न वसन्ते मालती को ऽत्र हेतुः ॥ २५६ ॥
भवन्ति नम्रास्तरवः फलोद्गमैर्नवाम्बुभिर्भूरिविलम्बिनो घनाः ।
अनुद्धताः सत्पुरुषाः समृद्धिभिः स्वभाव एवैष परोपकारिणाम् ॥ २५७ ॥
भार्यायां जनितं पुत्रमादर्शेष्विव चाननम् ।
ह्लादते जनिता प्रेक्ष्य स्वर्गं प्राप्येव पुण्यकृत् ॥ २५८ ॥
भिक्षो मांसनिषेवणं प्रकुरुषे किं तेन मद्यं विना
मद्यं चापि तव प्रियं प्रियमहो वाराङ्गनाभिः सह ।
वेश्याप्यर्थरुचिः कुतस्तव धनं द्यूतेन चौर्येण वा
चौर्यद्यूतपरिग्रहो ऽपि भवतो नष्टस्य कान्या गतिः ॥ २५९ ॥

भूर्जं परोपकृतये निजकवचविकर्तनं सहते ।
परबन्धनाय तु शण प्रेक्षध्वमिहान्तरं कीदृक् ॥ २६० ॥
भैषज्यमेतद्दुःखस्य यदेतन्नानुचिन्तयेत् ।
चिन्त्यमानं हि न व्येति भूयश्चापि प्रवर्धते ॥ २६१ ॥
भ्रान्तं याचनतत्परेण मनसा देहीति वाक्प्रेरिता
भुक्तं मानविवर्जितं परगृहे निःशङ्कया काकवत् ।
साक्षेपं भ्रुकुटीकटाक्षकुटिलं दृष्टं खलानां मुखं
तृष्णे देवि यदन्यदिच्छसि पुनस्तत्रापि सज्जा वयम् ॥ २६२ ॥
मन्निन्दया यदि जनः परितोषमेति नन्वप्रयत्नसुलभो ऽयमनुग्रहो मे ।
श्रेयोऽर्थिनो हि पुरुषाः परतुष्टिहेतोर्दुःखार्जितान्यपि धनानि परित्यजन्ति ॥ २६
मन्यन्ते क्ष्माभुजः क्रीडाशुकतानां विमाननाम् ।
यावज्जीवं तु सश्वासं मरणं ता विदन्ति ते ॥ २६४ ॥
मांसखण्डं न सा जिह्वा या न वेत्ति सुभाषितम् ।
नूनं काकभयादेषा मुखान्तरनिवेशिता ॥ २६५ ॥
मालाकारोपमो राजन्भव माङ्गारिकोपमः ।
तथा युक्तश्चिरं राज्यं भोक्तुं शक्ष्यसि पालयन् ॥ २६६ ॥
मितं ददाति हि पिता मितं भ्राता मितं सुतः ।
अमितस्य हि दातारं भर्तारं का न पूजयेत् ॥ २६७ ॥
मितं भुङ्क्ते संविभज्याश्रितेभ्यो मितं स्वपित्यमितं कर्म कृत्वा ।
ददात्यमित्रेष्वपि याचितः संस्तमात्मवन्तं प्रजहत्यनर्थाः ॥ २६८ ॥
मूर्खत्वं सुलभं भजस्व कुमते मूर्खस्य चाष्टौ गुणा
निश्चिन्तो बहुभोजनो ऽतिमुखरो रात्रिंदिवा स्वप्नभाक् ।
कार्याकार्यविचारणादिरहितो मानापमाने समो
दत्त्वा सर्वजनस्य मूर्ध्नि चरणौ मूर्खश्चिरं जीवति ॥ २६९ ॥
मृतं वा यदि वा नष्टं यो ऽतीतमनुशोचति ।
दुःखेन लभते दुःखं द्वावनर्थौ प्रपद्यते ॥ २७० ॥
मृदुना दारुणं हन्ति मृदुना हन्त्यदारुणम् ।
नासाध्यं मृदुना किंचित्तस्मात्तीव्रतरं मृदु ॥ २७१ ॥
मौनान्मूकः प्रवचनपटुर्वातुलो जल्पको वा
धृष्टः पार्श्वे भवति च तथा दूरतश्चाप्रगल्भः ।
क्षान्त्या भीरुर्यदि न सहते प्रायशो नाभिजातः
सेवाधर्मः परमगहनो योगिनामप्यगम्यः ॥ २७२ ॥

यः परिवादे मूकः परदारनिरीक्षणे सदाप्यन्धः ।
पङ्गुः परधनहरणे स जयति लोके महापुरुषः ॥ २७३ ॥

यत्पृथिव्यां व्रीहियवं हिरण्यं पशवः स्त्रियः ।
एकस्यापि न पर्याप्तं तस्मात्तृष्णां परित्यजेत् ॥ २७४ ॥

यत्र स्थित्वोदयं प्राप्तस्तं त्यक्त्वा पूर्वभूभृतम् ।
यो ऽन्यमाश्रयते मूढः सो ऽस्तं याति यथा रविः ॥ २७५ ॥

यथा काष्ठं च काष्ठं च समेयातां महोदधौ ।
समेत्य च व्यपेयातां तद्वद्भूतसमागमः ॥ २७६ ॥

यथा फलानां पक्वानां नान्यत्र पतनाद्भयम् ।
एवं नरस्य जातस्य नान्यत्र मरणाद्भयम् ॥ २७७ ॥

यथा यथा नरो ऽधर्मं स्वयं कृत्वानुभाषते ।
तथा तथा त्वचेवाहिस्तेनाधर्मेण मुच्यते ॥ २७८ ॥

यथैव शृङ्गं गोः काले वर्धमानस्य वर्धते ।
तथैव तृष्णा वित्तेन वर्धमानेन वर्धते ॥ २७९ ॥

यदा प्रकृत्यैव जनस्य रागिणो भृशं प्रदीप्तो हृदि मन्मथानलः ।
तदात्र भूयः किमनर्थपण्डितैः कुकाव्यहव्याहुतयो निवेशिताः ॥ २८० ॥

यदि काको गजेन्द्रस्य विष्ठां कुर्वीत मूर्धनि ।
स स्वभावो हि नीचानां यो गजो गज एव सः ॥ २८१ ॥

यदि नात्मनि पुत्रेषु न चेत्पुत्रेषु नप्तृषु ।
नहि पापं कृतं कर्म सद्यः फलति गौरिव ॥ २८२ ॥

यद्धात्रा निजभालपट्टलिखितं स्तोकं महद्वा धनं
तत्प्राप्नोति मरुस्थले ऽपि नितरां मेरौ च नातो ऽधिकम् ।
तद्धीरो भव वित्तवत्सु कृपणां वृत्तिं वृथा मा कृथाः
कूपे पश्य पयोनिधावपि घटो गृह्णाति तुल्यं जलम् ॥ २८३ ॥

यद्वक्त्रं मुहुरीक्षसे न धनिनां ब्रूषे न चाटून्मृषा
नैषां गर्वगिरः शृणोषि न च तान्प्रत्याशया धावसि ।
काले बालतृणानि खादसि सुखं निद्रासि निद्रागमे
तन्मे ब्रूहि कुरङ्ग कुत्र भवता किंनाम तप्तं तपः ॥ २८४ ॥

यस्य नास्ति निजा प्रज्ञा केवलं तु बहुश्रुतः ।
न स जानाति शास्त्रार्थं दर्वी सूपरसानिव ॥ २८५ ॥

यस्य यद्विहितं धात्रा कर्म नाशाय तस्य तत् ।
पदवीं यत्र तत्रापि धावतो ऽप्यनुधावति ॥ २८६ ॥

य समुत्पतितं क्रोधं निगृह्णाति हय यथा ।
स यन्तेत्युच्यते सद्भिर्नो यो रश्मिषु लम्बते ॥ २८७ ॥

याञ्चाशून्यमयत्नलभ्यमशनं वायु छतो वेधसा
व्यालानां पशवस्तृणाङ्कुरभुज स्रष्टा स्थलीशायिन ।
संसारार्णवलङ्घनक्षमधियां वृत्ति छता सा नृणां
यामन्वेषयतां प्रयान्ति सततं सर्वे समाप्तिं गुणा ॥ २८८ ॥

यादृशं वपते बीजं क्षेत्रमासाद्य कर्षक ।
सुकृतं दुष्कृत वापि तादृशं लभते फलम् ॥ २८९ ॥

याम सुन्दरि याहि पान्थ दयिते शोक वृथा मा छथा
शोकस्ते गमने कुतो मम ततो बाष्पं कथ मुञ्चसि ।
शीघ्रं न व्रजसीति मां गमयितुं कस्मादियं ते त्वरा
भूयानस्य सह त्वया जिगमिषोर्जीवस्य मे संभ्रम ॥ २९० ॥

यावत्स्वस्थमिदं शरीरमरुजं यावज्जरा दूरतो
यावच्चेन्द्रियशक्तिरप्रतिहता यावत्क्षयो नायुष ।
आत्मश्रेयसि तावदेव विदुषा कार्य प्रयत्नो महा
न्संदीप्ते भवने तु कूपखननं प्रत्युद्यम कीदृश ॥ २९१ ॥

युवैव धर्मशील स्यादनित्यं खलु जीवितम् ।
को हि जानाति कस्याद्य मृत्युकालो भविष्यति ॥ २९२ ॥

यूयं वयं वयं यूयमित्यासीन्मतिरावयो ।
किं जातमधुना येन यूय यूयं वय वयम् ॥ २९३ ॥

येन खट्वां समारूढ परितप्येत कर्मणा ।
आदावेव न तत्कुर्यादध्रुवे जीविते सति ॥ २९४ ॥

येनैवाम्बरखण्डेन संवीतो निशि चन्द्रमा ।
तेनैव च दिवा भानुरहो दौर्गत्यमेतयो ॥ २९५ ॥

यो दु ख नाभिजानाति स जल्पति महाजने ।
यस्तु शोचति दु खार्त स कथं वक्तुमुत्सहेत् ॥ २९६ ॥

यो ऽन्यमुखे परिवाद स प्रियवदने परीहास ।
इतरेन्धनजो धूम सो ऽगुरुजातो भवेद्धूप ॥ २९७ ॥

यो मे गर्भगतस्यापि वृत्तिं कल्पितवान्पय ।
शेषवृत्तिविधानेन स किं सुप्तो ऽथ वा मृत ॥ २९८ ॥

योषिता नयनतीक्ष्णसायकैर्भ्रूलतासुदृढचापनिर्गतै ।
धन्विना मकरकेतुना हत कस्य नो पतति हा मनोमृग ॥ २९९ ॥

यो हि दीर्घासिताक्षस्य विलासवलितभ्रुणः ।
कान्तामुखस्यावशगस्तस्मै नृपशवे नमः ॥ ३०० ॥

रथः शरीरं पुरुषस्य दृष्टमात्मा नियन्तेन्द्रियाण्याहुरश्वान् ।
तैरप्रमत्तः कुशली सदश्वैर्दान्तैः सुखं याति रथीव धीरः ॥ ३०१ ॥

राजवत्पञ्च वर्षाणि दश वर्षाणि दासवत् ।
प्राप्ते तु षोडशे वर्षे पुत्रं मित्रवदाचरेत् ॥ ३०२ ॥

रात्रिर्गमिष्यति भविष्यति सुप्रभातं भास्वानुदेष्यति हसिष्यति पङ्कजालम् ।
इत्थं विचिन्तयति कोशगते द्विरेफे हा हन्त हन्त नलिनीं गज उज्जहार ॥ ३०३ ॥

रे दारिद्र्य नमस्तुभ्यं सिद्धो ऽहं त्वत्प्रसादतः ।
जगत्पश्यामि येनाहं न मां पश्यति कश्चन ॥ ३०४ ॥

रोहते सायकैर्विद्धं वनं परशुनाहतम् ।
वाचा दुरुक्तं बीभत्सं न संरोहति वाक्क्षतम् ॥ ३०५ ॥

लब्धानामपि वित्तानां बोद्धव्यौ द्वावतिक्रमौ ।
अपात्रे प्रतिपत्तिश्च पात्रे चाप्रतिपादनम् ॥ ३०६ ॥

लाङ्गूलचालनमधश्चरणावपातं भूमौ निपत्य वदनोदरदर्शनं च ।
श्वा पिण्डदस्य कुरुते गजपुंगवस्तु धीरं विलोकयति चाटुशतैश्च भुङ्क्ते ॥ ३०७ ॥

लोभश्चेदगुणेन किं पिशुनता यद्यस्ति किं पातकैः
सत्यं चेत्तपसा च किं शुचि मनो यद्यस्ति तीर्थेन किम् ।
सौजन्यं यदि किं गुणैः स्वमहिमा यद्यस्ति किं मण्डनैः
सद्विद्या यदि किं धनैरपयशो यद्यस्ति किं मृत्युना ॥ ३०८ ॥

वदन्ती जारवृत्तान्तं पत्यौ धूर्ता सखीधिया ।
पतिं बुद्धा सखि ततः प्रबुद्धास्मीत्यपूरयत् ॥ ३०९ ॥

वरं दारिद्र्यमन्यायप्रभवाद्विभवादिह ।
कृशताभिमता देहे पीनता न तु शोफतः ॥ ३१० ॥

वरमसौ दिवसो न पुनर्निशा ननु निशैव वरं न पुनर्दिवा ।
उभयमेतदुपैत्वथ वा क्षयं प्रियजनेन न यत्र समागमः ॥ ३११ ॥

वस्तुष्वशक्येषु समुद्यमश्चेच्छक्येषु मोहादसमुद्यमश्च ।
शक्येषु काले न समुद्यमश्च त्रिधैव कार्यव्यसनं वदन्ति ॥ ३१२ ॥

वासःखण्डमिदं प्रयच्छ यदि वा स्वाङ्के गृहाणार्भकं
रिक्तं भूतलमत्र नाथ भवतः पृष्ठे पलालोच्चयः ।
दम्पत्योरिति जल्पतोर्निशि यदा चौरः प्रविष्टस्तदा
लब्धं कर्पटमन्यतस्तदुपरि क्षिप्त्वा रुदन्निर्गतः ॥ ३१३ ॥

विद्या विवादाय धन मदाय प्रज्ञाप्रकर्ष परवञ्चनाय ।
अत्युन्नतिर्लोकपराभवाय येषां प्रकाशस्तिमिराय तेषाम् ॥ ३१४ ॥
विद्वानेव विजानाति विद्वज्जनपरिश्रमम् ।
नहि वन्ध्या विजानाति गुर्वीं प्रसववेदनाम् ॥ ३१५ ॥
विसृज्य शूर्पवद्दोषान्गुणान्गृह्णन्ति साधव ।
दोषग्राही गुणत्यागी चालनीव हि दुर्जन ॥ ३१६ ॥
वेपथुर्मलिन वक्त्र दीना वाग्गद्गद स्वर ।
मरणे यानि चिह्नानि तानि चिह्नानि याचके ॥ ३१७ ॥
व्योमनि शम्बाकुरुते चित्र निर्माति यत्नत सलिले ।
स्नपयति पवन सलिलैर्यस्तु खले चरति सत्कारम् ॥ ३१८ ॥
शक्य वारयितु जलेन हुतभुक्छत्रेण सूर्यातपो
नागेन्द्रो निशिताङ्कुशेन समदो दण्डेन गोगर्दभौ ।
व्याधिर्भेषजसंग्रहैश्च विविधैर्मन्त्रप्रयोगैर्विष
सर्वस्यौषधमस्ति शास्त्रविहित मूर्खस्य नास्त्यौषधम् ॥ ३१९ ॥
शत्रवो ज्ञातयश्चैव लाभ पश्यन्ति न व्ययम् ।
आय व्यय च मध्यस्था वयमेव सुहृज्जना ॥ ३२० ॥
शत्रोरपि गुणा ग्राह्या दोषा वाच्या गुरोरपि ।
सर्वथा सर्वयत्नेन पुत्रे शिष्ये हित वदेत् ॥ ३२१ ॥
शरण किं प्रपन्नानि विषवन्मारयन्ति वा ।
न त्यज्यन्ते न भुज्यन्ते कृपणेन धनानि यत् ॥ ३२२ ॥
शुष्ककाष्ठैर्भवेत्कार्यं लोष्टैरपि च पांसुभि ।
न तु स्थानात्परिभ्रष्टै कार्यं स्याद्वसुधाधिपे ॥ ३२३ ॥
श्लाघ्य नीरसकाष्ठताडनशतं श्लाघ्य प्रचण्डातप
क्लेश श्लाघ्यतर सुपङ्कनिचये श्लाघ्यो ऽतिदाहो ऽनले ।
यत्कान्ताकुचपार्श्वबाहुलतिकाहिन्दोललीलासुख
लब्धं कुम्भवर त्वया नहि सुखं दु खैर्विना लभ्यते ॥ ३२४ ॥
श्वेतेन शिरसा वृद्धो नैव वर्षशती भवेत् ।
यस्य बुद्धि परिणत स वै वृद्धतरो नृणाम् ॥ ३२५ ॥
संयोगा विप्रयोगान्ता जातानां प्राणिनां ध्रुवम् ।
बुद्बुदा इव तोयेषु भवन्ति न भवन्ति च ॥ ३२६ ॥
सकृद्दण्डो निपतति सकृत्कन्या प्रदीयते ।
सकृदाह ददानीति त्रीण्येतानि सतां सकृत् ॥ ३२७ ॥

(VS 24, 36) । हिमवतो हस्ती (TS 5, 5, 11, 1) । षष्ठ्यर्थे चतुर्थी वक्तव्या । या खर्वेण पिबति तस्यै खर्वो जायते (TS 2, 5, 1, 7; hier ohne जायते) । या दतो धावते तस्यै श्यावदन् (ebend) । या नखानि निकृन्तते तस्यै कुनखी (*ebend*) । याङ्क्ते तस्यै काणः (*ebend*) । याभ्यङ्क्ते तस्यै दुश्चर्मा (ebend) । या प्रलिखते तस्यै खलतिः (ebend) । अहल्यायै जारः (Śat Br 3, 3, 4, 18) ।

यजेश्च करणे । ६३ ।

यजेर्धातोः करणे कारके छन्दसि बहुलं षष्ठी विभक्तिर्भवति । घृतस्य यजते । घृतेन यजते । सोमस्य यजते । सोमेन यजते ।

कृत्वोऽर्थप्रयोगे काले ऽधिकरणे । ६४ ।

छन्दसि बहुलमिति निवृत्तम् । कृत्वोऽर्थानां प्रत्ययानां प्रयोगे काले ऽधिकरणे षष्ठी विभक्तिर्भवति । पञ्चकृत्वो ऽह्नो भुङ्क्ते । द्विरह्नो ऽधीते । कृत्वोऽर्थग्रहणं किम् । अह्नि शेते । रात्रौ शेते । प्रयोगग्रहणं किम् । अहनि भुक्तम् । गम्यते हि द्विस्त्रिश्चतुर्वेति । न त्वप्रयुज्यमाने भवति । कालग्रहण किम् । द्विः कांस्यपात्र्यां भुङ्क्ते । अधिकरण इति किम् । द्विरह्ना भुङ्क्ते । शेष इत्येव । द्विरह्न्यधीते ।

कर्तृकर्मणोः कृति । ६५ ।

कृत्प्रत्ययप्रयोगे कर्तरि कर्मणि च षष्ठी विभक्तिर्भवति । भवतः शायिका । भवत आसिका । कर्मणि । अपां स्रष्टा । पुरा भेत्ता । वज्रस्य भर्ता । कर्तृकर्मणोरिति किम् । शस्त्रेण भेत्ता । कृतीति किम् । तद्धितप्रयोगे मा भूत् । कृतपूर्वी कटम् । भुक्तपूर्व्योदनम् । शेष इति निवृत्तं पुनः कर्मग्रहणात् । इतरथा हि कर्तरि च कृतीति ब्रूयात् ।

उभयप्राप्तौ कर्मणि । ६६ ।

पूर्वेण षष्ठी प्राप्ता नियम्यते । उभयप्राप्ताविति बहुव्रीहि । उभयोः प्राप्तिर्यस्मिन्कृति सो ऽयमुभयप्राप्तिः । तत्र कर्मण्येव षष्ठी विभक्तिर्भवति न कर्तरि । आश्चर्यो गवां दोहो ऽगोपालेन । रोचते म ओदनस्य भोजनं देवदत्तेन । साधु खलु पयसः पानं यज्ञदत्तेन । बहुव्रीहिविज्ञानादिह नियमो न भवति । आश्चर्यमिदं वृत्तमोदनस्य च नाम पाको ब्राह्मणानां च प्रादुर्भाव इति । अकाकारयोः स्त्रीप्रत्यययोः प्रयोगे नेति वक्तव्यम् । भेदिका देवदत्तस्य काष्ठानाम् । चिकीर्षा देवदत्तस्य कटस्य । शेषे विभाषा । अकाकारयोः स्त्रीप्रत्यययोर्ग्रहणात्तदपेक्षया शेषः स्त्रीप्रत्यय एव गृह्यते । विचित्रा हि सूत्रस्य कृतिः पाणिनेः पाणिनिना वा । केचिदविशेषेणैव विभाषामिच्छन्ति । शब्दानामनुशासनमाचार्येण आचार्यस्येति वा ।

क्तस्य च वर्तमाने । ६७ ।

न लोकाव्ययनिष्ठेति (६९) प्रतिषेधे प्राप्ते पुन षष्ठी विधीयते । क्तस्य वर्तमानकालविहितस्य प्रयोगे षष्ठी विभक्तिर्भवति । राज्ञा मत । राज्ञां बुद्ध । राज्ञां पूजित । क्तस्येति किम् । ओदनं पचमान । वर्तमान इति किम् । ग्राम गत । नपुंसके भाव उपसंख्यानम् । छात्रस्य हसितम् । मयूरस्य नृत्तम् । कोकिलस्य व्याहृतम् । शेषविज्ञानात्सिद्धम् (५०) । तथा च कर्तृविवक्षायां तृतीयापि भवति । छात्रेण हसितमिति ।

अधिकरणवाचिनश्च । ६८ ।

क्तो ऽधिकरणे चेति (३ । ४ । ७६) वक्ष्यति । तस्य प्रयोगे षष्ठी विभक्तिर्भवति । अयमपि प्रतिषेधापवादो योग । इदमेषामासितम् । इदमेषा शयितम् । इदमहे सृप्तम् । इद धनकर्पर्यातम् । इदमेषा भुक्तम् । इदमेषामशितम् । द्विकर्मकाणा प्रयोगे कर्तरि क्त इति द्वयोरपि षष्ठी द्वितीयावत् । नेताश्वस्य ग्रामस्य चैत्र । अन्ये प्रधाने कर्मण्याहु । तदा नेता श्वस्य ग्राम चैत्र ।

न लोकाव्ययनिष्ठाखलर्थतृनाम् । ६९ ।

कर्तृकर्मणो कृतीति (६५) षष्ठी प्राप्ता प्रतिषिध्यते । ल उ उक अव्यय निष्ठा खलर्थ तृन् इत्येतेषां प्रयोगे षष्ठी विभक्तिर्न भवति । ल इति शतृशानचौ कानच्क्वसू किकिनौ च गृह्यन्ते । ओदन पचन् । ओदनं पचमान । ओदन पेचान । ओदनं पेचिवान् । पपि सोमम् । ददिर्गा । उ । कट चिकीर्षु । ओदनं बुभुक्षु । कन्यामलंकरिष्णु । इष्णुचो ऽपि प्रयोगे निषेध । उक । आगामुकं वाराणसी रक्ष आहु । उकप्रतिषेधे कमेर्भाषायामप्रतिषेध । दास्या कामुक । अव्यय । कट कृत्वा । ओदनं भुक्त्वा । अव्ययप्रतिषेधे तोसुन्कसुनोरप्रतिषेध । पुरा सूर्यस्योदेतोराधेय । पुरा क्रूरस्य विसृपो विरप्शिन् (VS 1, 28) । निष्ठा । ओदन भुक्तवान् । देवदत्तेन कृतम् । खलर्थ । ईषत्कर कटो भवता । ईषत्पान सोमो भवता । तृन्निति प्रत्याहारग्रहणम् । लट शतृशानचावित्यारभ्य आ तृनो नकारात् (३ । २ । १२४—१३५) । तेन शानन्चानश्शतृतृनामपि प्रतिषेधो भवति । सोमं पवमान । नटमाघ्नान । अधीयन्पारायणम् । कर्ता कटान् । वदिता जनापवादान् । द्विष शतुर्वावचनम् । चौर द्विषन् । चौरस्य द्विषन् ।

अकेनोर्भविष्यदाधमर्ण्ययो । ७० ।

अकस्य भविष्यति काले विहितस्येनस्तु भविष्यति चाधमर्ण्ये च विहितस्य प्रयोगे षष्ठी विभक्तिर्न भवति । कटं कारको व्रजति । ओदनं भोजको व्रजति । इन खल्वपि । ग्रामं गमी । ग्रामं गामी । आधमर्ण्ये । शतं

दायी । भविष्यदाधमर्ण्ययोरिति किम् । यवानां लावक । सक्तूनां पायक । अवश्यंकारी कटस्य । इह कस्मान्न भवति । वर्षशतस्य पूरक । पुत्रपौत्राणां दर्शक इति । भविष्यदधिकारे विहितस्याकस्येदं ग्रहणम् ।

कृत्यानां कर्तरि वा । ७१ ।

कर्तृकर्मणो कृतीति (६५) नित्यं षष्ठी प्राप्ता कर्तरि विकल्प्यते । कृत्यानां प्रयोगे कर्तरि वा षष्ठी विभक्तिर्भवति । भवता कट कर्तव्य । भवत कट कर्तव्य । कर्तरीति किम् । गेयो माणवक साम्नाम् । उभयप्राप्तौ कृत्ये षष्ठ्या प्रतिषेधो वक्तव्य । कृष्टव्या ग्रामं शाखा देवदत्तेन । नेतव्या ग्रामं मजा देवदत्तेन ।

तुल्यार्थैरतुलोपमाभ्यां तृतीयान्यतरस्याम् । ७२ ।

तुल्यार्थैं शब्दैर्योगे तृतीया विभक्तिर्भवत्यन्यतरस्याम् । पक्षे षष्ठी च । तुलोपमाशब्दौ वर्जयित्वा । शेषविषये तृतीयाविधानात्तया मुक्ते षष्ठ्येव भवति । तुल्यो देवदत्तेन । तुल्यो देवदत्तस्य । सदृशो देवदत्तेन । सदृशो देवदत्तस्य । अतुलोपमाभ्यामिति किम् । तुला देवदत्तस्य नास्ति । उपमा कृष्णस्य न विद्यते । वेति वर्तमाने ऽन्यतरस्यांग्रहणमुत्तरसूत्रे तस्य चकारेणानुकर्षणार्थम् । इतरथा हि तृतीयानुकृष्येत ।

चतुर्थी चाशिष्यायुष्यमद्रभद्रकुशलसुखार्थहितैः । ७३ ।

आशिषि गम्यमानायाम् आयुष्य मद्र भद्र कुशल सुख अर्थ हित इत्येतैर्योगे चतुर्थी विभक्तिर्भवति । चकारो विकल्पानुकर्षणार्थ । शेषे चतुर्थीविधानात्तया मुक्ते षष्ठी विभक्तिर्भवति । अत्रायुष्यादीनां पर्यायग्रहणं कर्तव्यम् । आयुष्यं देवदत्ताय भूयात् । आयुष्यं देवदत्तस्य भूयात् । चिरं जीवितं देवदत्ताय देवदत्तस्य वा भूयात् । मद्रं देवदत्ताय भूयात् । मद्रं देवदत्तस्य । भद्रं देवदत्ताय । भद्रं देवदत्तस्य । कुशलं देवदत्ताय । कुशलं देवदत्तस्य । निरामयं देवदत्ताय । निरामयं देवदत्तस्य । सुखं देवदत्ताय । सुखं देवदत्तस्य । शं देवदत्ताय । शं देवदत्तस्य । अर्थो देवदत्ताय । अर्थो देवदत्तस्य । प्रयोजनं देवदत्ताय । प्रयोजनं देवदत्तस्य । हितं देवदत्ताय । हितं देवदत्तस्य । पथ्यं देवदत्ताय । पथ्यं देवदत्तस्य । आशिषीति किम् । आयुष्यं देवदत्तस्य तप ।

---

## 2. Über den Gebrauch der Praeterita.

छन्दसि लिट् (sc भूते) । पा॰ ३ । २ । १०५ । Im Veda steht das Perfektum (im Sinne der Vergangenheit) Kaśikā भूत इत्येव । छन्दसि

विषये धातोर्लिट्प्रत्ययो भवति । अहं सूर्यमुभयतो ददर्श (VS 8, 9) । अह द्यावा पृथिवी आ ततान ।

लिटः कानज्वा । १०६ । (Im Veda) kann an die Stelle des Perfektum auch das Partizipium auf आन treten Kāśikā छन्दसि लिटः कानजादेशो भवति वा । अग्निं चिक्यानः । सोमं सुषुवाणः । वरुण सुषुवाणः । न च भवति । अहं सूर्यमुभयतो ददर्श । अह द्यावा पृथिवी आ ततान ।

क्वसुश्च । १०७ । Auch das Partizipium auf वस्. Kāśikā छन्दसि लिटः क्वसुरादेशो भवति । जक्षिवान् । पपिवान् । न च भवति । अहं सूर्यमुभयतो ददर्श । योगविभाग उत्तरार्थः । (Sūtra 106 und 107 mußten getrennt werden, weil im folgenden Sūtra nur क्वसु zu ergänzen ist.)

भाषायां सदवसश्रुवः । १०८ । In der Umgangssprache (kann) bei सद्, वस् und श्रु (das Partizipium auf वंस् an die Stelle des Perfektum treten) Kāśikā सद् वस श्रु इत्येतेभ्यः परस्य लिटो भाषायां विषये वा क्वसुरादेशो भवति । आदेशविधानादेव लिडपि तद्विषयो ऽनुमीयते । उपसेदिवान्कौत्सः पाणिनिम् । तेन मुक्ते यथाप्राप्तं प्रत्यया भवन्ति । उपासदत् । उपासीदत् । उपससाद । अनूषिवान्कौत्स पाणिनिम् । अन्ववात्सीत् । अन्ववसत् । अनूवास । उपशुश्रुवान्कौत्सः पाणिनिम् । उपाश्रौषीत् । उपाशृणोत् । उपशुश्राव । लुङ्लिङ्विषये परस्तादनुवृत्तेः क्वसुर्भवति ।

उपेयिवाननाश्वाननूचानश्च । १०९ । Auch उपेयिवान्, अनाश्वान् und अनूचान gehören hierher (Diese drei Partizipia werden ihrer unregelmäßigen Bildung wegen besonders aufgeführt.)

लुङ् । ११० । (Allgemeine Regel) Der Aorist steht (wenn etwas Vergangenes gemeint ist) Mahābh वसेर्लुङ् रात्रिशेषे (ein Vārttika) । वसेर्लुङ् रात्रिशेष इति वक्तव्यम् । न्याय्ये प्रत्युत्थाने प्रत्युत्थितं कश्चित्कंचित्पृच्छति । क्व भवानुषित इति । स आह । अमुत्रावात्समिति । अमुत्रावसमिति प्राप्नोति (dieses hätte man nach dem folgenden Sūtra erwartet, weil nicht vom selben Tage die Rede geht) । जागरणसंततौ (ein Vārttika) । जागरणसंतताविति च वक्तव्यम् । यो हि मुहूर्तमात्रमपि स्वपिति तत्रावसमिति प्राप्नोति (nach dem folgenden Sūtra) ।

अनद्यतने लङ् । १११ । (Erste Ausnahme) Die hinter dem Heute gelegene Vergangenheit bezeichnet das Imperfektum. Mahābh. अन-

यतन इति बहुव्रीहिनिर्देशः । अद्य ह्यो ऽभुञ्ज्महि (ein Vārttika) । अनद्यतन इति बहुव्रीहिनिर्देशः कर्तव्यः । अविद्यमानाद्यतनो ऽनद्यतन इति । किं प्रयोजनम् । अद्य ह्यो वाभुञ्ज्महीति । अद्य च ह्यश्चाभुञ्ज्महीति व्यामिश्रे न लुङेव यथा स्यात् । परोक्षे च लोकविज्ञाते प्रयोक्तुर्दर्शनविषये (ein Vārttika) । परोक्षे च लोकविज्ञाते प्रयोक्तुर्दर्शनविषये लङ् वक्तव्यः । अरुणद्यवनः साकेतम् । अरुणद्यवनो माध्यमिकान् (bei dieser allgemein bekannten Begebenheit ist der Sprechende zwar nicht dabei gewesen, hätte es aber sein können Nach Sūtra 115 hätte man das Perfektum erwartet) । परोक्ष इति किमर्थम् । उदगादादित्य. (der Sprechende hat dieses selbst gesehen) । लोकविज्ञात इति किमर्थम् । चकार कटं देवदत्तः (der Sprechende hätte dieses wohl selbst sehen können, hat es aber nicht gesehen, ebensowenig ist die Sache allgemein bekannt) । प्रयोक्तुर्दर्शनविषय इति किमर्थम् । जघान कंसं किल वासुदेव. । (die Sache ist wohl allgemein bekannt, aber der Sprechende hat es nicht gesehen und auch nicht sehen können)

अभिज्ञावचने लृट् । ११२ । (Ausnahme zu 111) In Verbindung mit einem Verbum in der Bedeutung „daran denken, sich erinnern" steht (in diesem Fall) das Futurum auf स्य. Kāśikā अभिज्ञा स्मृति । तद्वचन उपपदे भूतानद्यतने लृट्प्रत्ययो भवति । लङो ऽपवादः । अभिजानासि देवदत्त कश्मीरेषु वत्स्यामः । वचनग्रहणं पर्यायार्थम् । अभिजानासि स्मरसि बुध्यसे चेतयस इति ।

न यदि । ११३ । Wenn यद् dabei steht, (लृट्) nicht (das Futurum auf स्य gesetzt, sondern das Imperfektum nach 111) Kāśikā यच्छब्दसहिते ऽभिज्ञावचन उपपदे लृट्प्रत्ययो न भवति । पूर्वेण (sc सूत्रेण) प्राप्तः प्रतिषिध्यते । अभिजानासि देवदत्त यत्कश्मीरेष्ववसाम । वासमात्रं स्मर्यते । न त्वपरं किं चिल्लक्ष्यते । तेनोत्तरसूत्रस्यायं विषयः ।

विभाषा साकाङ्क्षे । ११४ । Nach Belieben (Futurum oder Imperfektum), wenn (der Satz noch) eine Ergänzung Mahābh किमुदाहरणम् । अभिजानासि देवदत्त कश्मीरेषु वत्स्यामस्तत्र सक्तून्पास्यामः । अभिजानासि देवदत्त कश्मीरेष्ववसाम तत्र सक्तूनपिबाम । भवेत् । पूर्वं परमाकाङ्क्षतीति साकाङ्क्षं स्यात् । परं तु कथं साकाङ्क्षम् । परमपि साकाङ्क्षम् । कथम् । अस्त्यस्मिन्नाकाङ्क्षेत्यत साकाङ्क्षम् । विभाषा साकाङ्क्षे सर्वत्र (ein Vārttika) । विभाषा साकाङ्क्षे सर्वत्रेति [illegible] सर्वत्र ।

यदि चायदि च (vgl. 113) । यदि तावत् । अभिजानासि देवदत्त यत्कश्मीरान्गमिष्यामः । यत्कश्मीरानगच्छाम । यत्तत्रौदनं भोक्ष्यामहे । यत्तत्रौदनमभुञ्ज्महि । अयदि । अभिजानासि देवदत्त कश्मीरान्गमिष्यामः । कश्मीरानगच्छाम । तत्रौदनं भोक्ष्यामहे । तत्रौदनमभुञ्ज्महि ।

परोक्षे लिट् । ११५ । (Zweite Ausnahme zu 111) Das Perfektum (bezeichnet eine vor dem Heute vergangene Handlung), bei der man nicht zugegen war Mahābh कथंजातीयक पुनः परोक्षं नाम । के तावदाहुः । वर्षशतवृत्तं परोक्षमिति । अपर आहुः । वर्षसहस्रवृत्तं वमिति । अपर आहुः । कुड्यकटान्तरितं परोक्षमिति । अपर आहुः । न्त्र्यहवृत्तं वेति । सर्वथोत्तमो न सिध्यति (weil die erste Person, die Etwas von sich aussagt, stets dabei gewesen ist) । सुप्तमत्तयोरुत्तम इति वक्तव्यम् । सुप्तो ऽहं नलाप । मत्तो ऽहं किल विललाप । सुप्तो न्वहं किल विललाप । हं किल विललाप । अथ भवति वै । कश्चिज्जाग्रदपि वर्तमानं लभते । तद्यथा । वैयाकरणानां शाकटायनो राजमार्गे आसीनः यान्तं नोपलेभे । किं पुनः कारणं कश्चिज्जाग्रदपि वर्तमानं कालं मनसा प्रयुक्तानीन्द्रियाण्युपलब्धौ कारणानि भवन्ति । मनसो । परोक्षे लिडत्यन्तापह्नवे च (ein Vārttika) । परोक्षे तापह्नवे चेति वक्तव्यम् । Beispiele aus der Kāsikā कलिङ्गेषु असि । नाहं कलिङ्गाञ्जगाम (ich bin nie nach Kaliṅga gegangen) दक्षिणापथं प्रविष्टो ऽसि । नाहं दक्षिणापथं प्रविवेश ।

ह च । ११६ । Wenn ह und शश्वत् dabei stehen, kann Perfektum gesetzt werden Beispiele aus dem Mahābh. । इति ह चकार । शश्वदकरोत् । शश्वच्चकार ।

अकाले । ११७ । Desgleichen in einer Frage, wenn es sich um die nächste Vergangenheit handelt Kāśikā कश्चित्कं चित्पृच्छति । अगाम देवदत्त । अयजद्देवदत्तः । इयाज । भवान्वा इति किम् । जगाम देवदत्तः । आसन्नकाल इति किम् । अ । जघान कंसं किल वासुदेवः ।

। ११८ । In Verbindung mit स्म wird das Präsens gesetzt.

उपपदे लट्प्रत्ययो भवति । एवं स्म पिता ब्रवीति । इति स्मोपाध्यायः कथयति ।

ननौ पृष्टप्रतिवचने । १२० । Bei ननु steht (trotz der Vergangenheit das Präsens), wenn auf eine Frage geantwortet wird. Kāśikā अनद्यतने (111) परोक्षे (115) इति निवृत्तम् । भूतसामान्ये विधिरयम् । ननुशब्द उपपदे प्रश्नपूर्वके प्रतिवचने भूते ऽर्थे लट्प्रत्ययो भवति । लुङो (110) ऽपवादः । अकार्षीः कटं देवदत्त । ननु करोमि भोः । अवोचस्तत्र किंचिद्देवदत्त । ननु ब्रवीमि भोः । पृष्टप्रतिवचन इति किम् । नन्वकार्षीन्माणवकः ।

नन्वोर्विभाषा । १२१ । Bei न und नु nach Belieben (Präsens oder Aorist) Kāśikā भूत इत्येव । नशब्दे नुशब्दे चोपपदे पृष्टप्रतिवचने विभाषा लट्प्रत्ययो भवति भूते । अकार्षीः कटं देवदत्त । न करोमि भोः । नाकार्षम् । अहं नु करोमि । अहं न्वकार्षम् ।

पुरि लुङ् चास्मे । १२२ । Bei पुरा ohne स्म kann auch der Aorist gesetzt werden Kāśikā अनद्यतनग्रहणमिह मण्डूकप्लुत्यानुवर्तते (aus 111) । पुराशब्द उपपदे स्मशब्दवर्जिते भूतानद्यतने ऽर्थे विभाषा लुङ्प्रत्ययो भवति लट् च । ताभ्यां मुक्ते पक्षे यथाविषयमन्ये ऽपि प्रत्यया भवन्ति । वसन्तीह पुरा छात्राः । अवात्सुरिह पुरा छात्राः । अवसन्निह पुरा छात्राः । ऊषुरिह पुरा छात्राः । अस्म इति किम् । नलेन स्म पुराधीयते । Das Mahābh. führt nur für das Präsens und den Aorist Beispiele an रथेनाय पुरा याति । रथेनायं पुरायासीत् । Ebendaselbst wird für die Kraft des स्म, das auch über ह und शश्वत् (116) den Sieg davonträgt, folgendes Beispiel gegeben न ह स्म वै पुरा शश्वदग्निरपरशुवृक्णं दहति (TS 5, 1, 10, 1) ।

आशंसायां भूतवच्च । ३ । ३ । १३२ । Bei einem Wunsche (kann die Zukunft wie Gegenwart) und Vergangenheit (behandelt werden, d. h. außer dem Futurum auf स्य können auch der Aorist und das Präsens *stehen, indem aus dem vorhergehenden Sūtra* वर्तमानवत् *zu ergänzen* ist) Mahābh आशंसा नाम भविष्यत्काला । आशंसायां भूतवदतिदेशे लङ्लिटोः प्रतिषेधः (ein Vārttika) । आशंसायां भूतवदतिदेशे लङ्लिटोः प्रतिषेधो वक्तव्यः । न वापवादस्य निमित्ताभावात् । अनद्यतने हि तयोर्विधानम् (vgl 3, 1, 111 115) । न वा वक्तव्यः (sc. लङ्लिटोः प्रतिषेधः) । किं कारणम् । अपवादस्य निमित्ताभावात् । नापवादस्य

निमित्तमस्ति । कथम् । अनद्यतने हि तयोर्विधानम् । अनद्यतने हि तौ विधीयेते लङ्लिटौ । न चात्रानद्यतनः कालो विवक्षितः । कस्तर्हि । भूतकालसामान्यम् । In den folgenden Beispielen aus der Kāsikā wird auch das als Verbum finitum fungierende Partizipium prät. für erlaubt gehalten उपाध्यायश्चेदागमत् (oder आगतः, आगच्छति, आगमिष्यति) एते व्याकरणमध्यगीष्महि (oder अधीतवन्तः, अधीमहे, अध्येष्यामहे) । Wenn der Lehrer käme, möchten wir hier Grammatik studieren.

क्षिप्रवचने लृट् । १३३ । Steht (in einem solchen Falle) ein Wort in der Bedeutung von „bald" dabei, so wird das Futurum auf स्य gebraucht. Beispiel aus dem Mahābh. उपाध्यायश्चेदागतः क्षिप्रमध्येष्यामहे ।

आशंसावचने लिङ् । १३४ । Steht ein Wort in der Bedeutung von „wünschen" dabei, so wird der Potentialis gebraucht. Beispiel aus dem Mahābh. उपाध्यायश्चेदागत आशंसे युक्तो ऽधीयीय । Ebenso, wenn क्षिप्रम् hinzugefügt wird. Zu 132 gehört das im Mahābh. unter 134 mitgeteilte Vārttika, welches mit der Erklärung und mit einer Zurückweisung folgendermaßen lautet अनिष्पन्ने निष्पन्नशब्दः शिष्यो ऽनिष्पन्नत्वात् । अनिष्पन्ने निष्पन्नशब्दः शिष्य शासितव्य । किं कारणम् । अनिष्पन्नत्वात् । देवश्चेद्वृष्टो निष्पन्नाः शालय (wenn es geregnet hätte, wäre der Reis reif geworden) । तत्र भवितव्यम् । संपत्स्यन्ते शालय इति ॥ सिद्धं तु भविष्यत्प्रतिषेधात् । सिद्धमेतत् । कथम् । भविष्यत्प्रतिषेधात् । यल्लोके भविष्यद्वाचिनः शब्दस्य प्रयोग न मृष्यति । कश्चिदाह । देवश्चेद्वृष्टः संपत्स्यन्ते शालय इति । स उच्यते । मैव वोचः । संपन्नाः शालय इत्येव ब्रूहि ।

नानद्यतनवत्क्रियाप्रबन्धसामीप्ययोः । १३५ । Wenn von der beständigen Fortdauer einer Handlung oder von einer nahen Vergangenheit oder Zukunft die Rede ist, (werden Vergangenheit und Zukunft) nicht, wie 3, 2, 111 3, 15 gelehrt worden ist, (durch das Imperfektum und das zweite Futurum ausgedrückt, sondern durch den Aorist und das erste Futurum) Kāsikā भूतानद्यतने भविष्यदनद्यतने च लङ्लुटौ विहितौ । तयोरयं प्रतिषेध । अनद्यतनवत्प्रत्ययविधिर्न भवति क्रियाप्रबन्धे सामीप्ये च गम्यमाने । क्रियाया प्रबन्धः सातत्येनानुष्ठानम् । कालाना सामीप्य तुल्यजातीयेनाव्यवधानम् । यावज्जीव भृशमन्नमदात् । भृशमन्न दास्यति । यावज्जीवं पुत्रो ऽध्यापिपत् । यावज्जीवमध्यापयिष्यति । सामीप्ये खल्वपि ।

चेयं पौर्णमास्यतिक्रान्ता एतस्यामुपाध्यायो ऽग्नीनाधित । सोमेनायष्ट । गामदित । येयममावास्यागामिनी एतस्यामुपाध्यायो ऽग्नीनाधास्यते । सोमेन यक्ष्यते । गां दास्यते । द्वौ प्रतिषेधौ (das न und das negierende अनद्यतनवत् im Sutra) यथाप्राप्तस्याभ्यनुज्ञापनाय ।

माङि लुङ् । १७५ । Bei der Prohibitivpartikel मा wird der Aorist gesetzt

स्मोत्तरे लङ् च । १७६ । Folgt (auf मा) noch स्म auch das Imperfektum

न माङ्योगे । ६ । ४ । ७४ । (Das Augment) wird nicht angefügt in der Verbindung mit der Prohibitivpartikel मा

---

# XXI. Amarakośa

## 1 Anzug und darauf Bezugliches (2, 6, 3, 1–41)

आकल्पवेषौ नेपथ्यं प्रतिकर्म प्रसाधनम् ।
दशैते त्रिष्वलंकर्तालंकरिष्णुश्च मण्डित ॥ १ ॥
प्रसाधितो ऽलंकृतश्च भूषितश्च परिष्कृत ।
विभ्राड् भ्राजिष्णुरोचिष्णू भूषणं स्यादलंक्रिया ॥ २ ॥
अलंकारस्त्वाभरणं परिष्कारो विभूषणम् ।
मण्डनं चाथ मुकुटं किरीटं पुंनपुंसकम् ॥ ३ ॥
चूडामणि शिरोरत्नं तरलो हारमध्यग ।
वालपाश्या पारितथ्या पत्त्रपाश्या ललाटिका ॥ ४ ॥
कर्णिका तालपत्त्रं स्यात्कुण्डलं कर्णवेष्टनम् ।
ग्रैवेयकं कण्ठभूषा लम्बनं स्यात्प्रलम्बिका ॥ ५ ॥
स्वर्णैः प्रालम्बिकाथोरःसूत्रिका मौक्तिकैः कृता ।
हारो मुक्तावली देवच्छन्दो ऽसौ शतयष्टिक ॥ ६ ॥
हारभेदा यष्टिभेदा गुच्छगुच्छार्धगोस्तना ।
अर्धहारो माणवक एकावल्येकयष्टिका ॥ ७ ॥
सैव नक्षत्रमाला स्यात्सप्तविंशतिमौक्तिकैः ।
आवापकः पारिहार्यः कटको वलयो ऽस्त्रियाम् ॥ ८ ॥

केयूरमङ्गदं तुल्ये अङ्गुलीयकमूर्मिका ।
साक्षराङ्गुलिमुद्रा सा कङ्कणं करभूषणम् ॥ ९ ॥
स्त्रीकट्यां मेखला काञ्ची सप्तकी रशना तथा ।
क्लीबे सारसनं चाथ पुंस्कट्यां शृङ्खलं त्रिषु ॥ १० ॥
पादाङ्गदं तुलाकोटिर्मञ्जीरो नूपुरोऽस्त्रियाम् ।
हंसकः पादकटकः किङ्किणी क्षुद्रघण्टिका ॥ ११ ॥
त्वक्फलकृमिरोमाणि वस्त्रयोनिर्दश त्रिषु ।
वाल्कं क्षौमादि फालं तु कार्पासं बादरं च तत् ॥ १२ ॥
कौशेयं कृमिकोशोत्थं राङ्कवं मृगरोमजम् ।
अनाहतं निष्प्रवाणि तन्त्रकं च नवाम्बरम् ॥ १३ ॥
तत्स्यादुद्गमनीयं यद्धौतयोर्वस्त्रयोर्युगम् ।
पत्त्रोर्णं धौतकौशेयं बहुमूल्यं महाधनम् ॥ १४ ॥
क्षौमं दुकूलं स्याद्द्वे तु निवीतं प्रावृतं त्रिषु ।
स्त्रियां बहुत्वे वस्त्रस्य दशाः स्युर्वस्तयो द्वयोः ॥ १५ ॥
दैर्घ्यमायाम आरोहः परिणाहो विशालता ।
पटच्चरं जीर्णवस्त्रं समौ नक्तककर्पटौ ॥ १६ ॥
वस्त्रमाच्छादनं वासश्चैलं वसनमंशुकम् ।
सुचेलकः पटोऽस्त्री स्याद्वराशिः स्थूलशाटकः ॥ १७ ॥
निचोलः प्रच्छदपटः समौ रल्लककम्बलौ ।
अन्तरीयोपसंव्यानपरिधानान्यधोंऽशुके ॥ १८ ॥
द्वौ प्रावारोत्तरासङ्गौ समौ बृहतिका तथा ।
संव्यानमुत्तरीयं च चोलः कूर्पासकः स्त्रियाम् ॥ १९ ॥
नीशारः स्यात्प्रावरणे हिमानिलनिवारणे ।
अर्धोरुकं वरस्त्रीणां स्याच्चण्डातकमंशुकम् ॥ २० ॥
स्यात्त्रिष्वाप्रपदीनं तत्प्राप्नोत्याप्रपदं हि यत् ।
अस्त्री वितानमुल्लोचो दूष्याद्यं वस्त्रवेश्मनि ॥ २१ ॥
प्रतिसीरा जवनिका स्यात्तिरस्करिणी च सा ।
परिकर्माङ्गसंस्कारः स्यान्मार्ष्टिर्मार्जना मृजा ॥ २२ ॥
उद्वर्तनोत्सादने द्वे समे आप्लाव आप्लवः ।
स्नानं चर्चा तु चार्चिक्यं स्थासकोऽथ प्रबोधनम् ॥ २३ ॥
अनुबोधः पत्त्रलेखा पत्त्राङ्गुलिरिमे समे ।
तमालपत्त्रतिलकचित्रकाणि विशेषकम् ॥ २४ ॥

द्वितीयं च तुरीयं च न स्त्रियामथ कुङ्कुमम् ।
काश्मीरजन्माग्निशिखं वरं बाल्हीकपीतने ॥ २५ ॥
रक्तसंकोचपिशुनं धीरं लोहितचन्दनम् ।
लाक्षा राक्षा जतु क्लीबे यावो ऽलक्तो द्रुमामयः ॥ २६ ॥
लवङ्गं देवकुसुमं श्रीसंज्ञमथ जायकम् ।
कालीयकं च कालानुसार्यं चाथ समार्थकम् ॥ २७ ॥
वंशिकागुरुराजार्हलोहं क्रिमिजजोङ्गकम् ।
कालागुर्वगुरु स्यात्तन्मङ्गल्या मल्लिगन्धि यत् ॥ २८ ॥
यक्षधूपः सर्जरसो ऽरालसर्वरसावपि ।
बहुरूपो ऽप्यथ वृकधूपकृत्रिमधूपकौ ॥ २९ ॥
तुरुष्कः पिण्डकः सिल्हो यावनो ऽप्यथ पायसः ।
श्रीवासो वृकधूपो ऽपि श्रीवेष्टसरलद्रवौ ॥ ३० ॥
मृगनाभिर्मृगमदः कस्तूरी चाथ कोलकम् ।
कक्कोलकं कोशफलमथ कर्पूरमस्त्रियाम् ॥ ३१ ॥
घनसारश्चन्द्रसंज्ञः सिताभ्रो हिमवालुका ।
गन्धसारो मलयजो भद्रश्रीश्चन्दनो ऽस्त्रियाम् ॥ ३२ ॥
तैलपर्णिकगोशीर्षे हरिचन्दनमस्त्रियाम् ।
तिलपर्णी तु पत्राङ्गं रञ्जनं रक्तचन्दनम् ॥ ३३ ॥
कुचन्दनं चाथ जातीकोशजातीफले समे ।
कर्पूरागुरुकस्तूरीकक्कोलैर्यक्षकर्दमः ॥ ३४ ॥
गात्रानुलेपनी वर्तिर्वर्णकं स्याद्विलेपनम् ।
चूर्णानि वासयोगाः स्युर्भावितं पुंनपुंसकम् ॥ ३ । ८ । ३५ ॥
संस्कारो गन्धमाल्याद्यैर्यः स्यात्तदधिवासनम् ।
माल्यं मालास्रजौ मूर्ध्नि केशमध्ये तु गर्भकः ।
प्रभ्रष्टकं शिखालम्बि पुरोन्यस्तं ललामकम् ।
प्रालम्बमृजुलम्बि स्यात्कण्ठाद्वैकक्षकं तु तत् ॥
यत्तिर्यक्क्षिप्तमुरसि शिखास्वापीडशेखरौ ।
रचना स्यात्परिस्पन्द आभोगः परिपूर्णता ॥

प्रसाधनी कङ्कतिका पिष्टातः पटवासकः ।
दर्पणे मुकुरादर्शौ व्यजनं तालवृन्तकम् ॥ ४१ ॥

---

## 2. Auf ण auslautende Wörter mit ihren Bedeutungen (3, 4, 13, 48—59).

भ्रूणोऽर्भके स्त्रैणगर्भे बाणो बलिसुते शरे ।
कणोऽतिसूक्ष्मे धान्यांशे संघाते प्रमथे गणः ॥ ४८ ॥
पणो द्यूतादिषूत्सृष्टे भृतौ मूल्ये धनेऽपि च ।
मौर्व्यां द्रव्याश्रिते सत्त्वशुक्लसंध्यादिके गुणः ॥ ४९ ॥
निर्व्यापारस्थितौ कालविशेषोत्सवयोः क्षणः ।
वर्णो द्विजादौ शुक्लादौ स्तुतौ वर्णं तु वाक्षरे ॥ ५० ॥
अरुणो भास्करेऽपि स्याद्वर्णभेदेऽपि च त्रिषु ।
स्थाणुः शर्वेऽप्यथ द्रोणः काकेऽपि च रवे रणः ॥ ५१ ॥
ग्रामणीर्नापिते पुंसि श्रेष्ठे ग्रामाधिपे त्रिषु ।
ऊर्णा मेषादिलोम्नि स्यादावर्ते चान्तरा भ्रुवो ॥ ५२ ॥
हरिणी स्यान्मृगी हेमप्रतिमा हरिता च या ।
त्रिषु पाण्डौ च हरिणः स्थूणा स्तम्भेऽपि वेश्मनः ॥ ५३ ॥
तृष्णे स्पृहापिपासे द्वे जुगुप्साकरुणे घृणे ।
वणिक्पथेऽपि विपणिः सुरा प्रत्यक्च वारुणी ॥ ५४ ॥
करेणुरिभ्यां स्त्री नेभे द्रविणं तु बलं धनम् ।
शरणं गृहरक्षित्रोः श्रीपर्णं कमलेऽपि च ॥ ५५ ॥
विषाभिमरलोहेषु तीक्ष्णं क्लीबे खरे त्रिषु ।
प्रमाणं हेतुमर्यादाशास्त्रेयत्ताप्रमातृषु ॥ ५६ ॥
करणं साधकतमं क्षेत्रगात्रेन्द्रियेष्वपि ।
प्राण्युत्पादे संसरणमसंबाधचमूगतौ ॥ ५७ ॥
घण्टापथेऽथ वान्तान्ने समुद्गिरणमुन्नये ।
अतस्त्रिषु विषाणं स्यात्पशुशृङ्गेभदन्तयोः ॥ ५८ ॥
प्रवणं क्रमनिम्नोर्व्यां प्रह्वे ना तु चतुष्पथे ।
संकीर्णौ निचिताशुद्धावीरिणं शून्यमूषरम् ॥ ५९ ॥

# XXII. Kāvyādarśa.

## Upamā und Rūpaka (2, 14—96)

यथा कथं चित्सादृश्यं यत्रोद्भूतं प्रतीयते ।
उपमा नाम सा तस्याः प्रपञ्चो ऽयं निदर्श्यते ॥ १४ ॥
अम्भोरुहमिवाताम्रं मुग्धे करतलं तव ।
इति धर्मोपमा साक्षात्तुल्यधर्मप्रदर्शनात् ॥ १५ ॥
राजीवमिव ते वक्त्रं नेत्रे नीलोत्पले इव ।
इयं प्रतीयमानैकधर्मा वस्तूपमैव सा ॥ १६ ॥
त्वदाननमिवोन्निद्रमरविन्दमभूदिति ।
सा प्रसिद्धिविपर्यासाद्विपर्यासोपमेष्यते ॥ १७ ॥
तवाननमिवाम्भोजमम्भोजमिव ते मुखम् ।
इत्यन्यो ऽन्योपमा सेयमन्यो ऽन्योत्कर्षशंसिनी ॥ १८ ॥
त्वन्मुखं कमलेनैव तुल्यं नान्येन केन चित् ।
इत्यन्यसाम्यव्यावृत्तेरियं सा नियमोपमा ॥ १९ ॥
पद्मं तावत्तवान्वेति मुखमन्यच्च तादृशम् ।
अस्ति चेदस्तु तत्कारीत्यसावनियमोपमा ॥ २० ॥
समुच्चयोपमाप्यस्ति न कान्त्यैव मुखं तव ।
ह्लादनाख्येन चान्वेति कर्मणेन्दुमितीदृशी ॥ २१ ॥
त्वय्येव त्वन्मुखं दृष्टं दृश्यते दिवि चन्द्रमा. ।
इयत्येव भिदा नान्येत्यसावतिशयोपमा ॥ २२ ॥
मय्येवास्या मुखश्रीरित्यलमिन्दोर्विकत्थनै. ।
पद्मे ऽपि सा यदस्त्येवेत्यसावुत्प्रेक्षितोपमा ॥ २३ ॥
यदि किं चिद्भवेत्पद्मं सुभ्रु विभ्रान्तलोचनम् ।
तत्ते मुखश्रियं धत्तामित्यसावद्भुतोपमा ॥ २४ ॥
शशीत्युत्प्रेक्ष्य तन्वङ्गि त्वन्मुखं त्वन्मुखाशया ।
इन्दुमप्यनुधावामीत्येषा मोहोपमा स्मृता ॥ २५ ॥
किं पद्ममन्तर्भ्रान्तालि किं ते लोलेक्षणं मुखम् ।
मम दोलायते चित्तमितीयं संशयोपमा ॥ २६ ॥
न पद्मस्येन्दुनिग्राह्यस्येन्दुलज्जाकरी द्युति ।
अतस्त्वन्मुखमेवेदमित्यसौ निर्णयोपमा ॥ २७ ॥
शिशिरांशुप्रतिस्पर्धि श्रीमत्सुरभिगन्धि च ।
अम्भोजमिव ते वक्त्रमिति श्लेषोपमा स्मृता ॥ २८ ॥

सरूपशब्दवाच्यत्वात्सा समानोपमा यथा ।
बालेवोद्यानमालेयं सालकाननशोभिनी ॥ २९ ॥
पद्मं बहुरजश्चन्द्रः क्षयी ताभ्यां तवाननम् ।
समानमपि सोत्सेकमिति निन्दोपमा स्मृता ॥ ३० ॥
ब्रह्मणोऽप्युद्भवः पद्मं चन्द्रः शंभुशिरोधृतः ।
तौ तुल्यौ त्वन्मुखेनेति सा प्रशंसोपमोच्यते ॥ ३१ ॥
चन्द्रेण त्वन्मुखं तुल्यमित्याचिख्यासु मे मनः ।
स गुणो वास्तु दोषो वेत्याचिख्यासोपमा विदुः ॥ ३२ ॥
शतपत्रं शरच्चन्द्रस्त्वदाननमिति त्रयम् ।
परस्परविरोधीति सा विरोधोपमा मता ॥ ३३ ॥
न जातु शक्तिरिन्दोस्ते मुखेन प्रतिगर्जितुम् ।
कलङ्किनो जडस्येति प्रतिषेधोपमैव सा ॥ ३४ ॥
मृगेक्षणाङ्कं ते वक्त्रं मृगेणैवाङ्कितः शशी ।
तथापि सम एवासौ नोत्कर्षीति चटूपमा ॥ ३५ ॥
न पद्मं मुखमेवेदं न भृङ्गौ चक्षुषी इमे ।
इति विस्पष्टसादृश्यात्तत्त्वाख्यानोपमैव सा ॥ ३६ ॥
चन्द्रारविन्दयोः कान्तिमतिक्रम्य मुखं तव ।
आत्मनैवाभवत्तुल्यमित्यसाधारणोपमा ॥ ३७ ॥
सर्वपद्मप्रभासारः समाहृत इव क्वचित् ।
त्वदाननं विभातीति तामभूतोपमां विदुः ॥ ३८ ॥
चन्द्रबिम्बादिव विषं चन्दनादिव पावकः ।
परुषा वागितो वक्त्रादित्यसंभावितोपमा ॥ ३९ ॥
चन्दनोदकचन्द्रांशुचन्द्रकान्तादिशीतलः ।
स्पर्शस्तवेत्यतिशयं बोधयन्ती बहूपमा ॥ ४० ॥
चन्द्रबिम्बादिवोत्कीर्णं पद्मगर्भादिवोद्धृतम् ।
तव तन्वङ्गि वदनमित्यसौ विक्रियोपमा ॥ ४१ ॥
पूष्ण्यातप इवाह्नीव पूषा व्योम्नीव वासरः ।
विक्रमस्त्वय्यधाल्लक्ष्मीमिति मालोपमा मता ॥ ४२ ॥
वाक्यार्थेनैव वाक्यार्थः कोऽपि यद्युपमीयते ।
एकानेकेवशब्दत्वात्सा वाक्यार्थोपमा द्विधा ॥ ४३ ॥
त्वदाननमधीराक्षमाविर्दशनदीधिति ।
भ्रमद्भृङ्गमिवालक्ष्यकेसरं भाति पङ्कजम् ॥ ४४ ॥

नलिन्या इव तन्वङ्ग्यास्तस्या पद्ममिवाननम् ।
मया मधुव्रतेनेव पाय पायमरम्यत ॥ ४५ ॥
वस्तु किं चिदुपन्यस्य न्यसनात्तत्सधर्मण ।
साम्यप्रतीतिरस्तीति प्रतिवस्तूपमा यथा ॥ ४६ ॥
नैको ऽपि त्वादृशो ऽद्यापि जायमानेषु राजसु ।
ननु द्वितीयो नास्त्येव पारिजातस्य पादप ॥ ४७ ॥
अधिकेन समीकृत्य हीनमेकक्रियाविधौ ।
यद्ब्रुवन्ति स्मृता सेयं तुल्ययोगोपमा यथा ॥ ४८ ॥
दिवो जागर्ति रक्षायै पुलोमारिर्भुवो भवान् ।
असुरास्तेन हन्यन्ते सावलेपास्त्वया नृपा ॥ ४९ ॥
कान्त्या चन्द्रमसं धाम्ना सूर्यं धैर्येण चार्णवम् ।
राजन्ननुकरोषीति सैषा हेतूपमा मता ॥ ५० ॥
न लिङ्गवचने भिन्ने न हीनाधिकतापि वा ।
उपमादूषणायालं यत्रोद्वेगो न धीमताम् ॥ ५१ ॥
स्त्रीव गच्छति षण्ढो ऽय वक्त्येषा स्त्री पुमानिव ।
प्राणा इव प्रियो ऽय मे विद्या धनमिवार्जिता ॥ ५२ ॥
भवानिव महीपाल देवराजो विराजते ।
अलमंशुमत कक्षामारोढु तेजसा नृप ॥ ५३ ॥
इत्येवमादौ सौभाग्य न जहात्येव जातु चित् ।
अस्त्येव क्व चिदुद्वेग प्रयोगे वाग्विदा यथा ॥ ५४ ॥
हसीव धवलश्चन्द्र सरासीवामल नभ ।
भर्तृभक्तो भट श्वेव खद्योतो भाति भानुवत् ॥ ५५ ॥
ईदृश वर्ज्यते सद्भि कारणं तत्र चिन्त्यताम् ।
गुणदोषविचाराय स्वयमेव मनीषिभि ॥ ५६ ॥
इववद्वायथाशब्दा समाननिभसंनिभा ।
तुल्यसंकाशनीकाशप्रकाशप्रतिरूपका ॥ ५७ ॥
प्रतिपक्षप्रतिद्वन्द्विप्रत्यनीकविरोधिन ।
सदृक्सदृशसंवादिसजातीयानुवादिन ॥ ५८ ॥
प्रतिबिम्बप्रतिच्छन्दसरूपसमसंमिता ।
सलक्षणसदृक्षाभसपक्षोपमितोपमा ॥ ५९ ॥
कल्पदेशीयदेश्यादि प्रख्यप्रतिनिधी अपि ।
सवर्णतुलितौ शब्दौ ये चान्यूनार्थवादिन ॥ ६० ॥

समासश्च बहुव्रीहिः शशाङ्कवदनादिषु ।
स्पर्धते जयति द्वेष्टि द्रुह्यति प्रतिगर्जति ॥ ६१ ॥
आक्रोशत्यवजानाति कदर्थयति निन्दति ।
विडम्बयति संधत्ते हसतीर्ष्यत्यसूयति ॥ ६२ ॥
तस्य मुष्णाति सौभाग्यं तस्य कान्तिं विलुम्पति ।
तेन सार्धं विगृह्णाति तुलां तेनाधिरोहति ॥ ६३ ॥
तत्पदव्यां पदं धत्ते तस्य कक्षां विगाहते ।
तमन्वेत्यनुबध्नाति तच्छीलं तन्निषेधति ॥ ६४ ॥
तस्य चानुकरोतीति शब्दाः सादृश्यसूचकाः ।
उपमायामिमे प्रोक्ताः कवीनां बुद्धिसौख्यदाः ॥ ६५ ॥
उपमैव तिरोभूतभेदा रूपकमुच्यते ।
यथा बाहुलता पाणिपद्मं चरणपल्लवः ॥ ६६ ॥
अङ्गुल्यः पल्लवान्यासन्कुसुमानि नखार्चिषः ।
बाहू लते वसन्तश्रीस्त्वं नः प्रत्यक्षचारिणी ॥ ६७ ॥
इत्येतदसमस्ताख्यं समस्तं पूर्वरूपकम् ।
स्मितं मुखेन्दोर्ज्योत्स्नेति समस्तव्यस्तरूपकम् ॥ ६८ ॥
ताम्राङ्गुलिदलश्रेणि नखदीधितिकेसरम् ।
ध्रियते मूर्ध्नि भूपालैर्भवच्चरणपङ्कजम् ॥ ६९ ॥
अङ्गुल्यादौ दलादित्वं पादे चारोप्य पद्मताम् ।
तद्योग्यस्थानविन्यासादेतत्सकलरूपकम् ॥ ७० ॥
अकस्मादेव ते चण्डि स्फुरिताधरपल्लवम् ।
मुखं मुक्तारुचो धत्ते घर्माम्भःकणमञ्जरीः ॥ ७१ ॥
मञ्जरीकृत्य घर्माम्भः पल्लवीकृत्य चाधरम् ।
नान्यथा कृतमत्रास्यमतोऽवयवरूपकम् ॥ ७२ ॥
वल्गितभ्रु गलद्धर्मजलमालोहितेक्षणम् ।
विवृणोति मदावस्थामिदं वदनपङ्कजम् ॥ ७३ ॥
अविकृत्य मुखाङ्गानि मुखमेवारविन्दताम् ।
आसीद्गमितमत्रेदमतोऽवयविरूपकम् ॥ ७४ ॥
मदपाटलगण्डेन रक्तनेत्रोत्पलेन ते ।
मुखेन मुग्धः सोऽप्येष जनो रागमयः कृतः ॥ ७५ ॥
एकाङ्गरूपकं चैतदेवं द्विप्रभृतीन्यपि ।
अङ्गानि रूपयन्त्यत्र योगायोगौ भिदाकरौ ॥ ७६ ॥

स्मितपुष्पोज्ज्वलं लोलनेत्रभृङ्गमिदं मुखम् ।
इति पुष्पद्विरेफाणां संगत्या युक्तरूपकम् ॥ ७७ ॥
इदमार्द्रस्मितज्योत्स्नं स्निग्धनेत्रोत्पलं मुखम् ।
इति ज्योत्स्नोत्पलायोगादयुक्तं नाम रूपकम् ॥ ७८ ॥
रूपणादङ्गिनो ऽङ्गानां रूपणारूपणाश्रयात् ।
रूपकं विषमं नाम ललितं जायते यथा ॥ ७९ ॥
मदरक्तकपोलेन मन्मथस्त्वन्मुखेन्दुना ।
नर्तितभ्रूलतेनालं मर्दितुं भुवनत्रयम् ॥ ८० ॥
हरिपादः शिरोलग्नजह्नुकन्याजलांशुकः ।
जयत्यसुरनिःशङ्कसुरानन्दोत्सवध्वजः ॥ ८१ ॥
विशेषणसमग्रस्य रूपं केतोर्यदीदृशम् ।
पादे तदर्पणादेतत्सविशेषणरूपकम् ॥ ८२ ॥
न मीलयति पद्मानि न नभो ऽप्यवगाहते ।
त्वन्मुखेन्दुर्ममासूनां हरणायैव कल्पते ॥ ८३ ॥
अक्रिया चन्द्रकार्याणामन्यकार्यस्य च क्रिया ।
अत्र संदर्श्यते यस्माद्विरुद्धं नाम रूपकम् ॥ ८४ ॥
गाम्भीर्येण समुद्रो ऽसि गौरवेणासि पर्वतः ।
कामदत्वाच्च लोकानामसि त्वं कल्पपादपः ॥ ८५ ॥
गाम्भीर्यप्रमुखैरत्र हेतुभिः सागरो गिरिः ।
कल्पद्रुमश्च क्रियते तदिदं हेतुरूपकम् ॥ ८६ ॥
राजहंसोपभोगार्हं भ्रमरप्रार्थ्यसौरभम् ।
सखि वक्त्राम्बुजमिदं तवेति श्लिष्टरूपकम् ॥ ८७ ॥
इष्टं साधर्म्यवैधर्म्यदर्शनाद्गौणमुख्ययोः ।
उपमाव्यतिरेकाख्यं रूपकद्वितयं यथा ॥ ८८ ॥
अयमालोहितच्छायो मदेन मुखचन्द्रमाः ।
संनद्धोदयरागस्य मुखस्य प्रतिगर्जति ॥ ८९ ॥
चन्द्रमाः पीयते देवैर्मया त्वन्मुखचन्द्रमाः ।
असमग्रो ऽप्यसौ शश्वदयमापूर्णमण्डलः ॥ ९० ॥
मुखचन्द्रस्य चन्द्रत्वमित्थमन्योपतापिनः ।
न ते सुन्दरि संवादीत्येतदाक्षेपरूपकम् ॥ ९१ ॥
मुखेन्दुरपि ते चण्डि मां निर्दहति निर्दयम् ।
भाग्यदोषान्ममैवेति तत्समाधानरूपकम् ॥ ९२ ॥

मुखपङ्कजरङ्गेऽस्मिन्भ्रूलतानर्तकी तव ।
लीलानृत्य करोतीति रम्य रूपकरूपकम् ॥ ९३ ॥
नैतन्मुखमिदं पद्म न नेत्रे भ्रमराविमौ ।
एतानि केसराण्येव नैता दन्तार्चिषस्तव ॥ ९४ ॥
मुखादित्वं निवर्त्यैव पद्मादित्वेन रूपणात् ।
उद्भावितगुणोत्कर्षं तत्त्वापह्नवरूपकम् ॥ ९५ ॥
न पर्यन्तो विकल्पानां रूपकोपमयोरतः ।
दिङ्मात्रं दर्शितं धीरैरनुक्तमनुमीयताम् ॥ ९६ ॥

---

# XXIII. Sadānanda's Vedāntasāra.

नमो गणेशाय ।

अखण्डं सच्चिदानन्दमवाङ्मनसगोचरम् ।
आत्मानमखिलाधारमाश्रयेऽभीष्टसिद्धये ॥

Auf daß das Gewünschte in Erfüllung gehe, flüchte ich mich zur unteilbaren, aus Sein, Geist und Wonne bestehenden, dem Worte und der Vorstellung sich entziehenden Allseele, der Grundlage von Allem.

अर्थतोऽप्यद्वयानन्दानतीतद्वैतभानतः ।
गुरूनाराध्य वेदान्तसारं वक्ष्ये यथामति ॥

Indem ich zuvor Verehrung bezeuge meinem Lehrer Advayananda, der, weil der Schein der Zweiheit bei ihm geschwunden ist, auch dem Sinne nach advayananda ist (dessen Wonne die Einheit ist), gehe ich daran, soweit meine Einsicht reicht, den Kern des Vedanta vorzutragen.

1 वेदान्तो नामोपनिषत्प्रमाणं तदुपकारीणि शारीरकसूत्रादीनि च । Unter Vedānta versteht man die Upanisad als Autorität und die zu deren (Verständnis) verhelfenden Schriften, z. B die Śārīrakasutra.

2 अस्य वेदान्तप्रकरणत्वात्तदीयैरेवानुबन्धैस्तद्वत्तासिद्धेर्न ते पृथगालोचनीयाः । Weil es sich von selbst versteht, daß die Erfordernisse zu unserem Werke, da es den Vedānta behandelt, mit den Erfordernissen zu diesem übereinstimmen, so brauchen dieselben nicht besonders in Betracht gezogen zu werden

3 तत्रानुबन्धो नामाधिकारिविषयसम्बन्धप्रयोजनानि । Im Vedānta versteht man unter Erfordernis eine geeignete Person (s. 4), das Objekt (s. 28) die Relation (s. 29) und den Endzweck (s. 30)

4 अधिकारी तु विधिवदधीतवेदवेदाङ्गत्वेनापाततो ऽधिगताखिलवेदार्थो ऽस्मिञ्जन्मनि जन्मान्तरे वा काम्यनिषिद्धवर्जनपुरःसरं नित्यनैमित्तिकप्रायश्चित्तोपासनानुष्ठानेन निर्गतनिखिलकल्मषतया नितान्तनिर्मलस्वान्तः साधनचतुष्टयसम्पन्नः प्रमाता । Unter einer geeigneten Person aber versteht man denjenigen, der die zur richtigen Vorstellung führende geistige Operation vollzieht. Dazu ist erforderlich 1) daß er dadurch, daß er den Veda und die Vedāṅga der Vorschrift gemäß *studiert hat*, den vollständigen Sinn des Veda sofort versteht, 2) daß er vollkommen reinen Herzens ist dadurch, daß alle Sünden von ihm gewichen sind infolge davon, daß er in diesem oder in einem vorangegangenen Leben unter Vermeidung von Begehrenswertem (s. 5) und Verbotenem (s. 6) die ständigen (s. 7) und gelegentlichen Zeremonien (s. 8), Sühnungen (s. 9) und Hingebungen (s. 10) verrichtet hat, 3) daß er im Besitz der vier Requisite (s. 14) ist

5 काम्यानि स्वर्गादीष्टसाधनानि ज्योतिष्टोमादीनि । Unter Begehrenswertem (s. 4) versteht man alles was, wie z. B. der Jyotiṣṭoma, Erwünschtes, wie z. B. die (Erreichung der) Himmelswelt, zuwege bringt

6 निषिद्धानि नरकाद्यनिष्टसाधनानि ब्रह्महत्यादीनि । Unter Verbotenem (s. 4) versteht man alles was, wie z. B. ein Brahmanenmord, Unerwünschtes, wie z. B. (das Hinabsinken in) die Hölle, zuwege bringt

7 नित्यान्यकरणे प्रत्यवायसाधनानि संध्यावन्दनादीनि । Unter ständigen Zeremonien (s. 4) versteht man alles was, wie z. B. das Preisen der Morgen- und Abendröte, Unannehmlichkeiten zuwege bringt, wenn es unterlassen wird.

8 नैमित्तिकानि पुत्रजन्माद्यनुबन्धीनि जातेष्ट्यादीनि । Unter gelegentlichen Zeremonien (s. 4) versteht man die Jāteṣṭi und andere Zeremonien, die mit der Geburt eines Sohnes u. s. w. zusammenhängen

9 प्रायश्चित्तानि पापक्षयमात्रसाधनानि चान्द्रायणादीनि । Unter Sühnungen (s. 4) versteht man das Cāndrāyaṇa und andere Kasteiungen, die nichts anderes als die Tilgung einer Sünde zuwege bringen.

10 उपासनानि सगुणब्रह्मविषयमानसव्यापाररूपाणि शाण्डिल्यविद्यादीनि । Unter Hingebungen (s. 4) versteht man alles was, wie z. B. die

Lehre des Sāndilya (Chānd Up 3, 14 Śatap Br 10, 6, 3, 2), als eine das mit Qualitaten versehene Brahman zum Objekt habende Tatigkeit des Gemuts auftritt.

11 एतेषां नित्यादीनां बुद्धिशुद्धिः परं प्रयोजनम् । उपासनानां तु तदैकाग्र्यं परं प्रयोजनम् । Der letzte Endzweck dieser ständigen Zeremonien usw (s 7—9) ist die Läuterung des Verstandes, der letzte Endzweck der Hingebungen (s 10) aber ist die auf einen einzigen Gegenstand gerichtete Aufmerksamkeit des Verstandes

12 तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेनेत्यादिश्रुतेः । तपसा कल्मषं हन्ति विद्ययामृतमश्नुत इत्यादिस्मृतेश्च । Solches ergibt sich aus Aussprüchen der heiligen Schrift wie „Diese (die Allseele) suchen die Brahmanen durch Hersagen des Veda zu erkennen, durch Opfer" u. s w (Śat Br 14, 7, 2, 25 = Brh Ār Up 4, 4, 22), sowie aus Ausspruchen der Rechtsbücher wie „Durch Kasteiungen tilgt er die Sünde, durch Wissen gelangt er zur Unsterblichkeit" (Manu 12, 104)

13 नित्यनैमित्तिकयोरुपासनानां चावान्तरफलं पितृलोकसत्यलोकप्राप्तिः । कर्मणा पितृलोको विद्यया देवलोक इत्यादिश्रुतेः । Der Lohn für standige und gelegentliche Zeremonien (s 7 8) einerseits und für Hingebungen (s 10) andererseits ist je ein anderer, nämlich für jene die Gewinnung der Welt der Väter, für diese die Gewinnung der Welt der Wahrheit. Dieses ergibt sich aus Aussprüchen der heiligen Schrift wie „Die Welt der Väter (erreicht man) durch Werke, die Welt der Götter durch Wissen" (Śat. Br 14, 4, 3, 24 = Bṛh Ār Up 1, 5, 16)

14 साधनानि नित्यानित्यवस्तुविवेकेहामुत्रफलभोगविरागशमदमादिसंपन्मुमुक्षुत्वादीनि । Die vier Requisite (s 4) sind 1) die Unterscheidung des ewigen von dem verganglichen Dinge (s 15), 2) Gleichgultigkeit gegen die Genusse des Lohnes in dieser und in jener Welt (s. 16), die Erlangung von Gemütsruhe, Selbstbeherrschung usw (s 17) und 4) das Trachten nach Erlösung (s. 24)

15 नित्यानित्यवस्तुविवेकस्तावद्ब्रह्मैव नित्यं वस्तु ततोऽन्यदखिलमनित्यमिति विवेचनम् । Was zunächst die Unterscheidung des ewigen von dem vergänglichen Dinge (s 14) betrifft, so versteht man darunter das Unterscheiden des Brahman als des ewigen Dinges von allem davon Verschiedenen als dem vergänglichen Dinge

16 ऐहिकानां स्रक्चन्दनादिविषयभोगानां कर्मजन्यतयानित्यत्ववदामुष्मिकाणामप्यमृतादिविषयभोगानामनित्यतया तेभ्यो नितरां विरतिरिहा-

मुत्रफलभोगविरागः । Unter Gleichgültigkeit gegen die Genüsse des Lohnes in dieser und in jener Welt (s. 14) versteht man das vollständige Ablassen von diesen Genüssen und zwar darum, weil auch die jenseitigen Genüsse von Dingen wie Nektar usw. gerade so vergänglich sind wie die diesseitigen Genüsse von Dingen wie Kränze, Sandel usw., deren Vergänglichkeit darauf beruht, daß sie aus den Werken hervorgehen.

17. शमदमाद्यस्तु शमदमोपरतितितिक्षासमाधानश्रद्धाः । Unter Gemütsruhe, Selbstbeherrschung usw. (s. 14) versteht man: Gemütsruhe (s. 18), Selbstbeherrschung (s. 19), Entsagung (s. 20), geduldiges Ertragen (s. 21), Andacht (s. 22) und Glaube (s. 23).

18. शमस्तावच्छ्रवणादिव्यतिरिक्तविषयेभ्यो मनसो निग्रहः । Was zunächst die Gemütsruhe (s. 17) betrifft, so versteht man darunter das Zurückhalten des inneren Organs von allen andern Objekten, als denen des Lernens usw. (s. 196).

19. दमो बाह्येन्द्रियाणां तद्व्यतिरिक्तविषयेभ्यो निवर्तनम् । Selbstbeherrschung (s. 17) ist das Abwenden der äusseren Organe von allen anderen Objekten, als denen des Lernens usw. (s. 196).

20. निवर्तितानामेतेषां तद्व्यतिरिक्तविषयेभ्य उपरमणमुपरतिः । अथवा विहितानां कर्मणां विधिना परित्यागः । Entsagung (s. 17) ist das zur Ruhe kommen dieser von allen andern Objekten, als denen des Lernens usw. (s. 196) abgewandten (Organe) oder das Aufgeben gebotener Werke infolge eines Gebotes.

21. तितिक्षा शीतोष्णादिद्वन्द्वसहिष्णुता । Geduldiges Ertragen (s. 17) ist das ruhige Aushalten von Gegensätzen wie Kälte und Wärme.

22. निगृहीतस्य मनसः श्रवणादौ तदनुगुणविषये समाधिः समाधानम् । Andacht (s. 17) ist die beim Lernen usw. (s. 196) auf ein dementsprechendes Objekt gerichtete Aufmerksamkeit des (von allem andern) zurückgehaltenen inneren Organs.

23. गुरुवेदान्तादिवाक्येषु विश्वासः श्रद्धा । Glaube (s. 17) ist Vertrauen auf das Wort des Lehrers, des Vedānta usw.

24. *मुमुक्षुत्वं मोक्षेच्छा । Das Trachten nach der Erlösung (s. 14)* ist der Wunsch nach Erlösung.

25. एवंभूतः प्रमाताधिकारी । Wenn derjenige, der die zur richtigen Vorstellung führende geistige Operation vollzieht, so beschaffen ist, dann ist er eine geeignete Person (s. 4).

26. शान्तो दान्त इत्यादिश्रुतेः । Nach Aussprüchen der heiligen

Schrift wie „Zur Ruhe gekommen sich selbst beherrschend“ usw (Śat Br 14 7 2 28 = Bṛh Ar Up 4 4 23)

27 उक्तं च ।

प्रशान्तचित्ताय जितेन्द्रियाय च प्रहीणदोषाय यथोक्तकारिणे ।
गुणान्वितायानुगताय सर्वदा प्रदेयमेतत्सततं मुमुक्षवे इति ॥

Auch ist gesagt worden „Wessen Sinn zur Ruhe gekommen ist, wer seine Organe bezwungen hat, wessen Sünde geschwunden ist wer nach Geheiss handelt, gute Eigenschaften besitzt, stets folgsam ist und nach der Erlösung trachtet, dem kann man dieses unter allen Umständen mitteilen“, (Śamkaras Upadesasahasri 16 72)

28 विषयो जीवब्रह्मैक्यं शुद्धचैतन्यं प्रमेयं तत्रैव वेदान्तानां तात्पर्यात् । Unter dem Objekt (des Vedanta s 3) versteht man weil die Vedanta Schriften vor allem es gerade darauf abgesehen haben das was richtig erfaßt werden muß nämlich die Einheit von Einzelseele und Brahman den reinen Geist.

29 संबन्धस्तु तदैक्यप्रमेयस्य तत्प्रतिपादकोपनिषत्प्रमाणस्य च बोध्यबोधकभावलक्षणः । Relation (s 3) wird aber definiert als das Verhältnis zwischen dem was zur Erkenntnis zu bringen ist und dem was zu dieser Erkenntnis führt Das, was zur Erkenntnis zu bringen ist, ist jenes richtig zu Erfassende nämlich die Einheit das was zu dieser Erkenntnis führt, ist die Autorität, nämlich die Upanisad, die jene (Einheit) lehren

30 प्रयोजनं तदैक्यप्रमेयगताज्ञाननिवृत्तिः स्वस्वरूपानन्दावाप्तिश्च । Der Endzweck (s 3) ist das Schwinden der Unwissenheit in bezug auf das richtig zu Erfassende, d i jene Einheit und die Erzielung von Wonne die das Wesen derselben ist.

31 तरति शोकमात्मविदिति श्रुतेः । ब्रह्म वेद ब्रह्मैव भवतीति श्रुतेश्च । Nach Aussprüchen der heiligen Schrift wie „Wer die Allseele kennt überwindet den Kummer“ (Chand Up 7, 1 3) und „(Wer) das Brahman kennt, wird eben dieses Brahman“ (Mund Up 3 2, 9)

32 अयमधिकारी जन्ममरणादिसंसारानलसंतप्तो प्रदीप्तशिरा जलराशिमिवोपहारपाणिः श्रोत्रियं ब्रह्मनिष्ठं गुरुमुपसृत्य तमनुसरति । समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठमित्यादिश्रुतेः । Eine solche geeignete Person begibt sich, wenn sie vom Feuer des Kreislaufs des Lebens der sich als Geburt, Tod usw äußert, versengt ist, mit einem Geschenk in der Hand, wie ein am Kopfe Glühender zu einem Gewässer, zu einem mit

der heiligen Lehre vertrauten, ganz dem Brahman hingegebenen Lehrer und geht ihm nach, wie die heilige Schrift es besagt „(Er begebe sich) mit einem Holzscheit in der Hand zu einem mit der heiligen Lehre vertrauten, ganz dem Brahman hingegebenen (Lehrer)“ (Muṇḍ Up 1, 2, 12)

33 स परमकृपयाध्यारोपापवादन्यायेनैनमुपदिशति । तस्मै स विद्वानुपसन्नाय प्राहेत्यादिश्रुतेः । Dieser unterweist ihn aus tiefem Mitgefühl nach der Methode der falschen Übertragung (s. 34 ff) und der Absprechung (s 161 ff) Dieses ergibt sich aus Aussprüchen der heiligen Schrift wie „Zu diesem in die Lehre Getretenen sprach der Kundige“ (vgl Muṇḍ Up 1, 2, 13)

34 असर्पभूतरज्जौ सर्पारोपवद्वस्तुन्यवस्त्वारोपोऽध्यारोपः । Unter falscher Übertragung (s 33) versteht man die Unterschiebung des Unrealen (s 36) an die Stelle des Realen (s 35), wie z B die Unterschiebung einer Schlange an die Stelle eines Strickes, der keine Schlange ist

35 वस्तु सच्चिदानन्दाद्वयं ब्रह्म । Das Reale (s 34) ist das zweitlose aus Sein, Geist und Wonne bestehende Brahman

*36 अज्ञानादिसकलजडसमूहोऽवस्तु । Das Unreale (s 34)* ist die Gesamtheit des Starren (Unbeseelten) mit dem Nichtwissen (s 37) an der Spitze

37 अज्ञानं तु सदसद्भ्यामनिर्वचनीयं त्रिगुणात्मकं ज्ञानविरोधि भावरूपं यत्किंचिदिति वदन्ति । Nichtwissen (s 36) aber ist, wie man sagt, Alles, was nicht durch die Begriffe des Seienden oder Nichtseienden zu bestimmen ist, an den drei Guṇa Teil hat, mit dem Wissen in Widerspruch steht und als ein Ding auftritt.

38 अहमज्ञ इत्याद्यनुभवात् । देवात्मशक्तिं स्वगुणैर्निगूढामित्यादिश्रुतेश्च । Dieses ergibt sich aus Empfindungen wie „Ich bin nichtwissend“ und aus *Aussprüchen der heiligen Schrift* wie „(*Sie nehmen wahr, daß*) die Macht des göttlichen Geistes durch die eigenen Guṇa verhüllt werde“ (Śvetāśv Up 1, 3)

39 इदमज्ञानं समष्टिव्यष्ट्यभिप्रायेणैकमनेकमिति च व्यवह्रियते । Dieses Nichtwissen bezeichnet man als eines und als vielfaches, je nach dem man es als ein Gesamtding oder als ein Einzelding betrachtet

40 तथा हि । यथा वृक्षाणां समष्ट्यभिप्रायेण वनमित्येकत्वव्यपदेशो यथा वा जलानां समष्ट्यभिप्रायेण जलाशय इति तथा नानात्वेन प्रतिभासमानानां जीवगताज्ञानानां समष्ट्यभिप्रायेण तदेकत्वव्यपदेशः । Damit verhält es sich nämlich folgendermaßen Wie man Bäume, wenn man

sie als ein Gesamtding betrachtet, als Einheit Wald benennt, oder wie man Wasser, wenn man sie als ein Gesamtding betrachtet, Gewässer benennt, gerade so benennt man die an den Einzelseelen haftenden, als mannigfaltig erscheinenden Unwissenheiten, wenn man sie als ein Gesamtding betrachtet, als Einheit (Nichtwissen) Vgl. 49

41 अजामेकामित्यादिश्रुतेः । Nach Aussprüchen der heiligen Schrift wie „Die eine Ungeborene (oder Ziege)“ (Śvetāśv Up 4, 5)

42. इयं समष्टिरुत्कृष्टोपाधितया विशुद्धसत्त्वप्रधाना । Dieses Gesamtding besteht vorzugsweise aus (dem Guṇa) Sattva und zwar, weil es ein Höheres bedingt, aus reinem Sattva. Vgl. 52.

43 एतदुपहितं चैतन्यं सर्वज्ञत्वसर्वेश्वरत्वसर्वनियन्तृत्वादिगुणकमव्यक्तमन्तर्यामी जगत्कारणमीश्वर इति च व्यपदिश्यते । Der durch dieses (Gesamtding) bedingte Geist heißt, da er die Eigenschaften eines Allwissenden, Allmächtigen, Alllenkers usw besitzt, das Nichtoffenbare, der innere Lenker, die Ursache der Welt und der Herr (Gott). Vgl. 53

44. सकलाज्ञानावभासकत्वादस्य सर्वज्ञत्वम् । यः सर्वज्ञः सर्वविदित्यादिश्रुतेः । Seine Allwissenheit ergibt sich daraus, daß er alles Nichtwissen erhellt, nach Aussprüchen der heiligen Schrift wie „Wer allwissend und Alles kennend“ usw (Muṇḍ. Up 1, 1, 9) Vgl. 54.

45 अस्येयं समष्टिरखिलकारणत्वात्कारणशरीरम् । Jenes Gesamtding ist, weil er (der Geist) die Ursache von Allem ist, sein ursächlicher Körper Vgl. 55

46 आनन्दप्रचुरत्वात्कोशवदाच्छादकत्वाच्चानन्दमयकोशः । Weil es voller Wonne ist und wie ein Seidengehäuse (den Geist) verhüllt, ist es das wonnevolle Gehäuse Vgl. 56

47 सर्वोपरमत्वात्सुषुप्तिः । Weil Alles in ihm zur Ruhe gelangt, ist es tiefer Schlaf. Vgl. 57

48 अत एव स्थूलसूक्ष्मप्रपञ्चलयस्थानमिति चोच्यते । Eben darum heißt es auch die Auflösungsstätte der groben und der feinen Welt. Vgl. 58 und 163

49 यथा वनस्य व्यष्ट्यभिप्रायेण वृक्षा इत्यनेकत्वव्यपदेशो यथा वा जलाशयस्य व्यष्ट्यभिप्रायेण जलानीति तथाज्ञानस्य व्यष्ट्यभिप्रायेण तदनेकत्वव्यपदेशः । Wie man einen Wald, wenn man ihn als viele Einzeldinge betrachtet, als Vielheit Bäume benennt, oder wie man ein Gewässer, wenn man es als viele Einzeldinge betrachtet, als Vielheit Wasser

benennt, gerade so benennt man das Nichtwissen wenn man es als viele Einzeldinge betrachtet als Vielheit (Unwissenheiten) Vgl 40

50 इन्द्रो मायाभि पुरुरूप ईयत इत्यादिश्रुते । Nach Aussprüchen der heiligen Schrift wie „Indra wandelt mit seinen Truggestalten vielgestaltet umher" (Ṛgveda 6 47, 18)

51 अत्र व्यस्तसमस्तव्यापित्वेन व्यष्टिसमष्टिताव्यपदेश । Hierbei richtet sich die Benennung „Einzelding" oder „Gesamtding" darnach, ob diese auf Auseinandergehaltenes oder Verbundenes sich erstrecken

52 इयं व्यष्टिर्निकृष्टोपाधितया मलिनसत्त्वप्रधाना । Dieses Einzelding besteht vorzugsweise aus (dem Guṇa) Sattva und zwar, weil es ein Niedrigeres bedingt aus beflecktem Sattva Vgl 42

53 एतदुपहितं चैतन्यमल्पज्ञत्वानीश्वरत्वादिगुणक प्राज्ञ इत्युच्यत एकाज्ञानावभासकत्वात् । Der durch dieses (Einzelding) bedingte Geist, der die Eigenschaften eines wenig Wissenden, Machtlosen usw besitzt, heißt der Verständige, weil er eine einzelne Unwissenheit erhellt Vgl 43 f

54 अस्य प्राज्ञत्वमस्पष्टोपाधितयानतिप्रकाशकत्वात् । Seine Verständigkeit ergibt sich daraus daß er nicht in hohem Grade erleuchtet, da das ihn Bedingende unklar ist

55 अस्यापीयमहकारादिकारणत्वात्कारणशरीरम् । Ein solches (Einzelding) ist, weil er (der dadurch bedingte Geist) die Ursache des Ichbewußtseins usw ist auch sein ursächlicher Körper Vgl 45

56 आनन्दप्रचुरत्वात्कोशवदाच्छादकत्वाच्चानन्दमय कोश । Weil es voller Wonne ist und wie ein Seidengehäuse (den Geist) verhüllt, ist es ein wonnevolles Gehäuse Vgl 46

57 सर्वोपरमत्वात्सुषुप्ति । Weil alles in ihm zur Ruhe gelangt, ist es tiefer Schlaf Vgl 47

58 अत एव स्थूलसूक्ष्मशरीरलयस्थानमिति चोच्यते । Eben darum heißt es auch *die Auflösungsstätte des groben und des feinen* (s 113) Körpers Vgl 48 und 163

59 तदानीमेतावीश्वरप्राज्ञौ चैतन्यप्रदीप्ताभिरतिसूक्ष्माभिरज्ञानवृत्तिभिरानन्दमनुभवत । Alsdann empfinden diese Beiden der Herr (s 43) und der Verständige (s 53) Wonne mittels der ganz feinen, durch den Geist angefachten Tätigkeiten des Nichtwissens.

60 आनन्दभुक्चेतोमुख प्राज्ञ इत्यादिश्रुते । सुखमहमस्वाप्स न कि

चिद्वेदिपमित्युत्थितस्य परामर्शोपपत्तेश्च । Dieses ergibt sich aus Aussprüchen der heiligen Schrift wie „Der Verständige genießt Wonne und sein Mund ist Einsicht“ (Mand Up 5) und daraus, daß dadurch die Erinnerung eines Erwachten „Ich habe schon geschlafen, kein Bewußtsein von irgend Etwas gehabt“ erklart wird

61 अनयो समष्टिव्यष्ट्योर्वनवृक्षयोरिव जलाशयजलयोरिव चाभेद. । *Auch besteht zwischen diesen Beiden, dem Gesamtdinge und dem Einzeldinge*, kein Unterschied, ebensowenig wie zwischen Wald und Bäumen und wie zwischen Gewasser und Wassern

62 एतदुपहितयोरीश्वरप्राज्ञयोरपि वनवृक्षावच्छिन्नाकाशयोरिव जलाशयजलगतप्रतिबिम्बाकाशयोरिव चाभेद । Auch zwischen dem Herrn (s 43) und dem Verständigen (s 53), die durch jene (das Gesamtding und das Einzelding) bedingt werden, besteht kein Unterschied, ebensowenig wie zwischen dem vom Walde und dem von Baumen bestimmten Luftraume und wie zwischen dem im Gewasser und dem in den Wassern wiedergespiegelten Luftraume

63 एष सर्वेश्वर इत्यादिश्रुते । Nach Ausspruchen der heiligen Schrift wie „Er ist der Herr von Allem“ usw (Mand Up 6)

64 वनवृक्षतदवच्छिन्नाकाशयोर्जलाशयजलतद्गतप्रतिबिम्बाकाशयोर्वाधारभूतानुपहिताकाशवदनयोरज्ञानतदुपहितचैतन्ययोराधारभूत यदनुपहित चैतन्य तत्तुरीयमित्युच्यते । शिव शान्तमद्वैत चतुर्थं मन्यन्त इत्यादिश्रुते । Wie es einen unbedingten Luftraum gibt, der die Unterlage bildet des Waldes oder der Baume und des von ihnen bestimmten Luftraumes oder der Gewässer oder Wasser und des in ihnen wiedergespiegelten Luftraumes, geradeso gibt es einen unbedingten Geist, der die Unterlage beider, des Nichtwissens und des durch es bedingten Geistes ist, und der Vierte heißt nach Aussprüchen der heiligen Schrift wie „Den freundlichen, in Ruhe befindlichen, zweitlosen halt man fur den Vierten (Mand Up 7)

65 इदमेव तुरीय शुद्धचैतन्यमज्ञानादितदुपहितचैतन्याभ्या तप्तायपिण्डवदविविक्त सन्महावाक्यस्य वाच्यम् । विविक्त सल्लक्ष्यमित्युच्यते । Eben dieser Vierte, der reine Geist wird wenn er von dem Nichtwissen usw und von dem durch es bedingten Geist ebensowenig wie ein gluhendes Stuck Eisen gesondert wird, durch „den großen Satz“ unmittelbar ausgedruckt. Wird er gesondert, so sagt man daß er mittelbar ausgedruckt werde Vgl 144 164ff

66 अस्याज्ञानस्यावरणविक्षेपनामकं शक्तिद्वयमस्ति । Jenes Nichtwissen besitzt zwei Kräfte, die Verhüllung (s 67) und Ausbreitung (s 70) heißen

67 आवरणशक्तिस्तावत् । अल्पो ऽपि मेघो ऽनेकयोजनायतमादित्यमण्डलमवलोकयितृनयनपथपिधायकतया यथाच्छादयतीव तथाज्ञानं परिच्छिन्नमप्यात्मानमपरिच्छिन्नमसंसारिणमवलोकयितृबुद्धिपिधायकतयाच्छादयतीव । तादृशं सामर्थ्यम् । Was zunächst die Verhullungskraft betrifft, so ist es eine Macht der folgenden Art Wie sogar eine kleine Wolke, wenn sie den Gesichtskreis des Beschauers verdeckt, die Sonnenscheibe, die einen Umfang von vielen Meilen hat, zu verhüllen scheint, geradeso scheint das Nichtwissen, obgleich es begrenzt ist, wenn es die Einsicht des Beschauers verdeckt, die unbegrenzte und dem Kreislauf des Lebens nicht unterliegende Allseele zu verhullen

68 तदुक्तम् ।

घनच्छन्नदृष्टिर्घनच्छन्नमर्कं यथा निष्प्रभं मन्यते चातिमूढः ।
तथा बद्धवद्भाति यो मूढदृष्टेः स नित्योपलब्धिस्वरूपो ऽहमात्मा ॥

इत्यादि । Dieses besagen folgende Worte „Wie ein ganz törichter Mann, wenn sein Auge durch eine Wolke verdeckt wird, meint, die Sonne werde durch die Wolke verdeckt *und* sei *glanzlos*, *geradeso ist* das Wesen des Ichs, der Allseele, die dem Manne törichten Blickes als gebunden erscheint, ewiges Erfassen" usw (Hastamalaka 10)

69 अनयावृतस्यात्मनः कर्तृत्वभोक्तृत्वसुखित्वदुःखित्वादिसंसारसंभावनापि संभवति यथा स्वाज्ञानावृतायां रज्ज्वां सर्पत्वसंभावना । Von der durch diese (Kraft des Nichtwissens) verhüllten Allseele setzt man darauf auch voraus, daß für sie ein Kreislauf des Lebens bestehe, daß sie nämlich handle und genieße, Freude und Schmerz empfinde usw, geradeso wie man von einem durch unser eigenes Nichtwissen verhüllten Stricke voraussetzt, daß er eine Schlange sei

70 विक्षेपशक्तिस्तु । यथा रज्ज्वज्ञानं स्वावृतरज्ज्वौ स्वशक्त्या सर्पादिकमुद्भावयत्येवमज्ञानमपि स्वावृतात्मनि स्वशक्त्याकाशादिप्रपञ्चमुद्भावयति । तादृशं सामर्थ्यम् । Die Ausbreitungskraft aber ist eine Macht der folgenden Art Wie das Nichtwissen in bezug auf einen Strick in dem von ihm selbst verhullten Stricke durch seine eigene Kraft eine Schlange usw erzeugt, geradeso erzeugt auch das Nichtwissen in der von ihm selbst verhullten Allseele durch seine eigene Kraft eine ganze Welt, d i den Ather usw

जेव्व साअरिआ । तुम उण साअरिआणुरत्तहिअओ सव्वं जेव्व साअरिआमअं पेक्खसि ।

राजा । सवैलक्ष्यमपवार्य । कथं । देवी वासवदत्ता । वयस्य । किमेतत् ।

विदूषकः । सविषादम् । भो वअस्स । अम्हाणं जीविदसंसओ जादो एसो ।

राजा । उपविश्याञ्जलिं बद्धा । प्रिये वासवदत्ते । प्रसीद प्रसीद ।

वासवदत्ता । अश्रूणि विधारयन्ती । अज्जउत्त । मा एव्व भण । अण्णगदा खु एदे अक्खरा ।

विदूषकः । आत्मगतम् । किं दाणिं एत्थ करिस्सं । भोदु एव्वं दाव । प्रकाशम् । भोदि । महाणुभावा खु तुमं । ता खमीअदु दाव एक्को अवराहो पिअवअस्सस्स ।

वासवदत्ता । अज्जवसन्तअ । ण पढमसमागमे विग्घं करन्तीए मएज्जेव्व एदस्स अवरद्धं ।

राजा । एवं प्रत्यक्षदृष्टव्यलीकः किं विज्ञापयामि ।

आताम्रतामपनयामि विलक्ष एव
लाक्षाकृतां चरणयोस्तव देवि मूर्ध्ना ।
कोपोपरागजनितां तु मुखेन्दुबिम्बे
हर्तुं क्षमो यदि परं करुणा मयि स्यात् ॥ ५८ ॥

इति पादयोः पतति ।

वासवदत्ता । हस्तेन वारयन्ती । अज्जउत्त । उट्ठेहि उट्ठेहि । णिलज्जो क्खु सो जणो जो अज्जउत्तस्स एव्वं हिअअं जाणिअ पुणो वि कुप्पदि । ता वीसत्थं चिट्ठदु अज्जउत्तो । अहं गमिस्सं । इति गन्तुमिच्छति ।

काञ्चनमाला । भट्टिणि । करेहि से पसादं । एव्व चरणपडिदं महाराअं उज्झिअ गदाए देवीए अवस्सं पच्छादावेण होदव्वं ।

वासवदत्ता । अवेहि अपण्डिदे । को एत्थ पसादस्स कालो ।

इति निष्क्रान्ते ।

राजा । देवि । प्रसीद । प्रसीद ।

विदूषकः । भो । उट्ठेहि । गदा देवी । ता कीस एत्थ अरण्णरुदिदं करेसि ।

राजा । मुखमुत्तानीकृत्य । कथम् । प्रसादमकृत्वैव गता देवी ।

विदूषकः । कधं ण कदो पसादो । अज्ज वि अक्खदसरीरा जीवामो ।

राजा । धिङ्मूर्ख । किमेवमुपहससि माम् । ननु त्वत्कृत एवायमापतितोऽस्माकमनर्थः । कुतः ।

समारूढप्रीतिः प्रणयबहुमानादनुदिनं
व्यलीकं वीक्ष्येदं कृतमकृतपूर्वं खलु मया ।
प्रिया मुञ्चत्यद्य स्फुटमसहना जीवितमसौ
प्रकृष्टस्य प्रेम्णः स्खलितमविषह्यं हि भवति ॥ ५९ ॥

विदूषक । भो । रुट्ठा देवी किं करिस्सदि त्ति ण जाणामि । साअरिआए उण दुक्करं जीविदं ति तक्केमि ।

राजा । निःश्वस्य । एवमेतत् ।

ततः प्रविशति वासवदत्तावेषधारिणी सागरिका ।

सागरिका । सोद्वेगम् । दिट्ठिआ । इमिणा विरइददेवीवेसेण इमादो चित्तसालादो णिक्कमन्ती केणावि ण लक्खिदम्हि । ता किं दाणिं करिस्सं । इति सास्रं चिन्तयति ।

विदूषक । भो । किं मूढो विअ चिट्ठसि । चिन्तेहि दाव एत्थ पडिआरं ।

राजा । वयस्य । ननु तदेव चिन्तयामि ।

सागरिका । विमृश्य । वरं दाणिं सअं जेव्व अत्ताणअं उब्बन्धिअ उवरदा भविस्सं ण उण जाणिदसंकेदवुत्तन्ताए देवीए सुसंगदाए सह परिभूदम्हि । ता जाव असोअपाअवे गदुअ जधासमीहिदं करिस्सं । इति परिक्रामति ।

राजा । वयस्य । देवीप्रसादनं विना नान्यमुपायं पश्यामि । तदुत्तिष्ठ । तत्रैव गच्छाव ।

इति परिक्रामतः ।

विदूषक । आकर्ण्य । भो । चिट्ठ । पदसद्दो जधा सुणीअदि तधा तक्केमि । गहिदपच्छादावा पुणो वि देवी आअदा भवे ।

राजा । महानुभावा देवी । कदा चिदेवमपि स्यात् । तत्त्वरितं निरूप्यताम् ।

विदूषक । जं भवं आणवेदि । इति परिक्रम्य निरूपयति ।

सागरिका । ता जाव इधज्जेव्व माहवीलदाए असोअपाअवे पासं करिस्सं । इति लतापाशं रचयन्ती । हा ताद । हा अम्ब । एसा खु अणाधा असरणा विवज्जामि मन्दभाइणी । इति कण्ठे लतापाशमर्पयति ।

विदूषक । पश्यन्नुच्चैः ससंभ्रमम् । कधं । देवी वासवदत्ता अत्ताणअं उब्बन्धिअ वावादेदि ।

राजा । ससंभ्रममुपसृत्य । क्वासौ क्वासौ ।

विदूषक । भो । णं एसा ।

राजा । उपसृत्य कण्ठात्पाशमपनयति । अयि साहसकारिणि । किमिदमकार्यं क्रियते ।

मम कण्ठगता प्राणा पाशे कण्ठगते तव ।
अत स्वार्थप्रयत्नो ऽयं त्यज्यतां साहसं प्रिये ॥ ६० ॥

सागरिका । राजानं दृष्ट्वा सहर्षमात्मगतम् । कध । अज्जउत्तो । एदं पेक्खिअ किदत्था भविअ सुहेण विअ जीविदं परिच्चइस्सं । प्रकाशम् । अज्जउत्त । मुञ्च मुञ्च । पराहीणोक्खु अअं जणो ण पुणो वि मरिदुं ईदिसं अवसरं पावेदि । इति पुन कण्ठे पाशं दातुमिच्छति ।

राजा । निर्वर्ण्य सहर्षम् । कथम् । प्रिया मे सागरिका । कण्ठात्पाशमाक्षिप्य ।

अलमलमतिमात्रं साहसेनामुना ते
त्वरितमयि विमुञ्च त्वं लतापाशमेतम् ।
चलितमिव निरोद्धुं जीवितं जीवितेशे
क्षणमिह मम कण्ठे बाहुपाशं विधेहि ॥ ६१ ॥

इति कण्ठे बाहुं कृत्वा स्पर्शं नाटयति । सखे । इयमनभ्रा वृष्टि ।

विदूषक । भो । एव्वं णेदं जइ अआलवादावली विअ देवी आअच्छिअ अण्णधा ण करिस्सदि ।

तत प्रविशति वासवदत्ता काञ्चनमाला च ।

वासवदत्ता । हञ्जे कञ्चणमाले । तं तधा चरणणिवडिदं अज्जउत्तं अवधीरअन्तीए मए अदिणिट्ठुरं जेव्व कदं । ता दाणिं सअं जेव्व गदुअ अज्जउत्तं अणुणइस्सं ।

काञ्चनमाला । को अण्णो देविं वज्जिअ ईदिसं मन्तेदि । वरं सो जेव्व दुज्जणीकिदो भोदु ण उण देवी । ता एदु एदु भट्टिणी ।

इति परिक्रामत ।

राजा । अयि मुग्धे । किमद्यापि मध्यस्थतया विफलमनोरथा क्रियामहे ।

काञ्चनमाला । भट्टिणि । जधा समीवे भट्टा मन्तेदि तधा तक्केमि । तुमं जेव्व अणुणेदुं आअच्छदि ।

वासवदत्ता । सहर्षम् । तेण हि अलक्खिदा भविअ पुट्ठदो गदुअ कण्ठे गेण्हिस्सं ।

विदूषक । भोदि मात्थरिए । धीमत्था भविअ कीस पिअवअस्सं ण आमवेसि ।

वासवदत्ता । सविषादं कर्णं दत्त्वा । हञ्जे कञ्चणमाले । कधं । साअरिआ इधज्जेव्व चिट्ठदि । ता सुणम्ह दाव । पच्छा उवसप्पिस्सं ।

इति तथा स्थिते ।

सागरिका । भट्टा । किं इमिणा अलिअदक्खिण्णेण जीविदादो वल्लहदराए देवीए अत्ताणअं अवराहिणि करेमि ।

राजा । अयि । मिथ्यावादिनी खल्वसि । कुतः ।

श्वासोत्कम्पिनि कम्पितं स्तनयुगे मौने प्रियं भाषितं
वक्त्रे ऽस्याः कुटिलीकृतभ्रुणि रुषा यातं मया पादयोः ।
इत्थं नः सहजाभिजात्यजनिता सेवैव देव्याः परं
प्रेमाबन्धविवर्धिताधिकरसा प्रीतिस्तु या सा त्वयि ॥ ६२ ॥

वासवदत्ता । सहसोपसृत्य सरोषम् । अज्जउत्त । जुत्तं एदं ।

राजा । दृष्ट्वा सवैलक्ष्यम् । देवि । न खल्वकारणे मामुपालब्धुमर्हसि । त्वामेव मत्वा वेषसादृश्याद्विप्रलब्धा वयमिहागताः । तत्क्षम्यताम् । इति पादयोः पतति ।

वासवदत्ता । सरोषम् । अज्जउत्त । उट्ठेहि उट्ठेहि । किं अज्ज वि सहजाहिजादीए सेवादुक्खं अणुभवीअदि ।

राजा । आत्मगतम् । कथम् । एतदपि श्रुतम् । सर्वथा देवीप्रसादनं प्रति निष्प्रत्याशीभूताः स्मः । इत्यधोमुखस्तिष्ठति ।

विदूषकः । भोदि । तुमं किल अत्ताणअं उब्बन्धिअ वावादेसित्ति वेससारिस्समोहिदेण मए पिअवअस्सो आणीदो । जइ मम वअणं ण पत्तिआअसि ता पेक्ख एदं लदापासं । इति हस्ते गृहीत्वा लतापाशं दर्शयति ।

वासवदत्ता । हञ्जे कञ्चणमाले । एदिणा जेव्व लदापासेण बन्धिअ गेण्ह एदं बम्हणबडुअं । अङ्गुल्या तर्जयन्ती । एदं पि दुट्ठिणीदकण्णअं अग्गदो करेहि ।

काञ्चनमाला । जं भट्टिणी आणवेदि । इति लतापाशेन विदूषकं बद्ध्वा । हदास । अणुभव दाव अत्तणो दुण्णअस्स फलं । साअरिए । तुमं पि अग्गदो होहि ।

सागरिका । आत्मगतम् । हद्धी । अकिदपुण्णाए मए मरिदुं पि अत्तणो इच्छाए ण पारिदं ।

विदूषकः । सविषादं राजानमवलोक्य । भो वअस्स । सुमरेहि मं अणाधं बम्हणबडुअं देवीए बन्धणादो विवज्जन्तं ।

सर्वानादाय वासवदत्ता निष्क्रान्ता ।

राजा । कष्टं भोः कष्टम् ।

कि देव्या छतदीर्घरोषमुपितस्निग्धस्मित तन्मुख
चक्षा सागरिका नु सभृतरुषा सतर्ज्यमाना तया ।
बद्धा नीतमितो वसन्तकमहं कि चिन्तयामीत्यहो
सर्वाकारकृतव्यथ क्षणमपि प्राप्नोमि नो निर्वृतिम् ॥ ६३ ॥

तत्किमिदानीमिहस्थितेन प्रयोजनम् । देवी प्रसादयितुमभ्यन्तरमेव प्रविशामि । इति निष्क्रान्त ।

इति तृतीयो ऽङ्क ।

---

तत प्रविशति गृहीतरत्नमाला सुसगता ।

सुसगता । सकरुणम् । हा पिअसहि साअरिए । हा लज्जालुए । हा सहीजणवच्छले । हा उदारसीले । हा सोम्मदसणे । कहि दाणि तुम मए पेक्खिदव्वा । इति रोदिति । ऊर्ध्वमवलोक्य निश्वस्य च । अइ देव्वहदअ । जइ सा असामण्णरूवसोहा तादिसी तए णिम्मिदा ता कीस उण ईदिस अवत्यन्तर पाविदा । इअ च रअणमाला जीविदणिरासाए ताए कस्स वि बम्हणस्स हत्थे पडिवादेसुत्ति भणिअ मम हत्थे समप्पिदा । ता जाव कपि बम्हण अण्णेसामि । परिक्रम्यावलोक्य च । एसोक्खु अज्जवसन्तओ इदोज्जेव्व आअच्छदि । ता जाव एदस्सज्जेव्व पडिवादइस्सं ।

तत प्रविशति हृष्टो वसन्तक ।

विदूषक । ही ही भो । अज्जक्खु पिअवअस्सेण पसादिदाए देवीए वासवदत्ताए बन्धणादो मोआविअ सहत्थदिण्णेहि मोदएहि उदरं मे पूरिद् । अण च । पट्टसुअजुअल कण्णाहरण च दिण्ण । ता जाव पिअवअस्स पेक्खामि ।

सुसंगता । रुदती सहसोपसृत्य । अज्जवसन्तअ । चिट्ठ दाव ।

विदूषक । दृष्ट्वा । कधं । सुसंगदा । भोदि सुसगदे । कि णिमित्त रोदीअदि । कि णु साअरिआए अच्चाहिद सवुत्त ।

सुसंगता । एद जेव्व णिवेदइस्स । सा खु तवस्मिणी देवीए उज्जइणि पेसिदत्ति पवाद कदुअ अद्धरत्ते उवट्ठिदे ण आणीअदि कहि णीदत्ति ।

विदूषक । सोद्वेगम् । हा भोदि साअरिए । अदिणिग्घिण देवीए कद ।

सुसंगता । इअं च रअणमाला ताए जीविदणिरासाए अज्जवसन्तअस्स हत्थे पडिवादेसुत्ति भणिअ मम हत्थे समप्पिदा । ता गेण्हदु अज्जो एद ।

विदूषक । सकरुणम् । ण मे ईदिसे पत्थावे हत्थो एद गेण्हिदुं पसरदि ।

उभौ रुदत ।

सुसगता । कृताञ्जलि । ताएज्जेव्व अणुग्गहं करन्तो अङ्गीकरेदु अज्जो ।

विदूषक । विचिन्त्य । अध वा उवणेहि जेण इमाएज्जेव्व सागरि-आविरहदुक्खिद पिअवअस्स विणोदइस्स ।

सुसगतोपनयति ।

विदूषक । गृहीत्वा निरूप्य सविस्मयम् । सुसगदे । कुदो उण ताए ईदिसस्स अलकारस्स समागमो ।

सुसगता । अज्ज । मए वि एद जेव्व कोदूहलेण पुच्छिदा आसि ।

विदूषक । तदो ताए कि भणिद ।

सुसगता । तदो सा उद्ध पेक्खिअ दीहं णिस्ससिअ सुसंगदे कि तुह एदाए कधाएत्ति भणिअ रोदिदु पउत्ता ।

विदूषक । कधिद जेव्व सामण्णजणदुल्लहेण इमिणा परिच्छएण । सव्वधा महाहिजणसभवाए ताए होदव्व ति । सुसगदे । पिअवअस्सो दाणिं कहिं ।

सुसगता । अज्ज । एसोक्खु भट्टा देवीभवणादो णिक्कमिअ फडिअसिलामण्डव गदो । ता गच्छदु अज्जो । अह पि देवीए पासवत्तिणी भविस्स ।

इति निष्क्रान्तौ ।

इति प्रवेशक ।

---

तत प्रविशत्यासनस्थो राजा ।

राजा । विचिन्त्य ।

सव्याजै शपथै प्रियेण वचसा चित्तानुवृत्त्याधिक
वैलक्ष्येण परेण पादपतनैर्वाक्यै सखीना मुहु ।
प्रत्यासत्तिमुपागता नहि तथा देवी रुदत्या यथा
प्रक्षाल्येव तयैव बाष्पसलिलै कोपो ऽपनीत स्वयम् ॥ ६४ ॥

सोत्कण्ठ नि श्वस्य । इदानी देव्या प्रसन्नाया सागरिकाचिन्तैव मा बाधते । तथा हि ।

अम्भोजगर्भसुकुमारतनुस्तदासौ
कण्ठग्रहे प्रथमरागघने विलीय ।
सद्य पतन्मदनमार्गणरन्ध्रमार्गै
र्मन्ये मम प्रियतमा हृदय प्रविष्टा ॥ ६५ ॥

यो ऽपि मे विश्रामस्थानं वसन्तक सो ऽपि देव्या संयतस्तिष्ठति । तत्क-स्यारो बाष्पमोक्ष करोमि । इति नि श्वसिति ।

ततः प्रविशति विदूषकः ।

विदूषकः । राजानं दृष्ट्वा । एसो क्खु चिरन्तरुक्कण्ठापरिक्खामं पि सविसेससलाहणीअं तणुं समुव्वहन्तो उदिदो विअ दुदिआचन्दो अधिअदर सोहदि पिअवअस्सो । ता जाव णं उवसप्पामि । उपसृत्य । सोत्थि भवदो । दिट्ठिआ वड्ढसि देवीहत्थगदेणावि मए पुणो वि एदेहिं अच्छीहिं जं दिट्ठो सि ।

राजा । दृष्ट्वा सहर्षम् । कथम् । वसन्तकः प्राप्तः । सखे । परिष्वजस्व माम् ।

विदूषकः परिष्वजते ।

राजा । वेषेणैव निवेदितस्ते देव्याः प्रसादः । तत्कथ्यतामिदानीम् । सागरिकायाः किं वर्तत इति ।

विदूषको ऽधोमुखस्तिष्ठति ।

राजा । वयस्य । किं न कथयसि ।

विदूषकः । भो । अप्पिअं ति णिवेदिदुं ण पारेमि ।

राजा । कथम् । अप्रियम् । व्यक्तमुत्सृष्टं जीवितं तया । हा प्रिये सागरिके । इति मोहं नाटयति ।

विदूषकः ।ससंभ्रमम् । समस्ससदु समस्ससदु पिअवअस्सो ।

राजा । समाश्वस्य सास्रम् ।

प्राणाः परित्यजत काममदक्षिणं मां
हे दक्षिणा भवत मद्वचनं कुरुध्वम् ।
शीघ्रं न याथ यदि तन्मुषिताः स्थ नूनं
याता सुदूरमधुना गजगामिनी सा ॥ ६६ ॥

विदूषकः । भो । मा अण्णधा संभावेहि । सा क्खु देवीए उज्जइणिं पेसिदा । अदो मए अप्पिअं ति भणिदं ।

राजा । अहो । निरनुरोधा मयि देवी । वयस्य । केनैतदाख्यातम् ।

विदूषकः । भो सुसंगदाए । अण्णं च । ताए ज्जेव मम हत्थे केणावि कज्जेण इअं रअणमाला पेसिदा ।

राजा । किमपरम् । मां समाश्वासयितुम् । तद्वयस्योपनय ।

विदूषक उपनयति ।

राजा । गृहीत्वा रत्नमालां निर्वर्ण्य हृदये विन्यस्य । अहह ।

कण्ठाश्लेषं समासाद्य तस्याः प्रभ्रष्टयानया ।
तुल्यावस्था सखीवेयं तनुराश्वास्यते मम ॥ ६७ ॥

वयस्य । त्वमेव परिधत्स्व येन वयमेनां दृष्ट्वा धृतिं करिष्यामः ।

विदूषकः । जं भवं आणवेदि । इति परिदधाति ।

राजा । सास्रम् । वयस्य । दुर्लभं पुनर्दर्शनं प्रियायाः ।

विदूषक । दिशोऽवलोक्य सभयम् । भो । मा एव्वं मन्तेहि । कदा वि को वि इध संचरदि ।

तत प्रविशति खड्गहस्ता वसुंधरा ।

वसुंधरा । उपसृत्य । जअदु जअदु भट्टा । एसो क्खु रुमण्णदो भाइणेओ विजअवम्मा किं पि णिवेदिदुकामो दुआरे चिट्ठदि ।

राजा । वसुंधरे । अविलम्बितं प्रवेशय ।

वसुंधरा । जं देवो आणवेदि । इति निष्क्रम्य विजयवर्मणा सह पुनः प्रविश्य च । विजअवम्म । एसो क्खु भट्टा । ता उवसप्पदु अज्जो णं ।

विजयवर्मा । उपसृत्य । जयति जयति देव । देव । दिष्ट्या वर्धसे रुमण्वतो विजयेन ।

राजा । सपरितोषम् । विजयवर्मन् । अपि जिता कोसला ।

विजयवर्मा । देवस्य प्रसादेन ।

राजा । साधु रुमण्वन्साधु । अचिरान्महत्प्रयोजनमनुष्ठितम् । विजयवर्मन् । तत्कथय कथाम् । अतिविस्तरत श्रोतुमिच्छामि ।

विजयवर्मा । देव । श्रूयताम् । इतो देवादेशात्कतिपयैरेव वासरैरनेककरितुरगपदातिदुर्निवारेण महता बलसमूहेन गत्वा रुमण्वान्विन्ध्यदुर्गावस्थितस्य कोसलपतेर्द्वारमवष्टभ्य समावासयितुमारब्धवान् ।

राजा । ततस्तत ।

विजयवर्मा । तत कोसलेश्वरोऽपि दर्पात्परिभवमसहमानो हास्तिकप्रायमात्मसैन्यं सज्जीकृतवान् ।

विदूषक । विजअवम्म । लहुं आचक्ख । वेवदि मे हिअअं ।

राजा । ततस्तत ।

विजयवर्मा । देव । कृतनिश्चयश्चासौ

योद्धुं निर्गत्य विन्ध्यादभवदभिमुखस्तत्क्षणं दिग्विभागा-
न्विन्ध्येनैवापरेण द्विपपतिपृतनापीडबन्धेन रुन्धन् ।
वेगाद्बाणान्विमुञ्चन्नथ समदगजोत्पिष्टपत्तिर्निपत्य
प्रत्यायाताञ्जिताशिद्विगुणितरभसस्तं रुमण्वान्क्षणेन ॥ ६८ ॥

अपि च ।
अस्त्रव्यस्तशिरस्त्रशस्त्रकषणैः कृत्तोत्तमाङ्गे मुहु-
र्व्यूढासृक्सरिति स्वनत्प्रहरणैर्वर्मोद्वमद्वह्निनि ।
आहूयाजिमुखे स कोसलपतिर्भग्ने प्रधाने बले

राजा । कथम् । अस्मदीयान्यपि बलानि भग्नानि ।

विजयवर्मा । एकेनैव रुमण्वता शरशतैर्मत्तद्विपस्थो हत ॥ ६९ ॥

विदूषकः । जअदु जअदु भव । जिदं अम्हेहि । इति नृत्यति ।

राजा । साधु कोसलपते साधु । मृत्युरपि ते श्लाघ्यो यस्य शत्रवो ऽप्येवं पुरुषकारं वर्णयन्ति ।

विजयवर्मा । रुमण्वानपि कोसलेषु मद्भ्रातरं ज्यायासं जयवर्माणं स्थापयित्वा प्रहारव्रणित हास्तिकप्रायमशेषसैन्यमनुवर्तमानः शनैः शनैरागत एव ।

राजा । वसुंधरे । उच्यता यौगंधरायण. । प्रदीयता मत्प्रसादो ऽस्येति ।

वसुंधरा । जं देवो आणवेदि । इति विजयवर्मणा सह निष्क्रान्ता ।

ततः प्रविशति काञ्चनमाला ।

काञ्चनमाला । आणत्तम्हि देवीए जधा । हञ्जे कञ्चणमाले । गच्छ । एदं इन्द्आलिअं अज्जउत्तस्स दंसेहित्ति । परिक्रम्यावलोक्य च । एसोक्खु भट्टा । ता जाव णं उवसप्पामि । उपसृत्य । जअदु जअदु भट्टा । भट्टा । देवी विण्णवेदि । एसोक्खु उज्जइणीदो सम्बरसिद्धी णाम इन्द्आलिओ आअदो । ता पेक्खदु ण अज्जउत्तोत्ति ।

राजा । अस्ति नः कौतुकमैन्द्रजालिके । तच्छीघ्र प्रवेशय ।

काञ्चनमाला । ज देवो आणवेदि । इति निष्क्रम्य पिच्छिकाव्यग्रहस्तेनैन्द्रजालिकेन सह प्रविश्य । एदु एदु अज्जो ।

ऐन्द्रजालिकः परिक्रामति ।

काञ्चनमाला । एसो भट्टा । ता उवसप्पदु अज्जो ।

ऐन्द्रजालिकः । जअदु जअदु भट्टा । उपसृत्य पिच्छिकां भ्रामयित्वा ।

पणमह चलणे इन्दस्स इन्द्आलम्मि लद्धणामस्स ।
तह अज्जसम्बरस्स वि माआसुपडिट्ठिअजसस्स ॥ ३० ॥

देव । कि धरणीए मिअङ्को आआसे महिहरो जले जलणो ।
मज्झण्हम्मि पओसो दाविज्जउ देहि आणत्ति ॥ ३१ ॥

विदूषकः । भो वअस्स । अवहिदो होहि । भो । ईदिसो से अवट्ठम्भो जेण सब्ब संभावीअदि ।

ऐन्द्रजालिकः । देव ।

कि जम्पिएण बहुणा ज ज हिअएण महसि सट्ठु ।
तं तं दावेमि अहं गुरुणो मन्तप्पहावेण ॥ ३२ ॥

राजा । काञ्चनमाले । उच्यता देवी । युष्मदीय एवायमैन्द्रजालिको विजम्भीछतयायमुद्देशः । तदागच्छ । सहितावेवैनं पश्याव इति ।

काञ्चनमाला । जं भट्टा आणवेदि । इति निष्क्रम्य वासवदत्तया सह प्रविशति ।

वासवदत्ता । हञ्जे कञ्चणमाले । उज्जइणीदो आअदोत्ति अत्थि मे तस्सिं इन्दआलिए पक्खवादो ।

काञ्चनमाला । णादिकुलबहुमाणोक्खु एसो देवीए । ता एदु भट्टिणी ।

इति परिक्रामत ।

काञ्चनमाला । भट्टिणि । एसो भट्टा । ता उवसप्पदु देवी ।

वासवदत्ता । उपसृत्य । जअदु जअदु अज्जउत्तो ।

राजा । देवि । बहु तेन गर्जितम् । तदिहस्थावेवैनं पश्याव ।

वासवदत्तोपविशति ।

राजा । भद्र । प्रस्तूयतां बहुविधमिन्द्रजालम् ।

ऐन्द्रजालिक । जं देवो आणवेदि । इति बहुविधं नाट्यं कृत्वा पिच्छिकां भ्रामयन् ।

हरिहरबम्हप्पमुहे देवे दावेमि देवराअं च ।
गअणम्मि सिद्धविज्जाहरबहुसत्थं च णच्चन्तं ॥ ७३ ॥

सर्वे सविस्मयं पश्यन्ति ।

राजा । ऊर्ध्वं दृष्ट्वासनादवतरन् । आश्चर्यमाश्चर्यम् ।

विदूषक । अच्छरीअं अच्छरीअं ।

राजा । देवि । पश्य ।

एष ब्रह्मा सरोजे रजनिकरकलाशेखरः शंकरोऽयं
दोर्भिर्दैत्यान्तको ऽयं सधनुरसिगदाचक्रचिह्नैश्चतुर्भिः ।
एषो ऽप्यैरावतस्थस्त्रिदशपतिरमी देवि देवास्तथान्ये
नृत्यन्ति व्योम्नि चैताश्चलचरणरणन्नूपुरा दिव्यनार्यः ॥ ७४ ॥

वासवदत्ता । अच्छरीअं अच्छरीअं ।

विदूषक । आ दासीए पुत्त इन्दआलिअ । किं एदेहिं देवेहिं अच्छराहिं च दंसिदाहिं । जइ एदिणा परितुट्ठेण कज्जं ता साअरिअं दंसेहि ।

ततः प्रविशति वसुंधरा ।

वसुंधरा । जअदु जअदु भट्टा । अमच्चो जोअंधराअणो विण्णवेदि । एसोक्खु विक्कमबाहुणो पधाणो अमच्चो वसुभूदी कञ्चुइणा सह अणुप्पेसिदो । तं अरिहदि देवो इमस्सिं जेव्व सुन्दरमुहुत्ताए पेक्खिदुं । अहं पि कज्जसेसं समाविअ आअदो ज्जेव्वत्ति ।

वासवदत्ता । अज्जउत्त । चिट्ठदु दाव पेक्खणं । माउलकुलादो पधाणो अमच्चो वसुभूदी आअदो । तं दाव पेक्खदु अज्जउत्तो ।

राजा । यथाह देवी । ऐन्द्रजालिकं प्रति । भद्र । विश्रम्यतामिदानीम् ।

ऐन्द्रजालिकः । जं देवी आणवेदि । एक्को उण खेडणओ अवस्सं देवेण पेक्खिदव्वो ।

राजा । भद्र । एवम् । द्रक्ष्यामः ।

इति निष्क्रान्त ऐन्द्रजालिकः ।

वासवदत्ता । कञ्चणमाले । देहि से पारितोसिअं ।

काञ्चनमाला । जं देवी आणवेदि । इति निष्क्रान्ता ।

राजा । वसन्तक । प्रत्युद्गम्य प्रवेश्यतां वसुभूतिः ।

विदूषकः । जं भट्टा आणवेदि । इति निष्क्रान्तः ।

ततः प्रविशतो वसन्तकेन सह वसुभूतिबाभ्रव्यौ ।

वसुभूतिः । समन्तादवलोक्य । अहो वत्सेश्वरस्य भवनद्वारभासः । तथा हि ।

आक्षिप्तो जयकुञ्जरेण तुरगान्निर्वर्णयन्वल्लभा-
न्संगीतध्वनिना हृतः क्षितिभुजां गोष्ठीषु तिष्ठन्क्षणम् ।
मन्त्री विस्मृतसिंहलेन्द्रविभवः कक्षाप्रदेशेष्वहो
द्वाःस्थेनैव कुतूहलेन महता ग्राम्यो यथाहं कृतः ॥ ३५ ॥

बाभ्रव्यः । अद्य खलु चिरात्स्वामिनं द्रक्ष्यामीति यत्सत्यमानन्दातिशयेन किमप्यवस्थान्तरमनुभवामि । कुतः ।

विवृद्धिं कम्पस्य प्रथयतितरां साध्वसवशा-
दविस्पष्टां दृष्टिं तिरयतितरां बाष्पपटलैः ।
स्खलद्वर्णां वाणीं जडयतितरां गद्गदतया
जराया साहाय्यं मम हि परितोषोऽद्य कुरुते ॥ ३६ ॥

विदूषकः । अये भूला । एदु एदु अमच्चो ।

वसुभूतिः । विदूषकस्य कण्ठे रत्नमालां दृष्ट्वापवार्य । बाभ्रव्य । ज्ञायते । सैवेयं रत्नमाला या देवेन राजपुत्र्यै प्रस्थानकाले दत्तेति ।

बाभ्रव्यः । अमात्य । अस्ति सादृश्यम् । तत्किं वसन्तकादवगच्छामि प्रभवमस्याः ।

वसुभूतिः । बाभ्रव्य । मा मैवम् । महति राजकुले रत्नानां बाहुल्यान्न दुर्लभो भूषणानां संवादः ।

विदूषकः । राजानमुद्दिश्य । एसो क्खु महाराओ । ता उवसप्पदु अमच्चो ।

वसुभूतिः । उपसृत्य । विजयतां महाराजः ।

राजा । उत्थाय । आर्य । अभिवादये ।

वसुभूतिः । श्रेयोभूयाः ।

राजा । आसनमासनमार्याय ।

विदूषक । आसनमानीय । एदं आसणं । ता उवविसदु अमच्चो ।

वसुभूतिरुपविशति ।

विदूषक । अमच्च । एसा देवी वासवदत्ता पणामं करेदि ।

वसुभूति । आयुष्मति । वत्सराजसदृशं पुत्रमाप्नुहि ।

बाभ्रव्य । देव । बाभ्रव्य प्रणमति ।

राजा । पृष्ठे हस्तं दत्त्वा । बाभ्रव्य । इत आस्यताम् ।

बाभ्रव्य उपविशति ।

राजा । आर्य वसुभूते । अपि कुशलं तत्रभवतः सिंहलेश्वरस्य ।

वसुभूति । ऊर्ध्वमवलोक्य निःश्वस्य च । देव । न जाने । किं विज्ञापयामि मन्दभाग्य इति ।

वासवदत्ता । सविषादमात्मगतम् । हद्धी हद्धी । किं दाणिं वसुभूदी कधइस्सदि ।

राजा । वसुभूते । कथय । पर्याकुल इवासि ।

बाभ्रव्य । अपवार्य । अमात्य । चिरमपि स्थित्वा यत्कथनीयं तदिदानीमेव कथ्यताम् ।

वसुभूति । सास्रम् । न शक्यं निवेदयितुम् । तथापीदं कथयामि मन्दभाग्य । देव । यासौ सिंहलेश्वरेण स्वदुहिता रत्नावली नामायुष्मती वासवदत्तां दग्धामुपश्रुत्य देवाय पूर्वप्रार्थिता सती दत्ता ।

राजा । अपवार्य । देवि । किमिदमलीक लब्धातुलामात्य कथयति ।

वासवदत्ता । अज्जउत्त । अहं पि ण जाणामि । को एत्थ अलिअं मन्तेदित्ति ।

विदूषक । तदो ताए किं संवुत्तं ।

वसुभूति । सा च युष्मदन्तिकमानीयमाना यानभङ्गात्सागरे निमग्ना । इति रुदन्नधोमुखस्तिष्ठति ।

वासवदत्ता । सास्रम् । हा हदम्हि मन्दभाइणी । हा बहिणिए । कहिं सि । देहि मे पडिवअणं ।

राजा । देवि । समाश्वसिहि समाश्वसिहि । दुःखग्रहा गतिर्दैवस्य । वहनभङ्गपतितोत्थितौ मन्वेतावेव ते निदर्शनम् । इति वसुभूतिबाभ्रव्यौ दर्शयति ।

वासवदत्ता । अज्जउत्त । जुज्जदि एदं । कुदो उण मे एत्तिआइं भाअधेआइं ।

राजा । अपवार्य । बाभ्रव्य । कथय । किमेतत् ।

नेपथ्ये कलकलः ।

हर्म्याणां हेमशृङ्गश्रियमिव निचयैरर्चिषामादधानः
सान्द्रोद्यानद्रुमाग्रग्लपनपिशुनितात्यन्ततीव्राभितापः ।
कुर्वन्क्रीडामहीध्रं सजलजलधरश्यामलं धूमपातै-
रेष प्लोषार्तयोषिज्जन इह सहसैवोत्थितो ऽन्तःपुरे ऽग्निः ॥ १७ ॥

अपि च । देवीदाहप्रवादो ऽयं यो ऽभूल्लावणके पुरा ।
करिष्यन्निव तं सत्यं मन्ये ऽग्निरयमुत्थितः ॥ १८ ॥

राजा । ससंभ्रममुत्थाय । कथम् । अन्तःपुरे ऽग्निः । कष्टम् । देवी वासवदत्ता दग्धा । हा प्रिये वासवदत्ते ।

वासवदत्ता । परित्ताअदु परित्ताअदु अज्जउत्तो ।

राजा । कथम् । अतिसंभ्रमादिहस्थापि देवी नोपलक्षिता । देवि । समाश्वसिहि समाश्वसिहि ।

वासवदत्ता । अज्जउत्त । ण अत्तणो कारणेण एव्व भणामि । एसा खु मए णिग्घिणाए इध संजमिदा साअरिआ विवज्जदि । ता परित्ताअदु अज्जउत्तो ।

राजा । कथम् । सागरिका विपद्यते । देवि । एष गच्छामि ।

वसुभूतिः । देव । किमकारण एव पतंगवृत्तिः क्रियते ।

बाभ्रव्यः । देव । युक्तमाह वसुभूतिः ।

विदूषकः । राजानमुत्तरीये गृहीत्वा । भो । मा खु साहसं करेहि ।

राजा । उत्तरीयमाकर्षन् । धिङ्मूर्ख । सागरिका विपद्यते । किमद्यापि प्राणा धार्यन्ते । धूमाभिभवं नाटयन् ।

विरम विरम वह्ने मुञ्च धूमानुबन्धं
प्रकटयसि किमुच्चैरर्चिषां चक्रवालम् ।
विरहहुतभुजाहं यो न दग्धः प्रियायाः
प्रलयदहनभासा तस्य किं त्वं करोषि ॥ १९ ॥

वासवदत्ता । कध । मम दुक्खकारिणीए वच्छलादो एव्वं ववसिदं अज्जउत्तेण । ता अहं पि अणुगमिस्सं ।

विदूषकः । परिक्रामन्नग्रतो भूत्वा । अहं पि पधोवदेसओ होमि ।

वसुभूतिः । कथम् । प्रविष्ट एव ज्वलनं वत्सराजः । तन्ममापि दृष्टराजपुत्रीविपत्तेर्युक्तमात्मानमाहुतीकर्तुम् ।

बाभ्रव्यः । मा तावत् । हा महाराज । किमिदमकारण एव भरतकुलं संशयतुलामारोपितम् । अथ वा किं प्रलापेन । अहमपि भक्तिमदृशमाचरामि ।

इति सर्वे ऽग्निप्रवेशं नाटयन्ति । ततः प्रविशति निगडसंयता सागरिका ।

सागरिका । हद्धी हद्धी । श्रा । समन्तदो पज्जलिदो हुदवहो श्रज्ज दुक्खावसाणं मे करिस्सदि ।

राजा । श्रये । इयमासन्नहुतवहा सागरिका वर्तते । तत्त्वरितमेनां संभावयामि ।

सागरिका । राजानं दृष्ट्वात्मगतम् । कधं । श्रज्जउत्तो । ता एदं पेक्खिश्र पुणो मे जीविदासा संवुत्ता । प्रकाशम् । परित्ताश्रदु परित्ताश्रदु भट्टा ।

राजा । भीरु । श्रलं भयेन ।

मुहूर्तमपि सह्यतां वहल एष धूमोद्गमो
हहा धिगिदमंशुकं ज्वलति ते स्तनात्प्रच्युतम् ।
मुहुः स्खलसि किं कथं निगडसंयतासि द्रुतं
नयामि भवतीमितः प्रियतमे ऽवलम्बस्व माम् ॥ ८० ॥

कण्ठे गृहीत्वा निमीलिताक्षः स्पर्शं नाटयति । श्रहो । क्षणादपगतो मे संतापः । श्रयि । समाश्वसिहि समाश्वसिहि ।

व्यक्तं लग्नो ऽपि भवतीं न धक्ष्यति हुताशनः ।
यतः संतापमेवायं स्पर्शस्ते हरति प्रिये ॥ ८१ ॥

उन्मील्याक्षिणी दिशो ऽवलोक्य सागरिकां च मुक्त्वा । श्रहो महदाश्चर्यम् ।

क्वासौ गतो हुतवहस्तदवस्थमेत-
दन्तःपुरं

वासवदत्तां दृष्ट्वा । कथमवन्तिनृपात्मजेयम् ।

वासवदत्ता । राज्ञः शरीरं परामृश्य सहर्षम् । दिट्ठिश्रा । श्रक्खदसरीरो श्रज्जउत्तो ।

राजा । बाभ्रव्य एष

बाभ्रव्यः । देव । इदानीं प्रत्युज्जीवितो ऽस्मि ।

राजा । वसुभूतिरयं

वसुभूतिः । विजयतां महाराजः ।

राजा । वयस्य

विदूषकः । जश्रदु जश्रदु भवं ।

राजा । विचिन्त्य सवितर्कम् ।

स्वप्ने मतिभ्रमति किं न्विदमिन्द्रजालम् ॥ ८२ ॥

विदूषकः । भो । मा संदेहं करेहि । भणिदं खु तेण दासीए पुत्तएण इन्दजालिएण जधा । श्रवस्सं जेव्व देवेण एक्को मे खेडश्रो पेक्खिदव्वो त्ति । तं जेव्व एदं ।

राजा । देवि । त्वद्वचनादियमानीता सागरिका ।

वासवदत्ता । विहस्य । अज्जउत्त । जाणिदं मए ।

वसुभूतिः । सागरिकां निर्वर्ण्यापवार्य । बाभ्रव्य । सदृशीयं राजपुत्र्याः ।

बाभ्रव्यः । अमात्य । ममाप्येतदेवं मनसि वर्तते ।

वसुभूतिः । राजानमुद्दिश्य । देव । कुत इयं कन्यका ।

राजा । देवी जानाति ।

वसुभूतिः । देवि । कुतः पुनरियं कन्यका ।

वासवदत्ता । अमच्च । एसा क्खु साअरादो पाविदत्ति भणिअ अमच्चजोअंधराअणेण *मम हत्थे णिक्खित्ता* । अदो ज्जेव्व साअरिअत्ति सद्दावीअदि ।

राजा । स्वगतम् । यौगंधरायणेन न्यस्तेयम् । कथमसौ ममानिवेद्य किं चित्करिष्यति ।

वसुभूतिः । अपवार्य । बाभ्रव्य । यथा सुसदृशो वसन्तकस्य कण्ठे रत्नमाला अस्याश्च सागरात्प्राप्तिस्तथा व्यक्तमेवेयं सिंहलेश्वरस्य दुहिता रत्नावली । उपसृत्य प्रकाशम् । आयुष्मति रत्नावलि । त्वमेतावतीमवस्थां गतासि ।

सागरिका । दृष्ट्वा सास्रम् । कधं । अमच्चो वसुभूदी ।

वसुभूतिः । हा हतो ऽस्मि मन्दभाग्यः । इति भूमौ पतति ।

सागरिका । वसुभूतेरुपरि पतन्ती । हा ताद । हा अम्ब । कहिं सि । देहि मे पडिवअणं ।

वासवदत्ता । ससंभ्रमम् । अज्जकञ्चुइ । इअं सा मम बहिणिआ रअणावली ।

बाभ्रव्यः । देवि । इयमेव सा ।

वासवदत्ता । रत्नावलीमालिङ्ग्य । बहिणिए । समस्सस समस्सस ।

राजा । कथम् । उदात्तवंशप्रभवस्य सिंहलेश्वरस्य विक्रमबाहोरात्मजेयम् ।

विदूषकः । रत्नावलीं दृष्ट्वा स्वगतम् । पढमं ज्जेव्व मए भणिदं । ण क्खु ईदिसो सामण्णजणस्स परिच्छओ भोदित्ति ।

वासवदत्ता । सास्रं बाहू प्रसार्य । अइ एहि । इदाणिं पिअबहिणिए । बन्धुसिणेहं दंसेहि ।

वसुभूतिः । आयुष्मति । समाश्वसिहि समाश्वसिहि । नन्विय ते ज्यायसी भगिनी दुःखमास्ते । तत्परिष्वजस्वैनाम् ।

रत्नावली । समाश्वस्य राजानं तिर्यगवलोक्य स्वगतम् । किदावराहा क्खु अहं देवीए । ता ण सक्कणोमि मुहं दंसिदुं । इत्यधोमुखी तिष्ठति ।

वासवदत्ता । अपवार्य । अज्जउत्त । लज्जामि अहं इमिणा अत्तणो णिसंसत्तणेण । ता अवणेहि से बन्धणं ।

राजा । सपरितोषम् । यथाह देवी । इति सागरिकां मुञ्चति ।

वासवदत्ता । अज्जउत्त । अमच्चजोअधराअणेण एत्तिअं कालं दुज्जणीकिदम्हि जेण जाणन्तेण वि ण मे णिवेदिदं ।

ततः प्रविशति यौगधरायणः ।

यौगधरायणः ।

देव्या मद्वचनाद्यथाभ्युपगतः पत्युर्वियोगस्तथा
सा देवस्य कलत्रसंघटनया दुःखं मया स्थापिता ।
तस्याः प्रीतिमयं करिष्यति जगत्स्वामित्वलाभः प्रभोः
सत्यं दर्शयितुं तथापि वदनं शक्नोमि नो लज्जया ॥ ८३ ॥

अथ वा किं क्रियत ईदृशमत्यन्तमाननीयेष्वपि निरनुरोधवृत्ति स्वामिभक्तिव्रतम् । निरूप्य । अयं देवः । यावदुपसर्पामि । उपसृत्य । जयति जयति देवः । देव । क्षम्यतां यन्मयानिवेद्य कृतम् ।

राजा । यौगधरायण । किमनिवेद्य कृतम् ।

यौगधरायणः । करोत्वासनपरिग्रहं देवः । सर्वं विज्ञापयामि ।

सर्वे उपविशन्ति ।

यौगंधरायणः । देव । श्रूयताम् । येयं सिंहलेश्वरदुहिता सा सिद्धेनादिष्टा यथा । यो ऽस्याः पाणिग्रहणं करिष्यति स सार्वभौमो राजा भविष्यतीति । ततस्तत्प्रत्ययादस्माभिः स्वामिनो ऽर्थे बहुशः प्रार्थ्यमानेनापि सिंहलेश्वरेण देव्या वासवदत्तायाश्चित्तखेदं परिहरता यदा न दत्ता ।

राजा । तदा किम् ।

यौगधरायणः । तदा लावाणके देवी दग्धेति प्रसिद्धिमुत्पाद्य तदन्तिकं बाभ्रव्यः प्रहितः ।

राजा । यौगधरायण । अतः परं श्रुतमेव मया । अथेयं देवीहस्ते किमित्यनुचिन्त्य स्थापिता ।

विदूषकः । अणाचक्खिदं पि एदं जाणीअदि ज्जेव्व जधा । अन्तेउरगदा सुहेण दे दंसणपधं गमिस्सदित्ति ।

राजा । गृहीतो ऽभिप्रायस्ते वसन्तकेन ।

यौगंधरायणः । यथाज्ञापयति देवः ।

राजा । ऐन्द्रजालिकवृत्तान्तो ऽपि मन्ये त्वत्प्रयोग एव ।

यौगधरायणः । अन्यथान्तःपुरे बद्धाया अस्याः कुतो देवेन दर्शनम् । मद्दृष्टायाश्च वसुभूतिना कुतः परिज्ञानम् । विहस्य । परिज्ञातायाश्च भगिन्याः संप्रति यथा करणीयं तत्र देवी प्रमाणम् ।

वासवदत्ता । अज्जउत्त । फुड जेव्व किं ण भणासि जधा । पडिवादेहि मे रअणावलिं ति ।

विदूषकः । भोदि । सुट्ठु तए जाणिदो अमच्चस्स अहिप्पाओ ।

वासवदत्ता । एहि रअणावलि एहि । एत्तिअं पि दाव मम बहिणिआणुरूव भोदु । इति रत्नावलीं स्वकीयैराभरणैरलंकृत्य हस्ते गृहीत्वा राजानमुपसृत्य । अज्जउत्त । एदं रअणावलिं पडिच्छ ।

राजा । सहर्षं हस्तौ प्रसार्य । को देव्याः प्रसादं न बहु मन्यते ।

वासवदत्ता । अज्जउत्त । दूरेक्खु एदाए णादिकुलं । ता तधा करेसु जधा बन्धुजणं ण सुमरेदि । इति समर्पयति ।

राजा । यथाज्ञापयति देवी ।

विदूषकः । सहर्षं नृत्यति । ही ही भो । जअदु जअदु भवं । पुढवी खु दाणि हत्थगदा पिअवअस्सस्स ।

वसुभूतिः । देवि । स्थाने देवीशब्दमुद्वहसि ।

बाभ्रव्यः । इदानीं सफलपरिश्रमो ऽस्मि संवृत्तः ।

यौगन्धरायणः । देव । किं ते भूयः प्रियमुपकरोमि ।

राजा । किमतः परमपि प्रियमस्ति । यतः ।

नीतो विक्रमबाहुरात्मसमतां प्राप्तेयमुर्वीतले
सारं सागरिका ससागरमहीप्राप्त्येकहेतुः प्रिया ।
देवी प्रीतिमुपागता च भगिनीलाभाज्जिताः कोसलाः
किं नास्ति त्वयि सत्यमात्यवृषभे यस्मिन्करोमि स्पृहाम् ॥ ८४ ॥

तथापीदमस्तु भरतवाक्यम् ।

उर्वीमुद्दामसस्यां जनयतु विसृजन्वासवो वृष्टिमिष्टा-
मिष्टैस्त्रैविष्टपानां विदधतु विधिवत्प्रीणनं विप्रमुख्याः ।
आकल्पान्तं च भूयात्समुपचितसुखः संगमः सज्जनानां
निःशेषा यान्तु शान्तिं पिशुनजनगिरो दुर्जया वज्रलेपाः ॥ ८५ ॥

इति निष्क्रान्ताः सर्वे ।

इति चतुर्थो ऽङ्कः ।

---

# Alphabetisches Verzeichnis

## der in der Ratnāvalī vorkommenden Prākrit-Formen

mit beigefügter Sanskrit-Übersetzung*)

अ nach Vokalen = च — अअं = अयम्. — अआरण = अकारण — अआल = अकाल. — अइ = अयि. — अइरेण = अचिरेण. — अउसल = अकुशल. — अए = अये. — अंसुअ = अंशुक. — अकिदपुण्ण = अकृतपुण्य. — अक्खद = अक्षत. — अक्खर = अक्षर. — अग्गदो = अग्रतस्. — अग्गहत्थ = अग्रहस्त. — अङ्गीकरेदु = अङ्गीकरोतु. — अच्चाहिद = अत्याहित. — अच्चिद = अर्चित. — अच्चीअदि = अर्च्यते. — अच्चीअदु = अर्च्यताम्. — अच्छरा = अप्सरस्. — अच्छरीअं = आश्चर्यम्. — अच्छीहिं = अक्षिभ्याम्. — अज्ज = अद्य — अज्ज = आर्य. — अज्जउत्त = आर्यपुत्र. — अज्झवसिद = अध्यवसित. — अणङ्ग = अनङ्ग. — अणाचक्खिद (von चक्ष्) = अनाख्यात. — अणाध = अनाथ. — अणासादअन्त = अनासादयन्त्. — अणुअच्छन्त = अनुगच्छन्त्. — अणुगमिस्स = अनुगमिष्यामि. — अणुग्गह = अनुग्रह — अणुचिट्ठीअदु = अनुष्ठीयताम्. — अणुणइस्स = अनुनेष्यामि. — अणुणेदुं = अनुनेतुम्. — अणुप्पेसिद = अनुप्रेषित. — अणुबन्ध = अनुबन्ध. — अणुभवीअदि = अनुभूयते. — अणुभाव = अनुभाव. — अणुरत्त = अनुरक्त. — अणुराअ = अनुराग. — अणुरूव = अनुरूप — अणुसरदि = अनुसरति — अणुसरम्ह = अनुसराम, °व. — अणुहरन्ति = अनुहरन्ति — अण्ण = अन्य. — अण्णगद = अन्यगत — अण्णदो = अन्यतस्. — अण्णधा = अन्यथा. — अण्णसंकिद = अन्यशङ्कित *mißtrauisch* 343, 15 — अण्णधासम्भाविण् = अन्यथासम्भाविन dass 336, 3 — अण्णस्सिं = अन्यस्मिन्. — अण्णेसामि = अन्विष्यामि — अण्णेसिदुं = अन्वेष्टुम् — अत्तणो = आत्मनस् — अत्ताणअं = आत्मानम्. — अत्थगिरि = अस्तगिरि. — अत्थि = अस्ति — अदक्खिण = अदक्षिण. — अदिउज्जुअ = अति-ऋजु. — अदिकोवण = अतिकोपन. — अदिक्कन्त

*) Die Prosa ist durchgängig im Śaurasenī, die Verse im Māhārāṣṭrī-Dialekt. Letzterer Dialekt wird durch ein vorgesetztes * bezeichnet. Wörter, die ganz mit dem Sanskrit übereinstimmen, sind nicht aufgenommen.

= अतिक्रान्त — अदिक्कमसि = अतिक्रामसि — अदिक्कमिअ = अतिक्रम्य — अदिचिर = अतिचिरम् — अदिणिग्घिण = अतिनिर्घृण — अदिणिट्ठुर — अतिनिष्ठुर — अदिणिसस = अतिनृशंस — अदिदीहकोवणदा = अतिदीर्घकोपनता — अदिमेत्त = अतिमात्रम् — अदिवाहेम्ह = अतिवाहयाम, °व — अदिसइद = अतिशयित — अदिसज्झस = अतिसाध्वस — अदो = अतस् — अद्धरत्त = अर्धरात्र — अध — अथ — अधिअदर = अधिकतरम् — अन्तरिद = अन्तरित — अन्तेउर = अन्तपुर — अन्दोलिद = अन्दोलित — अन्धआर = अन्धकार — अपपिड्डद = अपपिड्डत — अपुव्व = अपूर्व — अप्पा = आत्मा — अप्पिअ = अप्रिय — अमच्च = अमात्य — अमोहदसण = अमोघदर्शन — अम्हाण = अस्माकम् — अम्हेहि = अस्माभिस् — अरण्णहदिद = अरण्यहदित — अरिहदि = अर्हति — अलङ्किद = अलंचित — अलकरेदु = अलकरोतु — अलिअ = अलीक — अवचिणिम्म = अवचेष्यामि — अवट्ठम्भ = अवष्टम्भ — अवणद = अवनत — अवणेहि = अपनय — अवत्यन्तर = अवस्थान्तर — अवत्था = अवस्था — अवधीरअन्त = अवधीरयन्त — अवधीरिअ = अवधीर्य — अवर = अपर — अवरद्ध = अपराद्ध — अवराह = अपराध — अवराहिण = अपराधिन् — अवलम्बिद — अवलम्बित — अवलोअअन्त = अवलोकयन्त — अवलोएदु = अवलोकयतु — अवसाण = अवसान — अवस्स = अवश्यम् — अवहिद — अवहित — अवि am Anfange eines Satzes = अपि vgl. unten पि und वि — अवेहि = अपेहि — *असमत्यअ = असमर्थ — असरण — अशरण — असहण = असहन — असामण = असामान्य — असोअ = अशोक — अस्सत्य = अस्वस्थ — अस्सत्थदा = अस्वस्थता — अहिजण — अभिजन — अहिणअ = अभिनय — अहिप्पाअ = अभिप्राय — अहिमद = अभिमत — अहिरमदि = अभिरमते — अहिलससि = अभिलषसि — अहिलास = अभिलाष — अहिसरिस्सदि = अभिसरिष्यति

आ = आस् — आअच्छदि = आगच्छति — आअच्छामि = आगच्छामि — आअच्छिअ = आगत्य — आअणेहि = आकणय — आअद = आगत — आआर = आकार und आदर — आआस = आकाश und आयास — आआसीअदि = आयास्यते — आआसेसि = आयासयसि — आखित्त = आक्षिप्त — आगमण = आगमन — आगमिस्सं = आगमिष्यामि — आचक्ख — आचष्ट — आणत्त = आज्ञप्त — *आणत्ति = आज्ञप्ति — आणवेदु = आज्ञापयतु — आणीद = आनीत — आदे-

सेहि = आदेशय — आपूरिद = आपूरित — आलविद = आलपित — आलविस्सदि = आलपिष्यति — आलवेदि = आलपति — आलवेसि = आलपसि — आलवेहि = आलप — आलाव = आलाप — आलिहन्त = आलिखन्त — आलिहिअ = आलिख्य — आलिहिद = आलिखित — आलिहीअदि = आलिख्यते — आलेक्ख = आलेख्य — आसण = आसन — आसण्ण = आसन्न — आसा = आशा — आसि = आसीत् — आहरण = आभरण — आहिजादी = आभिजाती

इअ = इयम् — इअम्हि = इयमस्मि — इत्थी = स्त्री — इदाणि am Anfange eines Satzes = इदानीम् vgl दाणिं — इदो = इतस् — इध = इह — इधट्ठिद = इहस्थित — इन्द = इन्द्र — *इन्दआलम्मि = इन्द्रजाले — इन्दआलिअ = ऐन्द्रजालिक — इमं = इमम् und इमाम् — इमस्स = अस्य — इमस्सिं = अस्मिन् — इमाइ = इमानि — इमाए = अनया — इमादो = अस्मात् und अस्यास् Abl — इमिणा = अनेन — इमेहिं = एभिस्

ईदिस = ईदृश

उक्कण्ठा = उत्कण्ठा — उग्गच्छदि = उद्गच्छति — उग्घाडिअ = उद्घाट्य — उग्घाडिद = उद्घाटित — उज्जइणी = उज्जयिनी — उज्जाण = उद्यान — उज्जुअ = ऋजु — उज्झिअ = उज्झित्वा — उज्झिद = उज्झित — उट्ठेहि = उत्तिष्ठ — उड्डीण = उड्डीन — उण enklit. *aber* = पुनर् vgl पुणो — उत्तम्म = उत्ताम्य — उत्तम्मन्त = उत्ताम्यन्त — उदअण = उदयन — उदिद = उदित (von इ) — उद्दिसिअ = उद्दिश्य — उद्ध = ऊर्ध्वम् — उप्पादइस्सदि = उत्पादयिष्यति — उप्फुल्ल = उत्फुल्ल — उब्बन्धिअ = उद्बध्य — उब्भिण्ण = उद्भिन्न — उवअरण = उपकरण — उवट्ठिद = उपस्थित — उवणेहि = उपनय — उवरद = उपरत — उवरि = उपरि — उवलद्ध = उपलब्ध — उवविट्ठ = उपविष्ट — उववीस — उपविश — उवविसदु = उपविशतु — उवविसिअ — उपविश्य — उवसप्पदु = उपसर्पतु — उवसप्पामि = उपसर्पामि — उवसप्पिस्सं = उपसर्प्स्यामि — उवहसन्त = उपहसन्त — उवहसिद = उपहसित — उवाअ = उपाय — उवालहिस्सं = उपालप्स्ये — उवेक्खिदु — उपेक्षितुम् — उव्वह = उद्वह — उव्वहन्त = उद्वहन्त — उव्वेल्लिद = उद्वेल्लित

एक्क = एक — एत्तिअ = इयन्त — एत्थ = अत्र — एद = एतम् एताम् und एतद् — एदस्स = एतस्य — एदस्सिं = एतस्मिन् — एदाए

= एतया एतस्यास् und एतस्याम् — एदाणं = एतेषाम्, एतासाम् — एदिणा = एतेन — एदु = ऐतु — एदे = एते — एदेहि = एतैम् — एव्व = एवम् — एसा = एषा

कअली = कदली — कअलीहर und °अ = कदलीगृह — *कङ्खिअ = काङ्क्षित — कज्ज = कार्य — कञ्चणमाला = काञ्चनमाला — कञ्चुइण् = कञ्चुकिन् — कडअ = कटक — कडु = कटु — कडुइद = कटुकित — कण्ण = कर्ण — कण्णआ = कन्यका — कण्णाहरण und °अ = कर्णाभरण — कद = कृत — कदुअ = कृत्वा — कदे = कृते — कधइस्सदि = कथयिष्यति — कध = कथम् — कधा = कथा — कधिद = कथित — कधेहि = कथय — कमलाअर = कमलाकर — कमलिणी = कमलिनी — करन्त = कुर्वन्त — करिसिद = कर्षित — करिस्सं = करिष्यामि — करिस्सदि = करिष्यति — करिस्ससि = करिष्यसि — करीअन्ति = क्रियन्ते — करेदु = करोतु — करेमि = करोमि — करेम्ह = करवाम, °वाव — करेसि = करोषि — करेसु und करेहि = कुरु — कवोल = कपोल — कसण = कृष्ण — कस्स = कस्य — कहिं = कस्मिन् und कुत्र — काणण = कानन — कादर = कातर — कामिणी = कामिनी — कारिण् = कारिन् — किदत्थ = कृतार्थ — किदावराह = कृतापराध — किलिस्सन्त = क्लिश्यन्त — कीदिस = कीदृश — कीलम्ह = क्रीडाम, °व — कीलिद = क्रीडित — कीस *warum?* (Hem III 68) — कुडिल = कुटिल — *कुणइ = करोति — कुदो = कुतम् — कुप्प = कुप्य — कुप्पदि, °सि = कुप्यति, °सि — कुरुकुराअदि = कुरुकुरायते — कुविद = कुपित — कुसल = कुशल — कुसुमचाव = कुसुमचाप — कुसुमाउह = कुसुमायुध — कुसुमिद = कुसुमित — केत्तिअदूर = कियद्दूर 332 7 345 16 — को = कस् — कोइलालाव = कोकिलालाप — कोदूहल = कौतूहल — कोव = कोप — कोसम्बिआ = कौशाम्बिका — कोसम्बी = कौशाम्बी — क्खु enklitisch nach kurzen Vokalen und e und o (die davor gekürzt werden) = खलु vgl खु

खण = क्षण — खमीअदु = क्षम्यताम् — खाम = क्षाम — खु nach langen Vokalen und Anusvara = खलु vgl क्खु — खेडणअ = खेलनक — खेम = क्षेम

*गअणम्मि = गगने — गच्छदि, °दु = गच्छति, °तु — गच्छम्ह = गच्छाम, °व — गद = गत — गदुअ = गत्वा — गब्भदासी = गर्भदासी — गमिस्सं = गमिष्यामि — गमिस्सदि = गमिष्यति — गहिअ =

गुरु — गव्व = गर्व — गहिद = गृहीत — गहिदक्खर = गृहीताक्षर — गुम्मन्तरिद = गुल्मान्तरित — *गुरुणो = गुरोस् — गेण्ह = गृहाण — गेण्हदु = गृह्णातु — गेण्हामि = गृह्णामि — गेण्हिअ = गृहीत्वा — गेण्हिदु = ग्रहीतुम् — गेण्हिस्स = ग्रहीष्यामि — गोअर = गोचर

घण = घन — घुणक्खर = घुणाक्षर

च nach Anusvara vgl अ — चच्चरी = चर्चरी — चदुब्वेदिण = चतुर्वेदिन् — चन्द = चन्द्र — *चलणे = चरणानि — चिट्ठ = तिष्ठ — चिट्ठदि = तिष्ठति — चिट्ठदु = तिष्ठतु — चिट्ठम्ह = तिष्ठाम, °व — चिट्ठसि = तिष्ठसि — चित्त = चित्र — चित्तफलअ = चित्रफलक — चित्तसाला = चित्रशाला — चित्तसालिआ = चित्रशालिका — चिन्तेहि = चिन्तय — चिरअसि = चिरयसि — चिर = चिरम् — चूदलदिआ = चूतलतिका

छादिद = छादित

जअदु = जयतु — जइ = यदि — ज = यम्, याम् यद् — जण = जन — जणिद = जनित — जधा = यथा — जधासमीहिद = यथासमीहित — *जम्पिअ = जल्पित — जम्मदो = जन्मतस् — *जलण = ज्वलन — *जस = यशस् — जस्स = यस्य — जहिं = यत्र — जाए = यया, यस्यास् und यस्याम् — जाणन्त = जानन्त — जाणामि = जानामि — जाणासि = जानासि — जाणिअ = ज्ञात्वा — जाणिद = ज्ञात — जाणिदु = ज्ञातुम् — जाणिस्स = ज्ञास्यामि — जाणिस्सदि = ज्ञास्यति — जाणिस्ससि = ज्ञास्यसि — जाणीअदि = ज्ञायते — जाद = जात — जादिसा = यादृश — जामादुणा = जामात्रा — जाव = यावत् — जिद = जित — जीवामो = जीवामस् — जीविद = जीवित — जीविदादो = जीवितात् — जीविदासा = जीविताशा — जुअल = युगल — जुज्जदि = युज्यते — जुत्त = युक्त — जुवई = जुवती — जेण = येन — जेव्व nach langen Vok u Anusvara = एव, vgl ज्जेव्व — जो = यस् — जोअधराअण = यौगंधरायण — ज्जेव्व enklit nach kurzen Vokalen und e und o (die davor gekurzt werden) = एव vgl जेव्व

झकार

°ट्ठिद = स्थित.

ण = न — ण = एनम्, एनाम् — ण = ननु — णच्चन्त = नृत्यन्त — णच्चसि = नृत्यसि — णच्चिदव्व = नर्तितव्य — णच्चिद = नर्तित — णत्थि = नास्ति — णम = नमस् — णलिणीवत्त = नलिनीपत्त्र —

मणोहर = मनोहर — मण्डव = मण्डप — मण्डिद = मण्डित — मण्णन्ति = मन्यन्ते — मद्दल = मर्दल — मन्तइस्सदि = मन्त्रयिष्यते — मन्तप्पहाव = मन्त्रप्रभाव — मन्तिअ = मन्त्रयित्वा — मन्तिद = मन्त्रित — मन्तिदु = मन्त्रयितुम् — मन्तीअदि = मन्त्र्यते — मन्तेदि = मन्त्रयते — मन्तेसि = मन्त्रयसे — मन्तेहि = मन्त्रयस्व — मन्दभाइणी = मन्दभागिनी — मरिदु = मर्तुम् — मलअ = मलय — मसिण = मसृण — महदी = महती — *महसि = वाञ्छसि 361, 23. — महाणुभाव = महानुभाव — महाराअ = महाराज — महाहिजण = महाभिजन — *महिहर = महीधर — महिस = महिष — मडु = मधु — मडुअर = मधुकर — मडुमास = मधुमास — मडुर = मधुर — मडुरदर = मधुरतर — महूसव = महोत्सव — *माआ = माया — माउल = मातुल — माणइस्सं = मानयिष्यामि — *माणग्गहणअ = मानग्रहण — माणुसलोअ = मानुषलोक — मारुदन्दोलिद = मारुतान्दोलित — मारुदुव्वेल्लिद = मारुतोद्वेल्लित — माहवीलदा = माधवीलता — मिअङ्क = मृगाङ्क — मिअलञ्छण = मृगलाञ्छन — मिलिद = मिलित — मिस = मिष — मुक्क = मुक्त — मुणाल = मृणाल — मुणालिआ = मृणालिका — मुह = मुख — मुहर = मुखर — मुहुत्तअ = मुहूर्त — मूढदा = मूढता — °मेत्त = °मात्र — मेधाविण = मेधाविन् — मेधाविततण = मेधावित्व — *मेलअ = मेलक — मोआविअ = मोचयित्वा — मोदअ = मोदक — मोहिद = मोहित — °म्हि = अस्मि (aus lautende Vokale davor verkurzt)

रअण = रत्न — रअणमाला = रत्नमाला — रअणावली = रत्नावली — रक्खिदु = रक्षितुम् — रक्खीअदि = रक्ष्यते — रच्छामुह = रथ्यामुख — रज्ज = राज्य — रत्तासोअ = रक्ताशोक — रदि = रति — रस्सि = रश्मि — रहस्स = रहस्य — राअउल = राजकुल — राअहंसी = राजहंसी — राआ = राधा — राइ = रात्रि — रिच n = ऋच् 340, 10 — रुट्ठ = रुष्ट — रुदिद = रुदित — रुमण्णदो = रुमण्वतस् — रूव = रूप — रोदिदु = रोदितुम् — रोदीअदि = रुद्यते

लक्खिद = लक्षित — लक्खीअदि = लक्ष्यते — लज्ज = लज्जस्व — लज्जसि = लज्जसे — लज्जामि = लज्जे — लज्जालुअ = लज्जालु — लदा = लता — *लद्धणाम = लब्धनामन् — लद्धप्पसअदा = लब्धप्रत्ययता — *लद्धप्पसर = लब्धप्रसर — लम्मह = मम्मट — लहु adv

# Anmerkungen.

## I. Ṛgveda.

### A. Allgemeines.

Der Veda ist uns in verschiedenen Formen überliefert worden. Für uns von Bedeutung sind deren zwei: die Saṁhitā- und die Pada-Lesung (पाठ) oder, wie wir sagen würden, Schreibweise. Die mitgeteilten Hymnen sind in der ersteren abgedruckt, nach den Ausgaben von Max Müller. Bei der Saṁhitā-Lesung sind die sogenannten Wohllautsgesetze beobachtet, bei der Pada-Lesung tritt jedes Wort oder, genauer gesprochen, jedes Pada*) in seinem für ursprünglich gehaltenen Gewande auf. Ein Kompositum wird in der Regel in zwei durch ऽ geschiedene Teile zerlegt. Ein wiederholtes Wort und इव werden mit dem vorangehenden Worte als Komposita aufgefaßt, weil sie unbetont sind. Der Padapāṭha schreibt demnach दिवेऽदिवे und पिताऽइव.

Jeder Veda hat sein Prātiśākhya, dessen Hauptaufgabe darin besteht, in den verschiedenen Pāṭha die äußere Form der Wörter entweder für sich oder in Verbindung mit den vorangehenden und folgenden festzustellen. Das Prātiśākhya des Ṛgveda bespricht überdies die Metra. Dieses setzt den Padapāṭha als bekannt voraus und gibt genaue Vorschriften, wie aus diesem der Saṁhitā- und Krama-pāṭha zu bilden seien. Der überlieferte Saṁhitāpāṭha stimmt im großen und ganzen mit den im Prātiśākhya gelehrten Wohllautsgesetzen und Verlängerungen überein, verstößt aber auf Schritt und

---

*) Pada heißt nicht nur ein fertiges Wort, sondern auch das Thema im Kompositum und vor denjenigen konsonantisch anlautenden Suffixen, die auf den konsonantischen Auslaut desselben ebenso einwirken wie im Satze der Anlaut eines nachfolgenden auf den Auslaut eines vorangehenden Wortes. Ein solches Suffix ist z. B. die Kasusendung भिस्, weil es मनोभिस् heißt wie मनो मदन्.

Tritt gegen das Metrum Dieser Umstand ist dem **Prātiśākhya** nicht entgangen, da dieses später, wo es auf die Metra zu sprechen kommt, fur die Rezitation mehrere von den fruher gegebenen Wohllauts gesetzen wieder aufhebt

Die für den **Samhitapaṭha** im **Pratisakhya** aufgestellten Wohllautsgesetze fallen mit den fur die spätere Sprache geltenden nicht ganz zusammen Es scheint, als wenn im **Samhitapātha** an keiner Form des Hiatus, die im späteren **Sanskrit**, sei es auch nur ausnahmsweise, erscheint Anstoß genommen werde so daß man sie ohne Bedenken auch auf weiterem Gebiete zulasse Ein Hiatus dagegen, der in der spateren Sprache durchaus unerhört ist, wird auch hier nicht geduldet So wird z B jedes इ und उ vor einem ungleichen Vokal in य und व् umgewandelt, obgleich das Metrum fast ausnahmslos in solchem Falle Zweisilbigkeit verlangt Der Hiatus ए-अ und ओ-अ da gegen, der in der spateren Sprache nur hie und da zugelassen wird, ist im **Samhitapaṭha** uberaus haufig Jedoch muß auch hier bisweilen das elidierte अ wieder hergestellt und umgekehrt das stehen gebliebene elidiert werden, was das **Prātiśākhya** ubersehen hat Sehr auffallend ist es, daß der Hiatus अ(आ wird verkurzt)-ऋ, den die spätere Sprache nur selten aufweist*), im **Samhitapāṭha** nie entfernt wird, obgleich das Metrum fast uberall die Zusammenziehung in eine Silbe verlangt So lesen z B die Handschriften 2, 12, 9, *a* und 4, 33, 11, *b* न ऋते, 9 *d* इन्द्रस्य ऋभुक्षा, 10, *d* धत्त ऋभव Sollte diese Erscheinung etwa auf die Undeutlichkeit der Regeln 136 und 839 (letztere fehlt in einigen Handschriften und paßt auch in der Tat nicht in den Zusammen hang) im **Prātisakhya** zuruckzuführen sein?

Die Handschriften des **Padapāṭha** teilen weder die Stollen noch die Strophen ab, nur das Ende eines **Varga** wird mit Zahlen be zeichnet Der **Saṃhitapāṭha** trennt in vierstolligen Strophen den *ersten Stollen nicht vom zweiten und den dritten nicht vom vierten* Bei dreistolligen Strophen bleiben der erste und zweite Stollen un getrennt Die im epischen **Śloka** bestehende metrische Verschiedenheit zwischen dem ersten und zweiten (wie zwischen dem dritten und vierten) Stollen ist dem **Ṛgveda** vollkommen unbekannt die Stellung des

*) Im **Śatapathabrāhmaṇa** werden अ (आ) + ऋ in der Regel kontrahiert doch findet man z B 13 1, 2 3 auch यथ ऋषभस्य geschrieben Die Vernach lässigung dieses **Sandhi** in der Prosa findet sich auch in guten Handschriften des **Mahābhārata**.

Stollens hat hier zum Metrum keinerlei Beziehung. Während im epischen Śloka wie in anderen späteren Strophen nicht selten die letzte Silbe des ersten Stollens mit der ersten Silbe des zweiten in eine zusammenfließt, geschieht dieses im Ṛgveda niemals. Dessenungeachtet gebietet das Prātiśākhya und zeigen die Handschriften des Saṃhitāpāṭha auf Kosten des Metrums gerade an dieser Stelle eine strengere Beobachtung des Sandhi als selbst innerhalb eines und desselben Stollens. Ja es werden sogar für diese Berührungsstelle der Stollen besondere Wohllautsgesetze aufgestellt. Und dennoch weiß dasselbe Prātiśākhya gerade so gut wie wir, daß das Metrum nur durch eine vollkommene Trennung der Stollen zu seinem Rechte kommt. Auch darf hierbei nicht unerwähnt bleiben, daß sowohl im Pada als auch im Saṃhitāpāṭha der Beginn eines neuen Stollens sofort kenntlich wird, sobald dieser mit einem Vokativ oder einem Verbum finitum ohne Präposition beginnt, da diese hier ihren ursprünglichen Ton bewahren. Daß ein Stollen wirklich mit einem tonlosen Worte beginnen könne, müssen wir auf das Entschiedenste in Abrede stellen. Derartige im Prātiśākhya (Regel 978 ff.) verzeichnete Stollen werden ohne allen Zweifel schlecht überliefert sein.

Es unterliegt also nach den bisher hervorgehobenen Erscheinungen keinem Zweifel, daß der uns überlieferte Saṃhitāpāṭha nicht den ursprünglichen Text, wie ihn die alten Sänger des Veda hersagten, darstellt. Wie haben wir uns aber diesen überlieferten Text zu erklären und wie verhält er sich zum Padapāṭha? Nach reiflicher Erwägung aller oben erwähnten Umstände kommt man auf die Vermutung, daß der Padapāṭha als erster Versuch einer Exegese des mehr oder weniger unverständlich gewordenen ältesten Textes zuerst niedergeschrieben, der Saṃhitāpāṭha aber nach den Vorschriften des ersten, die metrischen Verhältnisse (die Verlängerungen) wohl berücksichtigenden, aber nicht weiter erörternden Teils des Prātiśākhya aus jenem Padapāṭha mechanisch umgeschrieben worden sei. Das Prātiśākhya wiederum hat es wohl nicht gewagt, dem Auge des Lesers einen Text vorzuführen, der den damals geltenden Gesetzen des Sandhi schnurstracks entgegen lief, dem Ohre des Hörers aber wurde es im zweiten Teile (der übrigens auch späteren Ursprungs sein kann) gerecht, in dem die Metra besprochen werden. Auf diese Weise erklärt es sich auch, daß die metrischen Verlängerungen schon im ersten Teile, wo vom Metrum noch gar nicht die Rede ist, gelehrt werden: diese konnten das Auge nicht verletzen.

Über die Tonbezeichnung ist folgendes zu bemerken Statt des wahren Wortakzentes, des Udātta, haben die überlieferten Texte zwei andere Akzente, den Anudātta und den Svarita*) Der Udātta bleibt ganz unbezeichnet, statt dessen erhält eine vorangehende unbetonte Silbe den Anudatta, eine nachfolgende unbetonte den Svarita Wenn eine Silbe sowohl auf den Svarita (wegen der vorangehenden betonten Silbe) als auch auf den Anudātta (wegen der folgenden betonten Silbe) Ansprüche hat, dann verdrängt dieser jenen Am Anfange eines getrennt geschriebenen Stollens im Saṃhitapaṭha und am Anfange jedes Wortes im Padapāṭha wird jede Silbe bis zur betonten exkl mit dem Anudātta versehen Die tonlosen Wörter erhalten im Padapāṭha unter jeder Silbe den Anudātta Wenn ein betontes इ und उ vor einem unbetonten ungleichen Vokal nach den späteren Gesetzen des Sandhi in ihre entsprechenden Halbvokale verwandelt werden, kommen Anudātta und Svarita nebeneinander zu stehen Nur ganz ausnahmsweise verbietet das Metrum einen solchen Halbvokal wieder aufzulösen In solchen Fällen kann die Richtigkeit der Lesart beanstandet werden, oder aber es ist anzunehmen, daß die Hymne oder die Strophe einer späteren Zeit angehört

Die in den Handschriften angewandten Tonzeichen lassen nie einen Zweifel über die wirkliche Betonung eines Wortes aufkommen und haben außerdem eine praktische Bedeutung Indem man die einer betonten Silbe vorangehende und nachfolgende unbetonte Silbe besonders bezeichnete, wollte man damit zu erkennen geben, daß man, um den Udātta richtig auszusprechen, schon die vorangehende Silbe allmählich heben und die nachfolgende allmählich wieder senken müsse Unwillkürlich fällt uns hierbei das im Spanischen an den Anfang und das Ende eines Fragesatzes gestellte Fragezeichen ein

Über das Metrum sei hier nur folgendes gesagt ein achtsilbiger Stollen geht in der Regel auf ⏑–⏑⏓ aus, ein elf und zwölfsilbiger auf –⏑–⏑⏓, *vocalis ante vocalem brevis est* Manche Stollen haben nur

*) Bühler hat indessen in Kaschmir eine Rigveda Handschrift entdeckt, in der nur der eigentliche Wortakzent und zwar durch den Svarita bezeichnet wird (Detailed Report p 33) Auch in der Maitrāyaṇī Saṃhitā und in dem Kāṭhaka in denen daneben aber noch andere Akzentzeichen gebraucht sind, wird der Udātta durch den senkrechten Strich über der Linie bezeichnet, so wie sonst der Svarita. Vgl L v Schroeders Ausgaben dieser beiden Yajus Texte (M S I Einl p XXX ff., K I Einl. p XI).

die *erforderliche Silbenzahl*, wieder andere *nicht* einmal diese Über das Weitere s besonders H **Oldenberg**, Die Hymnen des Rigveda, Bd. I. Metrische und textgeschichtliche *Prolegomena*, *Berlin* 1888

Alle mitgeteilten Hymnen sind von **Karl Geldner** und **Adolf Kaegi***) übersetzt worden

---

## B Zu den einzelnen Hymnen

1, ५, *a* नयथ Padap

2, १, *c* सत्स Padap — १०, *a* Roth vermutet des Versmaßes wegen मियामसि.

3, ४, *c.* यदा । इत् *Padap* — ६, *b* पिपृत *Padap*

5, ३, *a* Roth vermutet शूपिश्रम्, wodurch eine Silbe gewonnen würde

7, ३, *b* Geldner und Kaegi vermuten दिप्सतो — ६, *c d.* वोचत und यच्छत Padap — ८, *a.* Warum nicht धारयंस्त्रीँरुत? — १३, *c* नकिः । त । Padap — १४, *b* चक्षम Padap — *d.* Warum nicht नभस्तमिस्रा.?

8, १, २, १२ lassen Geldner und Kaegi *den Dichter* sprechen — २, *b* रथ्याऽइव Padap — ९, *a c.* सु Padap — *c* भवत Padap — १०, *a* गृणवाम Padap

9, २, *d* Das अ von अश्वो° ist zu elidieren

10, १, *a* Hier und २, *b* ist des Metrums halber इन्द्र dreisilbig, mit einem vokalischen Minimum zwischen d und r, zu lesen; ebenso वज्रिनश्च st. वज्रिन्नच Diese Verdoppelung des न ist auch Ramāy ed Bomb 7, 36, 44, *d* des Metrums wegen unterblieben अन्य महदारयन-प्रमेयः Der Kommentar sagt धारयनप्रमेय इति नुडभाव आर्षं — ४, *b* वार्ण = वार् न, वार् ist zweisilbig zu sprechen. — १०, *d* नर्या । अवि° Padap — ११, *a.* नु । सुतः । इन्द्र । नु । गृणान. Padap Graßmann (Wörterbuch, S 746, III) löst das erste नू in नु उ, das zweite in नू ऊ auf. Benfey (Die Quantitätsverschiedenheiten in den Samhitā- und Pada Texten, zweite Abh. 30) möchte lieber नू उ इत इन्दर नू गृ° lesen

---

*) Siebenzig Lieder des Rigveda übersetzt von K. G und A K Mit Beiträgen von R. Roth Tübingen 1875

11, ३, *a* चन । इत् । अना Padap — ९, *b* Die Endsilbe ist zweisilbig zu sprechen — १२, *c* स्थाः Padap — २०, *a* Die Endsilbe ist zweisilbig zu sprechen — २२, *a* घ । इत् । उत । असि Padap — २३, *c*. मकिः । तत् । आ Padap

12, १, *a* Lies मर्भुभ्यो, ebenso mit Zusammenziehung von °a ṛ° zu °ar° ५, *d*, ९, *d*, १०, *d*, ११, *b* — ४, *b* माः Padap — ५, *b* Die Schreibart कनीयान्त्रीन् st कनीयांस्त्रीन् läßt sich hier rechtfertigen, da nach कनीयान् beim Vortrage eine Pause anzunehmen ist — ५, *d* त्वष्टा । चमसः Padap — ७, *d* धन्व । आ । अतिष्ठन् Padap

14, १, *a* Die Endsilbe ist zweisilbig zu sprechen

15, १, *a* अर्च Padap — ७, *d* चक्रम Padap

16, ५, *d* Hillebrandt, Vedachrestomathie S 76 s v *vī* schlägt vor, *viyánti* zu lesen, 3 pl pr von *vi* + *abhi* c acc „zustreben"

17, ५, *d* भूम Padap — ७, *c* स्थ Padap — ९, *ab* अद । आ Padap

19, १, *a* ब्रह्म Padap

20, १, *b* चित्रऽइषवे Padap und so zu lesen — Lies स्वधावने viersilbig — *d* भरत Padap — २, *d* und ४, *a* lies रुद्र dreisilbig mit einem vokalischen Minimum zwischen d und r

21, २, *c*, ३, *c* Das Metrum erfordert die Aussprache पवाकास्, wie überall am Ende eines Stollens

22, १, *b* भव Padap

23, ४, *c* भूम Padap

24, १, *a* वरुणा Padap — ३, *d* Das Metrum verlangt die Elision des अ in अनिमिष — ४, *a* शास Padap — ५, *a* असूरा । विश्वा Padap, Graßmann und die Übersetzer der 70 Lieder असूरा. । विश्वा, Geldner, jetzt (Vedische Studien III 130 ff) anders — ७, *a* देवा Padap

25, ३, *c* Delbrück vermutet जारमिव.

26, ३, *d* हुवनऽश्रुता । आ । गर्ते Padap — Ob wirklich ein आ anzunehmen und nicht eher हवनश्रुता ohne Udatta zu akzentuieren sei, läßt sich nicht mit Sicherheit entscheiden — ५, *b* अर्यस् gen sing von अरि.

27, २, *c* Die Endsilbe ist zweisilbig zu sprechen — ३, *b* जुहोत Padap

